स्वरप्रक्रियाः कथिताः, तस्य सर्वस्य मूलम् अभ्यासाभावात् स्वररूपापरिज्ञानमेव स्यात् । ते हि लक्षणग्रन्थतः कथञ्चित् स्वरस्वरूपमभ्यूहन्ते । नास्माकमिव वैदिकसम्प्रदायसिद्धोच्चारणश्रवणाहितः संस्कारः तेषाम् इति आस्तामेतत् ॥

उदात्ताद्यवान्तरभेदाः

एषां त्रयाणां पूर्वोत्तरसन्धानवशाज्जायमाना विशेषा अवान्तरस्वरपदवाच्या भवन्ति । संस्कृते एकस्मिन् पदे एक एवोदात्तः स्वरितो वा । अन्येऽचोऽनुदात्ताः । तथा च सूत्रम् 'अनुदात्तं पदमेकवर्जम्' इति[63] । तथा चानेकाक्षु पदेषु बहवः अनुदात्ताः, तदनन्तरमुदात्तः स्वरितो वा स्वरः यत्र भवति तत्र अन्तिमवर्जं सर्वेऽनुदात्ताः एकरूपेण उच्चार्यन्ते । अन्तिमस्तु अनन्तरस्वरस्य उदात्तस्वरितयोरन्यतरस्य प्रयोक्तृपुरुषबुद्ध्युपारूढतया तदनुकूलयत्नस्य तदैवोपक्रमात् दृढः दृढतरो वा भवति । यथा गच्छतः पुरुषस्य उल्लङ्घने चिकीर्षिते तत्पूर्वः पदन्यासः पूर्वापेक्षया दृढो भवति तद्वत् । सोऽयमनुदात्ततरः इत्युच्यते । तथा च सूत्रम् 'उदात्तस्वरितपरस्य सन्नतरः'[64] इति । तैत्तिरीयप्रातिशाख्ये तु 'स्वरितयोर्मध्ये यत्र नीचं स्यादुदात्तयोर्वा अन्यतरतो वा उदात्तस्वरितयोः स विक्रमः' इति[65] विक्रमसंज्ञा अस्य विहिता । अयं दशविधः इति स्वरसिद्धान्तचन्द्रिका[66] । एवमुदात्तादि[illegible]द्विलक्षणः उदात्ततरः 'उच्चैस्तरां वा वषट्कारः'[67] इति सूत्रविहितः ।

स्वरितो द्विविधः, नित्यः अनित्यश्चेति । संहितानिरपेक्षम् 'तित्स्वरितः'[68] इति सूत्रेण विहितः नित्यः । सूत्रान्तरैर्विहितः अनित्यः । कौस्तुभे तु[69] प्राकृतोऽप्राकृतश्चेति द्वौ भेदावुक्तौ । तत्र 'उदात्तादनु-

63. पा. VI. 1. 158.
64. पा. I. 2. 40.
65. तै. प्रा. XIX. 1. p. 455.
66. p. 51.
67. पा. I. 2. 35.
68. पा. VI. 1. 185.
69. Benares Edn. p. 397.

दात्तस्य स्वरितः’ इति सूत्रविहितः ‘नोदात्तस्वरितोदयम्’[70] इति निषेधविषयः प्राकृतः, अन्यः अप्राकृत इति विवेकः । प्रातिशाख्ये तु संज्ञाभेदपुरस्सरं सप्तधा अष्टधा च तद्भेद उक्तः ॥

| तै. प्रा.[71] | का. प्रा.[72] |
|---|---|
| 1 इवर्णोकारयोर्यवकारभावे क्षैप्र उदात्तयोः । | 1 एकपदे नीचपूर्वस्सयवो जात्यः । |
| 2 सयकारवकारं त्वक्षरं यत्र स्वर्यते स्थिते पदेऽनुदात्तपूर्वेऽपूर्वे वा नित्य इत्येव जानीयात् । | 2 एदोद्भ्यामकारो लुगभिनिहितः । |
| 3 अपि चेन्नानापदस्थमुदात्तमथ चेत्सांहितेन स्वर्यते स प्रातिहतः | 3 युवर्णौ यवौ क्षैप्रः । |
| 4 तस्मादकारलोपेऽभिनिहतः । | 4 इवर्ण उभयतोह्रस्वः प्रश्लिष्टः |
| 5 ऊभावे प्रश्लिष्टः | 5 स्वरो व्यञ्जनयुतस्तैरोव्यञ्जनः |
| 6 पदविवृत्त्यां पादवृत्तः | 6 उदवग्रहस्तैरोविरामः । |
| 7 उदात्तपूर्वस्तैरोव्यञ्जनः | 7 विवृत्तिलक्षणः पादवृत्तः । |
| | 8 उदाद्यन्तो न्यवग्रहस्ताथाभाव्यः । |

ऋ. प्रा.[73]

वैवृत्ततैरोव्यञ्जनौ क्षैप्राभिनिहतौ च तान् ।
प्रश्लिष्टं च यथासन्धि स्वरानाचक्षते पृथक् ॥

शिक्षायामपि[74]—

1 व्यञ्जनौ तु यवौ यत्र प्रयुज्येते ततः परम् ।
अपूर्वो नीचपूर्वो वा जात्यः स्वारः स उच्यते ॥

70. पा. VIII. 4. 67.
71. XX. 1—7. Mysore Edn., pp. 461-7.
72. I. 111, 113-20 Benares Edn., pp. 37-41.
73. III. 18. Benares Edn., p. 103.
74. स्वराङ्कुशशिक्षा, शिक्षासङ्ग्रहः, Benares Edn., p. 161.

2 एदोतोरुच्चयोर्यत्र नीचोऽकारः परो यदि ।
एकीभावे भवेत्तत्र स्वरोऽभिनिहतस्तदा ॥

3 इउवर्णौ यदोदात्तावापद्येते यवौ क्वचित् ।
अनुदात्तस्वरे नित्यम् विद्यात् क्षैप्रस्य लक्षणम् ॥

4 इकार उच्चः पूर्वस्मिन् परतो नियतः स च ।
प्रश्लिष्टमाहुराचार्याः स्वरवर्णविदस्तदा ॥

5 उदात्तपूर्वं यत्किञ्चिच्छन्दसि स्वरितं भवेत् ।
एष सर्वबहुस्वारस्तैरोव्यञ्जन एव च ॥

6 अवग्रहात्परं यत्र स्वरितः स्यादनन्तरः ।
तैरोविरामं तं विद्यादुदात्तो यद्यवग्रहः ॥

7 स्वरे चेत् स्वरितं यत्र विवृत्त्या तत्र संयुतम् ।
एतत्तु पादवृत्तस्य लक्षणं शास्त्रसम्मतम् ॥ इति ॥

एताश्च संज्ञा अन्वर्था इति 'यथासन्धि स्वरानाचक्षते' (III. 18) इति ऋक्प्रातिशाख्यात् स्पष्टम् । नित्यः—अविनाशी पदकाले न नश्यति । अयमेव जात्यः । क्षैप्रप्रश्लिष्टाभिनिहतसन्धिवशाज्जायमानास्तन्नामानः । पादवृत्तः पदे वृत्तिः सन्ध्यभावः यस्मिन् सः । तिरो मध्ये व्यञ्जनं यस्य तैरोव्यञ्जनः । एवं तैरोविरामोऽपि । एवंलक्षणशून्या अपि केचन स्वरिताः सन्ति—यथाशक्ति वा, यदि प्रविशेत्, धेनुर्दक्षिणा, इति, तेषामपि प्रातिहतसंज्ञा शिक्षासु उक्ता[75] ॥ एतेषामुच्चारणेऽपि विशेषः प्रातिशाख्य एव कथितः—

| तै. प्रा. [76] | का. प्रा. [77] |
|---|---|
| क्षैप्रनित्ययोर्दृढतरः । अभिनिहते च । | तीक्ष्णोऽभिनिहितः परं परं मृदुस्त्वन्यः ॥ |

75. स्व. सि. च. p. 18.

76. XX, 9—12.

77. I. 125. p. 46.

प्रश्लिष्टप्रातिहतयोर्मृदुतरः ।
तैरोव्यञ्जनपादवृत्तयोरल्पतरोऽल्पतरः ॥ इति ॥

'एकश्रुति दूरात् सम्बुद्धौ'[78] इति सूत्रविहितः एकश्रुतिस्वरः । एतत्स्वरूपं बहुभिर्बहुधा कथितम्—

उदात्तानुदात्तोभयसमाहाररूपा इति पतञ्जलिः ।

क्षीरोदकवदुदात्तानुदात्तयोर्भेदतिरोधानमेकश्रुतिः । स्वरिते तु विभागेन तयोरुपलब्धिः इति कैयटः ।

उदात्तादीनां त्रयाणां स्वराणां भेदाभाव इति काशिका ।

उदात्तानुदात्तस्वरितानां परः सन्निकर्ष ऐकश्रुत्यम इत्याश्वलायनसूत्रम् ।

उदात्तादीनामभिव्यञ्जका ये प्रयत्नाः तेषामन्यतमस्यैव प्रयत्नान्तरेण व्यवधानमन्तरा उच्चारणमिति नारायणकृता आश्वलायनसूत्रवृत्तिः ।

उदात्तसमश्रुतिः इति तैत्तिरीयप्रातिशाख्यम् ।

एकश्रुतिः प्रचय इति पर्यायौ इति मनोरमा ॥

सर्वे चामी पक्षाः स्वरसिद्धान्तचन्द्रिकायामेव एकश्रुतिसूत्रे दर्शिताः[79] । एतेषाम् अविरोधोऽपि कथञ्चिदुक्तः । एका समानाकारा श्रुतिः इति योगपर्यालोचनया तु आश्वलायनोक्तपक्ष एव हृदयङ्गमः । प्रयोगश्चात्रानुकूलः । प्रातिशाख्यमपि न विरुन्धे । इयमेकश्रुतिरेव कात्यायनेन तान इति व्यवहृता ॥[80]

एवं च स्वरः षड्विधः—उदात्तः, उदात्ततरः, अनुदात्तः, अनुदात्ततरः, स्वरितः, एकश्रुतिश्च इति ॥[81]

महाभाष्ये तु स्वरितभागमुदात्तं पृथक्कृत्य सप्त स्वरा इत्युक्तम्[82] । अवान्तरभेदपरिहारेण तु सर्वत्र त्रैस्वर्यव्यवहारः । प्रचयाख्यैकश्रुत्या सह चातुःस्वर्यव्यवहारोऽपि क्वचित् ॥

---

78. पा. I. 2. 33.
79. स्व. सि. च. pp. 371-2.
80. भाषिकपरिशिष्टसूत्रम् III. 28. Benares Edn., p. 470.
81. स्व. सि. च. p. 14.
82. N. S. Edn., II. p. 31.

क्वचित्तु शाखायां द्वावेवानुदात्तोदात्तौ । तथा च कात्यायनः 'स्वरितानुदात्तौ च' 'उदात्तमनुदात्तमनन्त्यम्' इति[83] । 'मन्त्रविषये यौ स्वरितानुदात्तौ तावपि शतपथब्राह्मणे उदात्तौ स्तः' 'मन्त्रधर्मेण यदुदात्तमभिहितम्, तत् शतपथब्राह्मणे अनुदात्तं स्यात्' इत्युभयत्र व्याख्यातारः । तथा त्रैस्वर्यमपि केषाञ्चित्, 'मन्त्रस्वरवद्ब्राह्मणस्वरश्चरकाणाम्' 'तेषां खाण्डिकीयौखीयानां चातुःस्वर्यमपि क्वचित्' इति सूत्राभ्याम्[84] ॥

शाखाभेदेन स्वरविशेषनियमः

एवं प्रचयस्वरे बह्वृचेषु विशेषः ऋक्प्रातिशाख्ये उक्तः—

त्रिमात्रयोरुत्तरयोरन्त्यापि प्रचयस्वरे ।
मात्रा न्यस्ततरैकेषामुभे व्यालिः समस्वरे ॥
केचित्त्वेकमनेकं वा नियच्छन्त्यन्ततोऽक्षरम् ।
आ वा शेषान्नियुक्तं तूदात्तस्वरितोदयम् ॥ इति[85] ॥

एवमेक एव शब्दः क्वचिदाद्युदात्तः क्वचिदन्तोदात्तश्च एकस्यामेव शाखायामधीयते, यथा वेदवृष्टिशब्दौ[86] ॥

तथा च प्रातिशाख्यादिनिर्णायकसहायमन्तरा शाखासु यथाधीतस्वरनिर्णयः सामान्यस्वरसूत्रैर्दुर्वचः ॥

सामशाखायां तु क्रुष्टप्रथमद्वितीयतृतीयचतुर्थमन्द्रातिस्वार्याः इति स्वरसप्तकम् । ते च उदात्ताद्यवान्तरभेदा एव इति 'मन्द्रादयो द्वितीयान्ताः चत्वारस्तैत्तिरीयकाः'[87] इति तैत्तिरीयप्रातिशाख्यसूत्रादव-

षड्जादयः उदात्तादयश्चाभिन्नाः

83. भा. प सू. I. 14, 15. pp. 441-2.
84. Do. III. 25, 26 p. 469.
85. III. 20, 21, 27, 28. pp. 104, 105, 106.
86. स्व. सि. च. pp. 119, 124.
87. तै. प्रा. XXIII. 13, p. 513.

गम्यते । इमे एव सङ्गीतशास्त्रप्रसिद्धाः षड्जादयः इति नारदीयशिक्षा—

यः सामगानां प्रथमः स वेणोर्मध्यमः स्वरः ।
यो द्वितीयः स गान्धारस्तृतीयस्त्वृषभः स्मृतः ॥
चतुर्थः षड्ज इत्याहुः पञ्चमो धैवतो भवेत् ।
षष्ठो निषादो विज्ञेयः सप्तमः पञ्चमः स्मृतः ॥ इति[88] ॥

तथा उदात्तादीनां त्रयाणामपि तैरभेदो याज्ञवल्क्यशिक्षायाम्—

गान्धर्ववेदे ये प्रोक्ताः सप्त षड्जादयः स्वराः ।
त एव वेदे विज्ञेयास्त्रय उच्चादयः स्वराः ॥
उच्चौ निषादगान्धारौ नीचावृषभधैवतौ ।
शेषास्तु स्वरिताः ज्ञेयाः षड्जमध्यमपञ्चमाः ॥ इति [89] ॥

एतच्च दाक्षिणात्याः सङ्गीताभिज्ञा नाङ्गीकुर्वन्ति । पाश्चात्त्या अपि बर्नेल्प्रभृतयः, प्राचां ग्रन्थकर्तॄणामेवंविधा उक्तयः बह्व्यः अनर्थकाः इति मन्यन्ते । सिद्धेश्वरवर्माख्यो विद्वान् षड्जादयो न वैदिकस्वरेभ्यः अभिन्नाः, किन्तु तत उत्पन्ना इति अमीषामुपपत्तिं वदति[90] । केनाभिप्रायेण प्रवृत्तानीमानि वचनानीति तु उभयज्ञा विद्वांस एव प्रष्टव्याः ॥

व्यञ्जनानामपि स्वरवत्त्वम्

स्वरा अचामेव धर्माः, न व्यञ्जनानाम् । अत एव तेषाम् अज्बोधकस्वरपदेन व्यपदेशः । तदुप-रागात्तु व्यञ्जनान्यपि कदाचित्तद्धर्मभाञ्जि । तेषु स्वरितग्राहीणि मुख्यानि । तानि च अनुस्वारस्वरभक्तिङ्नणादीनि ।

---

88. शिक्षासङ्ग्रहः । Benares Edition, p. 410.

89. Do. Do. pp. 1, 2.

90. " The pitch of the accents is merely relative, and the attempt to fix them absolutely by certain definite notes is merely one more instance of the spirit of artificial systematizing that meets one everywhere in Indian Literature " (Burnell). This reason however cannot be accepted because, firstly, 'the wording of the text does not imply the *identification* of the accent with musical notes.' Siddheshwar Varma, *op. cit.* pp. 159-61.

यथा वायव्यꣳ श्वेतम्, दोषावस्तोर्हविष्मती, गर्भमायन्, न्यङ्, ब्रह्मण् + वन्तः, इत्यादिषु । एतेषां च स्वाभाविकेनार्धमात्राकालेन उच्चारणं दुष्करमिति कालाधिक्यमपि विहितं शिक्षासु—

स्वरितग्राह्यनुस्वारो द्विमात्रो मात्रिकात् परः ।
द्विमात्र उत्तमो ह्रस्वादध्यर्धो व्यञ्जनात् परः ॥ इति[91] ॥

एवमुदात्तादिधर्मोऽपि क्वचित्—अरुणाः काण्डर्षयः, विधायर्षिरबोचत्—इत्यादौ । अत्र स्वरभक्तिः 'स्वतन्त्रा' इत्युच्यते । अतोऽचामेव स्वराः इत्युत्सर्गः ॥

इमे च उदात्तादयो वेदभाषासाधारणाः, तयोः शब्दार्थ-भाषासाधारण्यं स्वराणाम् योरेकरूपत्वात् । तथा च मीमांसकाः—

प्रत्यक्षप्रत्यभिज्ञानाच्छब्दैकत्वं प्रतिष्ठितम् ।
यथाश्रुतगवादीनां यापि वाच्यान्तरे स्थितिः ।
अर्थैकत्वाविरोधेन गुणमात्रान्यतापरा ॥ इति[92] ॥

पाणिनिरपि स्वरसूत्रेषु छन्दोऽधिकारमकुर्वन् भाषासाधारण्यं स्वराणामभिप्रैति । अन्यथा हि छन्दोऽधिकारे स्वरसूत्राण्यपठिष्यत् । तथा केषुचित् सूत्रेषु 'छन्दसि' 'भाषायाम्' इति विशिष्य वचनमपि उक्तार्थे अनुकूलम् । पाणिनीयानुबन्धानां प्रायः स्वरार्थत्वाद्भाषायां स्वराभावे वैयर्थ्यमेव तेषां स्यात् । उक्तं च—

किं बहुना श्रुतिरखिला ब्रह्माद्वैतैकतत्परा यद्वत् ।
तद्वद्व्याकृतिरखिला स्वरबोधैकप्रयोजना जयति ॥ इति[93] ॥

वार्त्तिककारोऽपि स्वरविधौ छन्दोऽधिकारमनुपसङ्ख्क्षाणो भाषायां स्वरसद्भावमनुमनुते ॥

---

91. वैदिकाभरण, p. 41.
92. तन्त्रवार्त्तिकम् I. 3. 9. Poona Edition, p. 292.
93. स्व. सि. च. p. 3.

भाष्यकारोऽपि[94] दाण्डिनायनसूत्रे अष्टाध्याय्याः त्रैस्वर्येण पाठमभिप्रयन् भाषासाधारण्यं स्वराणां बोधयति । अत एव 'मन्त्रो हीनः' इति शिक्षावचने मन्त्रपदं विहाय 'दुष्टः शब्दः' इति पाठः स्वीकृतः पस्पशायाम्[95] । नागेशादिभिश्च[96] 'भाषायां स्वरनियमो न' इति भ्राम्यन्तः परास्ताः' इत्यसकृदुक्तम् ॥

अथ वेदेषु ऐतरेयब्राह्मणादिषु इदानीमिव सर्वदा त्रैस्वर्याभावः ?

सर्वत्र वेदे त्रैस्वर्यसद्भावः

उत कालान्तरे स्थितं त्रैस्वर्यं विच्छिन्नसम्प्रदायमभूत् ? अत्र भट्टोजिदीक्षिताः[97]—न सर्वेषु वेदभागेषु त्रैस्वर्यम् ; 'विभाषा छन्दसि' इति सूत्रात् । तद्धि व्यवस्थितविभाषया त्रैस्वर्यमैकश्रुत्यं च छन्दसि विदधाति । तत्र बह्वृचानां मन्त्रे त्रैस्वर्यम्, ब्राह्मणे ऐकश्रुत्यमेव, इति व्यवस्था । तैत्तिरीयाणां तु मन्त्रब्राह्मणयोरुभयोरपि त्रैस्वर्यम् इति । न चायमैच्छिको विकल्पः, वेदे आपाद्यमानरूपाभावात इति ॥

[98]वृत्तिकारहरदत्तनागेशास्तु ऐच्छिकविकल्पमङ्गीकृत्य छन्दसि सर्वत्र एकश्रुतिः त्रैस्वर्येण विकल्प्यते इति वदन्ति । तथा च शब्देन्दुशेखरे[99]—परे तु मन्त्रे त्रैस्वर्यम्, ब्राह्मणे ऐकश्रुत्यम् इति बह्वृचानाम् । तैत्तिरीयाणां तु उभयत्रापि त्रैस्वर्यमिति व्यवस्थितविभाषात्वमस्य छन्दसि स्वीकृतं कैश्चित् । तन्न युक्तम्, 'शाच्छोः' इति सूत्रे भाष्ये परिगणितव्यवस्थितविभाषास्वपाठात् । अत एव केषुचिद्देशेषु स्वाध्यायकाले सर्ववेदानामैकश्रुत्येन पाठो दृश्यते... । 'एकश्रुतिः स्वरसर्वनाम' इति

94. म. भा. on VI. 4. 174, Kielhorn Edn. p. 234.
95. N. S. Edn. I. p. 27.
96. शब्देन्दुशेखरः Benares Edn. p. 936.
97. शब्दकौस्तुभः Benares Edn. Vol. II, p 17.
98. काशिकावृत्तिः I. 2. 36.
99. p. 936.

भाष्येणापि एवं बोधनाच्च। यथा सर्वनामशब्दाः तदादयः सर्वपदस्थाने प्रयुज्यन्ते, एवं सर्वस्वरस्थाने एकश्रुतिः प्रयोक्तव्या इति तदर्थः । अनेन स्पष्टमेव त्रैस्वर्यैकश्रुत्ययोरैच्छिकविकल्पविषयता उक्ता । वृत्तिकारोऽपि छन्दसि ऐच्छिकमेवैकश्रुत्यमाह। इदानीं धर्माधिक्याय त्रैस्वर्येण पाठः परम्परासम्प्रदायेन, अन्येषामैकश्रुत्येनेति सम्प्रदायश्रद्धाजाड्येन तु ते नान्यथा पठन्ति। नैतावता विकल्पस्य ऐच्छिकत्वभङ्गः ' इति[100] ॥

युक्तश्च नागेशपक्षः । न हि ब्राह्मणेषु इदानीं त्रैस्वर्यानुपलम्भः कालान्तरेऽपि तदभावं साधयितुमलम् । न च त्रैस्वर्यं चेदभविष्यत् ब्राह्मणान्तरेष्विव तेष्वपि तत्सम्प्रदायोऽन्ववर्त्स्यत् इति वक्तुं युक्तम्। विच्छेदनिमित्तानि हि नास्मदिच्छाधीनानि । तस्मात् क्वचिद्ब्राह्मणे त्रैस्वर्यस्य दर्शनेन तत्सामान्याद्ब्राह्मणान्तरेष्वपि तत्सत्त्वानुमानमेव न्याय्यः । वेदे आपाद्यमानरूपासंभवात् इति हेतुस्तु तदुक्तः असिद्धः । तैत्तिरीयारण्यके इदानीं द्राविडान्ध्रपाठभेदोपलम्भात् । यदि तु तयोरेक एव वैदिकसम्प्रदायागतः पाठः, अन्यः असाम्प्रदायिकः इति, तदा सम्प्रदायविच्छेदः अभ्युपगतः एव। अपि च महाभारते सारस्वतोपाख्याने अनावृष्ट्या देशक्षोभे ब्राह्मणाः आहारालाभात् स्मृतिशक्तिक्षये अधीतान् वेदान् व्यस्मार्षुः इति,

तेषां क्षुधापरीतानां नष्टा वेदा विधावताम् ।
सर्वेषामेव राजेन्द्र न किञ्चित् प्रतिभाति ह ॥ [101]

इत्यादिना स्पष्टमुक्तम् । तथैव भूकम्पादिभिर्निमित्तैः अधीतवेदेषु व्यापन्नेषु सम्प्रदायविच्छेदो नासम्भाव्यः । बहुजनपरिगृहीतास्तु शाखा अविच्छिन्नसम्प्रदाया अनुवर्तन्ते इदानीमपि । अपि चाङ्ग-

---

100. "सर्वमक्षरजातम् एकश्रुतिस्वरेण प्रयोक्तव्यम् इति पूर्वेषां मतम्। पूर्वे वैयाकरणाः। ते हि वेदाध्ययने ऐकश्रुत्यं विकल्पयन्ति 'विभाषा छन्दसि' इति" वैदिका. p. 411.

101. शल्यपर्व ५२.४२. Bombay Edn. p. 103.

विद्यासु व्याकरणादिषु निष्णातैरेव वेदः संरक्ष्येत । अन्यैस्तु स्मृति-बलात् यथाधीतं पठितुं शक्यते । विस्मरणं च प्राणिमात्रसाधारणमिति सति सन्देहे निर्धारणोपायापरिज्ञानात् वर्णान्यथात्वं स्वरवैलक्षण्यं वा दुष्परिहरम् । इदानीं हि वेदमधीयानाः अवकाशाभावेन कृतकृत्यताभि-मानेन वा प्रायो न शास्त्राणि अधीयते । शास्त्रकुशला अपि प्रायो वेदाध्ययनं नाभिनिविशन्ते । अतः उभयसंश्लेष आवश्यकः वेद-संरक्षणाय । स चाधुनिकेष्वध्येतृषु विरलः । न चायमध्येतॄणामपराधः ; भूयान् हि कालः अपेक्ष्यते तत्सम्पादनाय । वृत्तिकाङ्क्षिणश्च ते शीघ्रमेवा-ध्ययनं समापयन्ति इति इदानीं त्रैस्वर्येणाधीयमानोऽपि वेदभागः परिहीयेत तेन कदाचित् इति शङ्कायाः सत्यवकाशे कुतो विशयः पूर्वोक्तब्राह्मणभागेषु सम्प्रदायविच्छेदे ॥

एकश्रुतिः त्रैस्वर्यलोपहेतुः

एवं लोकवेदसाधारणमपि त्रैस्वर्यं काले गच्छति यज्ञकर्मणि वेद एव लब्धास्पदया एकश्रुत्या अभिभूयते स्म ॥

1. पूर्वोक्तब्राह्मणानि लुप्तत्रैस्वर्याणि पुरुषार्थसाधनतया अध्ये-यानि संवृत्तानि । विस्वरश्च वेदभागो नाध्येतुमर्ह इति एकश्रुत्या तदध्ययनसम्प्रदायः समजनि ॥

2. तथा भाषायामलङ्काराः श्लेषादयः कविभिराद्रियन्त । त्रैस्वर्यं च तद्विरोधि । न हि 'सर्वदोमाधवः पायात्' इत्यादि श्लिष्टं काव्यम् अर्थद्वयसाधारण्येन त्रैस्वर्येण प्रयोक्तुं शक्यते । अत आलङ्कारिकैः स्वप्रयोजनानुसारेण एकश्रुत्यैव काव्यानि निर्ममिरे पेठिरे च ॥

3. वेदानधिकारिणां स्त्रीशूद्रादीनां धर्माद्यवगतिहेतोः पुराणानि व्यासेन प्रणीतानि । तेषां च वेदसिद्धत्रैस्वर्येणाध्ययनं तैर्दुष्करम्, वेदतुल्यतया श्रोतृभिः दुस्सहं च इति तत्र एकश्रुतिपाठः सुलभः स्वीकृतः ॥

4. व्यवहारसिद्धासु भाषासु तदीयाः स्वरवर्णगता विशेषाः क्रमेण परिचीयमानाः न क्लेशावहाः । अतथाभूतासु तु तदीयलक्षणज्ञानमन्तरा ते दुर्ज्ञानाः । संस्कृतभाषा च प्रकृतिप्रत्ययविभागबहुला स्वभावतो दुर्ग्रहा । तत्र यदि स्वरलक्षणानामपि पाठः नियमेनापेक्षितः, सुरापस्य भूतावेश एव । दृश्यन्ते हि वेदैकदेशस्य सस्वरस्य शब्दमात्रस्य ग्रहणाय वर्षपञ्चकं ततोऽधिकं च परिश्राम्यन्तः । अत एव पूर्वोत्तरमीमांसे अधीयानाः वेदार्थं विचारयन्तोऽपि विचार्यमाणवेदभागम् एकश्रुत्याधीयते स्वरशास्त्राद्बिभ्यतः । अतः क्लेशभूयस्त्वात् भाषासु त्रैस्वर्यं परित्यक्तम् ॥

वेदेषु तु सम्प्रदायसिद्धस्वरस्यान्यथाकरणे प्रत्यवायः स्यादिति भिया आस्तिकैः श्रद्धालुभिः त्रैस्वर्यं परिपाल्यते । वस्तुतस्तु तेष्वपि 'विभाषा छन्दसि' इति एकश्रुतिः शास्त्रविहितेति तया प्रयोगे न प्रत्यवायशङ्कावसरः । 'मन्त्रो हीनः स्वरतो वर्णतो वा' इति शिक्षावचनमर्थवादः, त्रैस्वर्येण प्रक्रमे अन्यथाप्रयोगनिषेधपरं वा इति नागेशाद्यभिप्रायः । एवं च त्रैस्वर्यं वेद एव क्वचित् शाखासु नियतम् ॥

केचित् तु[102] 'विभाषा छन्दसि' इति एकश्रुतिर्वेद एव विकल्पेन विहिता इति लोकेषु त्रैस्वर्यनियम एव पाणिनिसम्मत इति वदन्ति । नागेशभट्टोजिदीक्षितौ तु दाण्डिनायनसूत्रे ऐक्ष्वाकशब्द एकश्रुत्या पठ्यते इति भाष्यात्, पस्पशायाम् 'श्वेतो धावति' 'अलम्बुसानां याता' इति व्यर्थकं वाक्यमिति भाष्यात्, वेद इव लोके न स्वरो विशेषाध्यवसायहेतुरिति काव्यप्रकाशोक्तेश्च, 'विभाषा अछन्दसि' इति योगविभागेन भाषायामपि एकश्रुतिविकल्पमिच्छतः । इदमेव युक्तम्, 'यर्वाणस्तर्वाणो नाम ऋषयो बभूवुः'[103] इति भाष्येण साधुप्रयोगनियमस्य

102. C. V. Vaidya, History of Sanskrit Literature, III, p. 133. स्व. सि. च. pp. 382-3.

103. म. भा. N. S. Edn. I. p. 68.

यज्ञकर्ममात्रविषयतायाः, ततोऽन्यत्र तु व्याकरणाननुगतस्यापि शब्दप्रयोगस्य प्रत्यवायहेतुत्वाभावस्य चावगमात्। शास्त्राननुगमश्च शब्दतः स्वरतश्चेति भाषायाम् अन्यथास्वरस्यापि प्रयोगो भाष्यसम्मतः ; परन्तु योगविभागपक्षे भाष्यप्रयोगस्य साधुता सिध्यति, अन्यस्मिंस्तु नेति। तत्र भाष्यप्रयोगमात्रेण केषाञ्चिच्छब्दानां सूत्राननुगृहीतानामपि साधुत्वमभ्युपगच्छन्तः भाष्यमतानुसारेण सूत्रव्याख्यानसम्भवे तत् कुतो नाङ्गीकुर्वन्तीति त एव प्रष्टव्याः॥

एतद्ग्रन्थकर्ता

स्वरसिद्धान्तचन्द्रिकाकर्ता अयं श्रीनिवासदीक्षितः दाक्षिणात्यः सङ्कृतिगोत्रोत्पन्नः। अस्य पिता कृष्णविपश्चित्। माता अनन्ताम्बा। साङ्गे यजुर्वेदे व्याकरणन्यायमीमांसासु चाधीती। रामभद्रदीक्षितस्य जानकीपरिणयादिग्रन्थकर्तुः शिष्यः। न केवलं स एव गुरुः अस्य, किन्तु अन्येऽपि केचन इत्युपोद्घातश्लोकेभ्यः तदीयेभ्यः स्पष्टम्। क्रैस्तवीयसप्तदशशतकोत्तरार्धोऽस्य जीवितकालः। अस्य गुरुः किल रामभद्रदीक्षितः चोलाधिपेन शहाजिमहाराजेन तदीयवैदुष्यसन्तोषितेन तदानीन्तनानां विदुषामावासार्थं स्वनाम्ना निर्मिते अग्रहारे शहाजिराजपुरे (तिरुविशल्लूर्) सबहुमानं स्थापितः[103]। वैयाकरणमुख्यो नागेशोऽपि एतत्समानकालिकः। स हि जयपुराधिपेन जयसिंहेन सप्तदशशतकावसाने स्वीयाश्वमेधयज्ञायाहूतः[104]। अत एव स्वरसिद्धान्तचन्द्रिकायाम् अयम् एतद्ग्रन्थाश्च न निर्दिष्टाः। अनेन च अस्मद्ग्रन्थकर्ता तदीयो वा ग्रन्थो नोल्लिखितः स्वग्रन्थेषु। अतः परस्परानभिज्ञौ इमौ द्वावपि इति सम्भाव्यते। अस्याभिजनप्रदेशः शहाजिराजपुरमेव स्यादिति रामभद्रदीक्षितशिष्यतया ऊहितुं युक्तम्॥

स्वरसिद्धान्तचन्द्रिका

इयं पाणिनीयस्वरसूत्राणां व्याख्या विशिष्य रुद्रार्यपुत्रेण नृसिंहविपश्चिता विरचितायाः स्वरमञ्जर्याः खण्डनरूपा। अस्या ग्रन्थान्तरेभ्यो विशेषस्तु—

104. Indian Antiquary 1904, pp. 126, ff.
105. Belvalkar, Systems of Sanskrit Grammar, p. 49,

भाष्यकाशिकादिषु अष्टाध्यायीक्रमेणैव सूत्राणि व्याख्यातानि । ततस्तेषामुत्सर्गापवादताविवेको दुरवधारः । अत्र तु उत्सर्गापवादक्रमेणैव सूत्राणि व्याख्यातानीति अध्येतॄणां तदवगमक्लेशः परिहृतः । सिद्धान्तकौमुद्यां प्रायः बह्वृचशाखोदाहरणानामेव प्रदर्शनेन यजुःशाखिनां ततः उपकारो नास्तीति तेषां सुखावबोधाय याजुषाण्येवोदाहरणानि सति सम्भवे अत्र सङ्गृहीतानि । तथा साधारणप्रकृतिप्रत्ययसमासतिङन्तविभागेन सूत्राणि व्याख्यातानि सिद्धान्तकौमुद्याम् । अत्र तु द्वादशधा विभज्य व्याख्यातानि इति विस्पष्टं विषयविवेकः अस्माद्ग्रन्थाज्जायते । दोषाश्च केचन तद्गताः अत्र प्रदर्शिताः । स्वरमञ्जर्यां यजुश्शाखामाश्रित्य प्रवृत्तायामपि बहूनां स्वरसूत्राणां व्याख्यानाकरणात्, अन्यथासिद्धोदाहरणप्रदर्शनात्, अपसिद्धान्तबाहुल्याच्च याजुषास्तद्दर्शिनो मा स्म भ्राम्यन् इति तदीया दोषाः प्रपञ्चिताः अत्र । अपेक्षितानि प्रातिशाख्यसूत्राण्यपि व्याख्यातान्यत्र । पूर्वेषां व्याख्यातॄणां मतानि तत्र तत्र प्रदर्श्य विचार्य सिद्धान्तप्रदर्शनेन ग्रन्थान्तरावलोकनफलमप्यत एव सिध्यति । व्याख्यानसरणिश्च प्रायः प्राचां काशिकावृत्तिहरदत्तादीनां प्रक्रियामनुरुन्धे । क्वचित्तु मतान्तरखण्डनाग्रहोऽपि समुपलभ्यते । यथा 'विभाषा छन्दसि' इति सूत्रे 'विभाषा अच्छन्दसि' इति विभज्य लोकेऽप्येकश्रुतिविकल्पः, दाण्डिनायनसूत्रे एकश्रुत्या सूत्रपाठं भाष्योक्तं 'श्वेतो धावति 'अलम्बुसानां याता' इति द्व्यर्थकं वाक्यमिति पस्पशान्ते भाष्यं चावष्टभ्य भट्टोजिदीक्षितैरङ्गीकृतः । 'छन्दोवत् सूत्राणि' इति प्रथमम्, त्रैस्वर्येण सकृत्प्रयुक्तं वाक्यं सादृश्यात् समानाकारं वाक्यान्तरं स्मारयति, तस्माच्च अर्थान्तरबोधः, एतावतैव अर्थद्वयव्यवहारः, इति द्वितीयं चोपष्टम्भकमन्यथोपपाद्य योगविभागः तदुक्तः खण्डितः अस्मद्ग्रन्थकर्त्रा[105] । अत्रेदं चिन्तनीयम्— एकश्रुतिः स्वरसर्वनाम यथा नपुंसकं लिङ्गसर्वनाम' इति दाण्डिनायनसूत्रे भाष्यम् । अत्र च, नपुंसकलिङ्गदृष्टान्तेन एकश्रुतेः

106. स्व. सि च., pp. 382-3.

त्रैस्वर्यस्थाने सर्वत्र प्रयोगः भाष्यात् स्वरसतः प्रतीयते । अगतिकगतितया छन्दोवत् सूत्राणीति न्यायेन तत्प्रयोगाभ्यनुज्ञापरत्ववर्णनं तु अस्य क्लिष्टं सन्दर्भविरुद्धं च । तथा स्मृताद्वाक्यान्तरादर्थान्तरबोधश्च 'श्वेतो धावति' इति वाक्ये न वक्तुं शक्यते । श्रुतवाक्याद्भिन्नस्वरस्य वाक्यान्तरस्य तद्वैसादृश्येन स्मृतेरसम्भवात् । यथा हि रूपभेदः सादृश्यविरोधी, एवं स्वरभेदोऽपि इति कथमन्यथोपपत्तिरिति । परन्तु साधारणा ईदृशा द्वित्रा दोषाः सर्वेषां ग्रन्थकर्तॄणामिति न किमप्यत्र ग्रन्थे कलङ्कायते । अतिसरलैः सन्दर्भैः सम्भावितसर्वशङ्कानिरसनपूर्वं सम्यगर्थप्रदर्शने स्वरसूत्रव्याख्यानां धुरि प्रतिष्ठापनीयैषा कृतिः इति सुश्लिष्टेयमार्या ग्रन्थकृतः—

" न्यक्कृतपूर्वनिबन्धा सत्कृतसत्सम्प्रदायरमणीयां ।
कस्य न मोदं तनुते कृतिरेषा मृदुपदावलीरचिता ॥" इति[106] ॥

इति शम्

अण्णामलै विश्वविद्यालयः
धातृ-चैत्रशुक्लदशमी

विद्वद्विधेयः
क. अ. शिवरामकृष्णशास्त्री
सम्पादकः

---

107. स्व. सि. च., p. 2.

# INTRODUCTION.

"*Śabda* (tone) is the origin of all sounds".[1] "Of all *Varṇas* (sounds) *dhvani* (tone) is the root-cause".[2]

Dhvani the original means of communication of ideas.

Man is endowed with the two powers of producing (1) the articulate sound and (2) the tone. By mere birth he is not able to produce the articulate sound; only after closely observing the conversations of his elders does he try to imitate them. Even in this attempt he does not all on a sudden become an adept but only after exerting himself for long in that direction. The case of tone, however, is different. A new-born child afflicted by hunger cries out; as its suffering is much or slight, it cries aloud or in a low tone. This capacity of the child to produce different tones is, therefore, *innate;* while the capacity to produce articulate sound is *acquired* by constant practice. The former power being independent manifests itself before the acquired power begins to operate. Hence man's tone is *anterior* to articulate sound.[3]

Tone is the means of communication for those who have no power of speech. We observe that animals and birds convey their thoughts by gestures and tones. In some cases tone alone is employed, since gestures serve no purpose in the absence of company. Men also make use of tones in their dealings with animals and birds; so do children and dumb people.[4] Hence tones are the means of communication when language and gestures fail. To this effect Hari says—" Tones, it is observed, influence the actions of animals, etc." Hence modern Philologists accept the view that language has developed from tones, as may be inferred from the attempts of animals and children to convey their ideas.[5]

1. *Taittirīya Prātiśākhya*, XXII, 1.
2. *Tribhāṣyaratna*, Mysore Edn., p. 491.
3. *Prapāñcasāra*, I. 43.
4. *Taittirīya Brāhmaṇa*, II, 8.8.4; Bhaṭṭa Bhāskara *Bhāṣya* on the above; *Vākyapadīya*, II, 119, 148 and 149; Puṇyarāja's commentary on the above; De Laguna, *Speech, its Function and Development*, p. 78.
5. O. Jesperson, *Language its Nature, Development and Origin*, p. 27; De Laguna, *op. cit.*, pp. 75 and 81.

Tone ever associated with and accessory to, speech.

Even after the advent of language, tones have persisted in it, since they are natural to men. Angry, happy or terrified people, unable to express themselves fully, are seen producing only tones. All languages, therefore, abound in indeclinables like *hā*, *hī* without any derivative sense.[6] Not only are they convenient in language but also necessary. When three or four men are suffering from an ague and when they are asked about the nature of their suffering, all of them may reply '*unbearable*'. Does this reply convey accurately the particular degree of suffering that each man undergoes? Since all of them use the same expression, it is not possible to have a comparative knowledge of their suffering except from their tones, indistinct, soft, harsh, etc. Similarly emotions like pleasure, sorrow and terror cannot be so well-known in their different degrees from their respective articulate expressions as they could be from their respective tones. *Hence tones are indispensable to language.*

Language superior to tone.

Better and greater however are the uses of language for mankind than those of tone. To illustrate: a mother hears her child crying, thinks it is hungry, and tries to give it some food; but it does not take it in and cries aloud. Then the mother understands that the child is having some pain. But until she knows that the cause of suffering is fever, stomach-ache or flea-bite, she cannot think of any remedy. How can she know the disease from the tones of the child unless it is given expression to by articulate speech? On the other hand, from articulate speech the child's suffering and its cause can be known clearly and precisely. Moreover, tones are expressive of emotions like pleasure, agony and terror for the time being in as much as they are the very expressions of those emotions. When these emotions disappear, they also disappear, and so they cannot explain things that are of the past. Hence, since man will have no power of knowing things of the past and future, mankind, nay, the whole world, will sink bank into the animal state. Daṇḍin has expressed the same idea when he praised speech thus: 'The entire three-fold world would have been enveloped in darkness, had it not been for the illumination called *śabda* (speech) all over the world".[7] So the

6. Benfey quoted by O. Jesperson, *op. cit.*, p. 415; Jesperson, *op. cit.*, p. 433.

7. *Kāvyādarśa*, I.4.

communication of one's thoughts to others, and one's understanding of others' ideas from their expression, etc., are made possible best by language; yet language serves its purpose better when it is attended by tones suited to varied emotions.

Transformation of tones.

Philologists hold that language had originally been unitary and that it became diversified according to the changes wrought by time and space. Ordinary people use certain words which are not generally used by the learned though they are as expressive as the words of the latter. Similarly even in cases of words used by both sets of people there is a perceptible difference in their utterance; so also in the way of conveying ideas by words. From these differences a careful observer can know the learning and habitat of persons. The reasons for these differences are the varied contacts of people with learned men, their different capacities for learning and their divergent ideals of conduct. Hence divergencies in their expressions and in the control of their emotions like anger, joy and terror and consequently in their tones.

Definite Tones the cause of beauty.

In the development of language and tone man, not satisfied with the mere communication of his thoughts to others, introduced into language particular arrangements of words in prose and poetry and methods of expressing beautiful ideas; similarly he regulated tones for the sake of beauty and convenience in utterance. All people feel happy in hearing words that are uttered in a particular tone, even when they do not understand their meanings. Learned people are doubly happy, because they understand the meaning of those words and appreciate their appeal to the ear. Among public speakers some are able to move the audience to tears, to make them indignant and to make them dance with joy; there are others who do quite the reverse. Such regulated tones admit of a two-fold division: some subordinate to the meaning conveyed and the others, independent. When they are independent of the meaning conveyed they become beautiful songs under restrictions of order and time in various degrees. When they are subordinate to ideas, this restriction of order and time may delay and sometimes obstruct the comprehension of ideas. Hence tones have different rules in language.[8]

8. B. Dumville, *The Science of Speech*, p. 20,

Tones differ according to the attitudes and circumstances of speakers. When many speak in different tones, at once there is disharmony. Such occasions unavoidably arise in festivities. So it is desirable to have some rules to regulate the tones, so that no disharmony might arise.

Tones or accents manifold.

The rule regulating tones could not be the same in all languages, since different races possess different tastes. What pleases one need not please another. Beauty is more subjective than objective even when individuals are considered. The elements of one language are not found in another: for example, in Sanskrit there exist the dual number, svarabhakti, the ḷ-sound, etc. which are not found in many other languages; the ḻ-sound found in Tamil is absent from Non-Dravidian languages. A similar lack of uniformity exists in the case of tones also. These tones are employed in letters, words and sentences with a view to producing manifold effects in language (as explained above) and therefore become an integral part of language.

Tones are otherwise called *svaras* (accents). Emotions like anger, pleasure, terror, hatred and envy are known from different tones. To illustrate: the word *subhāṣitam*, when uttered in a particular tone, indicates *contempt* and therefore means *apabhāṣitam*. In other tones it indicates a *query*, an *answer*, *praise* or *envy*; so also the reduplicated form *tiṣṭha tiṣṭha* indicates *extreme regard* or *threat*. In a similar manner words with different accents or tones like *ādyudātta*, *madhyodātta* and *antodātta* convey different ideas. This is explained by the accent sūtras of Pāṇini: "*Satyam praśne*", etc.[9] These sūtras record the existing varieties of accents on the basis of natural emotions. And it does not stand to reason to say that these accents were introduced into language at a particular time, as they occur naturally in daily conversation.

Uses of accents.

Accents are primarily intended for the expression of emotions and our sense of beauty. There are other uses, which have, as has been said, an important part to play in language. (1) Economy may be mentioned first. Man, particularly a learned man, wishes to speak as briefly as possible. For example, in the statements—'*gacchati kim? gacchatyeva na tiṣṭhati*' (does he go? he goes only and does not stand), the senses of interrogation

9. *Vide* the Sanskrit Introduction, p. vii.

and assertion are conveyed by the words *kim* and *eva* respectively; but when it is possible to convey those ideas by particular accents even without the use of those expressions, no purpose is served by the latter. So also ideas of contempt and praise can be made known by accents without the use of their respective expression. Hence *economy* is an important use of accents.

(2) In all languages numerous homonyms exist. They cannot convey their meanings without reference to the intention of the speaker by means of the context and the like. Even the context cannot sometimes bring out the *intention* since it may be common to more than one sense. But the accent in a word which forms an integral part of the expression fixes the sense. In accordance with this says the *Mahābhāṣya* (*Paspaśāhnika*) —" Yāñjikāḥ paṭhanti: sthūlapṛṣatīm āgnivāruṇīm anaḍvāhīm ālabheta."[10] The sacrificers prescribe that a sacrifice is to be performed with a cow possessing wide spots for the twin-gods, Agni and Varuṇa. " There arises a doubt in the compound—*sthūlapṛṣatīm* in the passage referred to, whether it is to be split into '*sthūlā cāsau pṛṣatī ca*'...*sthūlapṛṣatī* or '*sthūlāni pṛṣanti yasyāḥ sā*...*sthūlapṛṣatī*. This doubt cannot be cleared without the help of accent. If it has the accent of the *pūrvapada*, it is a *bahuvrīhi;* or if it has the *antodātta* of a compound, it is a *tatpuruṣa*."[11]

Similarly in the Upaniṣad passages explained in support of dualism, absolute monism, qualified monism, etc., there is no means of knowing their *intention* and no conclusion can, therefore, be drawn from them. In such cases accent would be very helpful. For example, in the Mahāvākya—(ātmā) *tat tvam asi* (That thou art)—some *split* it as *ātmā-tat* while others as *ātmā-atat*. If the sound *a* after *t* is *udātta* the splitting *tat* is correct; if it is *svarita*, it is *atat*. Similar explanations on the basis of accent are largely found in the Vedas. As now-a-days accent has fallen into disuse in many Upaniṣads, their intention has to be ascertained in other ways.

(3) Mīmāṃsakas are of opinion that spiritual merit accrues from the recital of the Vedas with accent.[12]

(4) Another use of accent may be mentioned. In ancient times owing to the absence of books and other modern requisites

10. N. S. Edn., I, p. 24.
11. *Mahābhāṣya*, I, p. 27; *vide Taittirīya Saṃhitā*, II, 5. 2.
12. *Tantravārttika* (Poona Edn.), I, 3. 9., p. 268.

of learning, there must have been emphasis on the traditional method of reciting the Vedas, and for the unsullied perpetuation of the traditional method, the employment of accent would be very useful, if not necessary. Further, learning by *rote* would be facilitated by the employment of accent.

(5) Lastly as sentence-split is of vital importance in the interpretation of the Vedic texts, the help rendered to it by accent cannot be exaggerated.

The advantages of accent detailed above may be common to all languages; but its special characteristics differ in different languages. It is a laborious task to make a comparative study of accent.[13]

We can fully explain the varieties of Vedic accent as the chanting of the Vedic hymns with the proper accent is in full swing at the present day.

Origin of accent.

The Prāṇavāyu starting from the lungs and coming into contact with the organs above the lungs, produces dhvani. It is audible or inaudible as it is produced in the throat or below the throat. When the throat is of sub-normal elasticity, the breath has not full scope to manifest itself, and the *abhighāta* increases. When the throat is of more than normal elasticity and functions, the prāṇa comes out fully and the *abhighāta* decreases. When the elasticity of the throat is normal, a dhvani is produced, different from that deseribed in the other cases and akin to the utterance of *h*. Thus dhvani is of three kinds—*nāda*, *śvāsa* and *hakāra*. With the help of these three dhvanis all articulate sounds are uttered—so says the *Taittirīya Prātiśākhya*.[14] The four sūtras of this *Prātiśākhya* explain the three dhvanis along with their significant names. Though the three dhvanis are produced by the Prāṇa, the particular dhvani called *svāsa* is so called because it requires for its production more *breath* than do the others.

In the languages of the world one and the same sound is produced sometimes by *śvāsa-dhvani* and sometimes by *nāda-dhvani*. These dhvanis applied to vowels are called *svaras*. Though they are applicable to consonants as well, they are not regarded as svaras. So two varieties of svaras exist—*nāda* and *śvāsa*.

---

13. Brugmann, *Comparative Grammar*, I, p. 528 and Whitney, J.A.O.S. Vol. V, p. 196.



14. *Taittirīya Prātiśākhya*, II. 4—7. pp. 68-70.

Some Philologists[15] opine that there are many indications in Sanskrit and kindred languages of the fact that *śvāsa* was once prominent in those languages, though they are now considered to have nāda predominantly. The Taittirīya Prātiśākhya[16] clearly says that the vowels in Sanskrit have *nāda*. But on the authority of *Uvvaṭa*[17], the commentator on the Ṛg-Veda Prātiśākhya, and of Nāgeśabhaṭṭa,[18] some say that the other variety of accent, *śvāsa*, exists in the vedas. The second view need not be taken as going against the first, in view of the fact that those authors have most probably referred to the contact of air quite indispensable to the production of *nāda*. The Taittirīya Prātiśākhya sūtra—Nādo'nupradānam—expressly explains the importance of nāda. So it is indisputable *that nāda is the only chief svara in Sanskrit.*

Varities of Nada.

There are three accents in the Vedas—*udātta*, *anudātta* and *svarita*. Both *udātta* and *anudātta* are independent while *svarita* is only a combination of the other two. So say Pāṇini and the Prātiśākhyakāras. The three sūtras[20]—*Uccairudāttaḥ, nīcairanudāttaḥ* and *Samāhāraḥ svaritaḥ*—are found in the *Aṣṭādhyāyī*, in the *Taittirīya Prātiśākhya*,[21] and in Kātyāyana's *Prātiśākhya*[22] with the verbal change of the sūtra—*ubhayavān svaritaḥ*. In the *Ṛg-Veda Prātiśākhya* different definitions of svaras are given: (1) The three svaras are pronounced with *āyāma*, *viśrambha* and *ākṣepa*[23] respectively, (2) Svarita is that svara in which there is the combination of *udātta* and *anudātta* in one syllable.[24] It is explained by Pāṇini and Kātyāyana as the combination of two svaras, udātta being the first and anudātta the second. cf. (*a*) tasyādita udāttam arddhahrasvam (P. S. I. 2. 32.) (*b*) tasyādita udāttam svarārddhamātram (K. P. S. I. 111.) Thus udātta has high pitch, anudātta, low pitch and svarita, a combination of both. The term *udātta* is explained as that

15. Brugmann, *op. cit.*. I, p. 528 and B. Dumville, *op. cit.* p. 104.
16. II. 8. p. 70.
17. *Ṛk-prātiśākhyabhāṣya*, Benares Edn., (1903), p. 98.
18. *Uddyota*, N. S. Edn., Vol. II, p. 26.
19. Siddheshwar Varma's *Critical Studies in the Phoentic Observations of Indian Grammarians*, p. 162.
20. I. 2. 29-31.
21. I. 1. 38-40.
22. I. 108-110.
23. III. 1.
24. III. 3.

which is uttered in a high tone and the term anudātta, as that which is uttered in a low tone.

Character of svarita discussed.

Many scholars[25] have observed that the Pāṇinīyan system of grammar is subsequent to the Prātiśākhya literature. Though there are many portions of the Prātiśākhyas proving their posteriority to Pāṇini, yet those portions are regarded as *interpolations*. It must, however, be admitted that the *nucleus* of the Prātiśākhyas is *pre-Pāṇinīyan*. That this view is acceptable to Patañjali, the author of the Mahābhāṣya, is clear from his bhāṣya on the sūtra I. 2. 32. From this bhāṣya it is evident that Pāṇini has in the main dealt with those aspects of the subject not included in the texts dealing with the places, means and modes of articulation. Similarly Patañjali regards the three sūtras giving the definitions of the three svaras as superfluous in that they can well be known from other sources. Moreover, Pānini while enjoining *ekaśruti* by the sūtra—*ekaśruti dūrāt sambuddhau*[26]—has not defined it, since it can be known from other sources as in the case of prathamā. The sūtras—*nityam mantre*,[27] *vibhāṣā chandasi*,[28] *yajuṣyekeṣām*[29]—are rules applicable to mantras, brāhmaṇas, etc. Even in those cases, sometimes, no strict rule can be framed. Hence the sūtras like *vyatyayo bahulam*,[30] justifying the vedic forms that have been transmitted by oral tradition. The Bhāṣyakāra clearly explains in the sūtra—*tatpuruṣe kṛti bahulam*[31]—the nature and purpose of Pāṇini's Vyākaraṇa as distinct from those of the Prātisākhyas: "We should necessarily employ terms like—*bahulam, anyatarasyām, vibhāṣā, ekeṣām*—since the Vyākaraṇa Sāstra is applicable to all the Vedas; so a single rule (covering all cases) cannot be framed.[32] Thus it is clear that each Prātiśākhya deals with one recension of the Vedas while the Vyākaraṇa Śāstra treats the Vedas as a whole. Hence the impossibility of the latter making common rules for the multifarious changes in the Vedic forms. To explain these changes a mere reference to Pāṇini's

25. Keith: *A History of Sanskrit Literature*, p. 423 and Siddheshwa Varma: *op. cit.*, Introduction, pp. 21-96.
26. I. 2. 33.
27. VI. 1. 290.
28. VI. 2. 164.
29. VIII. 3. 104.
30. III. 1. 85,
31. VI. 3. 14.
32. Kielhorn's Edn., III. p. 146.

sūtras is therefore, hardly sufficient, unless they are fully borne out by the Prātiśākhyas, etc.

Even in the *Prātiśākhyas*, if the rules enjoin grammatical operations common to many śākhās, their acceptability is open to question, unless they are supported by some specific authority. Grammar too cannot render any help in that direction, since it is more comprehensive in character. To say that the *Prātiśākhyas* are unreliable serves no purpose. So in those instances decision should be arrived at only with reference to the tradition of vedic recitation, which however cannot be set aside as unreliable, as the chief aim of the *Vyākaraṇa Śāstra* and of the *Prātiśākhyas* is the safe preservation of the time-honoured method of vedic recitation.

Tradition is valuable not only in the study of the vedic language, but also in that of other languages. All the peculiarities of a language cannot be known from its grammar: for example, the roots *dā* and *śav* are given the senses of *cutting* and *going*; but on their restricted usages grammar is silent. That these usages can be known from local practices is well attested by a passage in the *Mahābhāṣya*[33] "The root *śav* is used in the senses of '*to go*' and *to change*' by the Kambojas and the Āryas."

The differences in the utterance of tones and varṇas cannot be learnt from grammar but only from experience. The Prātiśākhya sūtra[34]—*jihvāgreṇa prativeṣṭya mūrdhani ṭavarge*—explains the place and means of articulation of the *ṭavarga*. One who has not heard that sound cannot exactly understand its nature from this sūtra. Unless a man hears the sound of *ṭ*, a knowledge of its definition cannot help him in producing that sound. Only persons born in England or those who come into contact with Englishmen can pronounce English correctly. The knowledge of correct pronunciation and usage is therefore indispensable to the understanding not only of sounds but also of their definitions given in the various Prātiśākhyas.

Since the *Vyākaraṇa Śāstra*, as has been said, does not in the main deal with the nature of the three accents, we must turn our attention to the *Prātiśākhyas* and tradition. According to Indian tradition the three accents are pronounced thus: ***udātta*** in a middle tone, *svarita* in a high tone and ***anudātta*** in a low

---

33. N. S. Edn., Vol. I, p. 65.
34. *Tai. Prā.* II. 37.

tone. This practice is prevalent to-day throughout India in the recitation of the vedas with three accents. The peculiarities of each recension of a Veda are known; one syllable is uttered in one recension in the udātta accent while the same syllable is uttered in another in the anudātta accent, as in the *Vājasaneya-brāhmaṇa.* This change cannot be effected by the student of the Vedas of his own accord, but only with the authority of the relevant *Prātiśākhya* and other works on accent. A similar practice is found regarding anudātta and svarita ; but never is udātta pronounced in a low tone, or svarita in a middle tone. If it is proved that these accents are pronounced in some recensions differently from that indicated above, the question naturally arises: which of these accents is the oldest ? What the science of grammar explains regarding the position of accent in a word is closely followed in practice even at the present day. Hence in this case there is no contradiction between theory and practice.

As regards the nature of udātta and anudātta there arises no controversy; but not so in the case of svarita, since the Śāstra explains it as the combination of the two basic svaras—udātta and anudātta. It is, therefore, natural that in the pronunciation of svarita both udātta and anudātta should be heard. But the traditional practice is that svarita is pronounced in a high tone different from that of udātta and anudātta. This is well borne out by many sūtras in the *Prātiśākhyas.* One sūtra from the *Ṛg-Veda Prātiśākhya* (III-4) says that the first half mātrā or first half of svarita is higher than udātta ; the rest is anudātta but heard as udātta. Many sūtras[35] taken at random from the other *Prātiśākhyas* elucidate the nature of svarita in a slightly modified way. According to some, the first part of svarita is *udātta-sama* and the second part, *anudāttasama, anudāttatara* and *udāttasama.* The whole svarita has the high tone, which is considered to be higher than the middle tone—udātta. *Thus the difference between udātta and svarita well establishes the latter as a separate accent.*

Similarly the *Vaidikābharaṇa,*[36] a commentary on the *Taittirīya Prātiśākhya,* explains the middle tone while commenting on the sūtra—*dhṛtaḥ pracayaḥ Kauṇḍinyasya*—that the pracaya-svara is called *dhṛta* which stands exactly in the middle of

35. *Vide* the Skt. Intro., p. XVI.
36. Mysore Edn., p. 452.

*kruṣṭa*, *prathama* and *dvitīya* on one side and of *caturtha*, *mandra* and *atisvārya* on the other ; and that it is therefore an unchanging middle tone. The definitions of the three accents in the *Ṛg-veda Prātiśākhya*[37] and the *Kātyāyana Prātiśākhya*[38] also favour the above view. Uvvaṭa while commenting on these two definitions says[39] clearly that "the *svarita* accent is different from *udātta* and *anudātta* in that it has a distinct sound. It is produced by the combination of the two accents just as bronze is produced when copper and tin are alloyed."

The term *udātta* does not signify the sense of increase of tone. This is explained by the bhāṣya[40] on the sūtra—*uccairudāttaḥ*: "the words *ucca* and *nīca* are of relative significance ; one thing may be *ucca* (high) to a person while it is *nīca* (low) to another . . . . . Hence their scope is relative". Kaiyaṭa[41] and Nāgeśabhaṭṭa,[42] while commenting on that sūtra, hold the same view. Kaiyaṭa[43] further remarks that the particular accent is to be known by constant practice, like the musical tones, *ṣaḍja*, etc. This shows clearly that the accents like *udātta* stand on a par with the musical tones. Patañjali while commenting on the sūtra—*tasyādita udāttam arddhahrasvam*—interprets[44] *udātta*, the first part of *svarita*, as high tone and indirectly emphasizes that the name *udātta* in the sūtra—*uccairudāttaḥ*—is not to be regarded as significant. Thus he agrees with the Prātiśākhya view that the tone of *svarita* is higher than that of *udātta*.[45]

It may also be said that Pāṇini accepts the view that the pitch of *svarita* is higher than that of *udātta*. Though he allows two *udāttas* in a word, he does not countenance the combination of two *svaritas* owing to the high pitch of *svarita*. Further, he substitutes *udātta* for the whole *svarita*, and it may, therefore, be inferred that the *svarita* and *udātta* are of different pitch. The utterance of many sounds of middle and low tones is perhaps possible ; but it is absolutely impossible in a sound of high tone because an incessant flow of air-current exhausts the speaker

---

37. III. 1.
38. I. 31.
39. *Ṛk-Prā. bhāṣya*, p. 98 and *Kā. Prā.* Benares Edn., p. 12
40. N. S. Edn., Vol. II, p. 26.
41. *Pradīpa*, Vol. II, p. 26.
42. *Uddyota*, do.
43. *Pradīpa*, do.
44. N. S. Edn., Vol. II, p. 29.
45. *Svarasiddhāntacandrikā* (below), p. 372.

easily. On this ground the *Prātiśākhyas*[46] introduce *anudātta* between two *svaritas*. This intervening tone is called *kampa*, which is of two kinds ; the tone preceding *anudātta* is sometimes *udātta* and sometimes *svarita*. The *Taittirīya Prātiśākhya* definitely says[47] that in the Taittirīyasaṁhita the preceding tone is always *svarita*. This is fully borne out by the commentary, *Vaidikābharaṇa*,[48] which restricts the other variety of *Kampa* to the *Kūṣmāṇḍa mantras* and other recensions of the Yajurveda. The *Kampa* in the *Kūṣmāṇḍa mantras* is in practice to-day. It is highly probable that Pāṇini's sūtra—*tasyādita udāttam arddhahrasvam*—is founded upon those mantras and the recensions mentioned above. So the high pitch of svarita characterestic of modern practice is nothing but the continuance of the tradition, the persistence of which in ancient India is indubitably testified to by the Prātiśākhyas, their commentators, Pāṇini, Patañjali and his commentators.[49]

**Whitney's position examined.**

Though the nature and validity of the traditional point of view are well understood by Max Müller,[50] Whitney regards[51] *anudātta* as the normal tone, *udātta* as a high tone and *svarita* as intermediate between the two and gives the following illustration: *

This is based primarily on the misinterpretation of the Pāṇinīya sūtra—*uccairudāttaḥ*. The word *uccaiḥ* is taken by Whitney to mean high, but its real sense is the *uccaiḥsthāna* of the throat, etc., as understood by all Sanskrit grammarians. Further, the term *udātta* is regarded by him as significant, but the original authorities already quoted disallow the interpretation of *udātta* as high. Thus his basic assertion is contradicted by Indian authors. Further, if *uccaiḥ* means high, *nīcaiḥ* should mean low, but Whitney gives it the sense of normal on the basis of his interpretation of the term anudātta as non-high. Moreover, the intermediate place assigned by him to svarita is hard to understand as he himself says that svarita is a term of 'doubtful meaning'. It seems that the main cause of his confusion is his

---

46. Vide *Tai. Prā.* XIX, 3. and *Ṛk. Prā.* III, 34.
47. XIX. 4.
48. p. 459.
49. *Vide* the *Śabdakaustubha*, Benares Edn., Vol. I, p. 400.
50. *Sanskrit Grammar*, pp. 290-3.
51. J. A. O. S. Vol. V, pp. 196 ff. and *Sanskrit Grammar* (Harward Series) pp. 28-30. *See also* Macdonnel, *Vedic Grammar*, p. 448 and A. Bergaigne and V. Henry: *Manual pour etudier Le Sanskrit Vedique*, pp. 6 and 7.

* Read the following after the word " illustration " line 21

*sya*
*ma*
*Suma* *naḥ*
*na*

नड्डुहोरामुदात्तः' इति वचनात् [1]'आगमोऽप्युदात्त इत्यागमप्रकृतिस्वरयोः समावेशः प्राप्तः। एवं 'दध्ना' इत्यत्र 'नविषयस्य' इति दधिशब्दस्यादिरुदात्तः। 'अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः' इत्यनङ्लक्षणो विकारश्चोदात्त इति विकारप्रकृतिस्वरयोः समावेशः प्राप्तः। 'गोपाय' इत्यत्र समानवाक्यस्थपदात् परत्वाभावात् 'तिङ्ङतिङः' इति निघाताभावे 'भूवादयः' इति 'सनाद्यन्ताः' इति च विहितमवयवसमुदायनिष्ठं धातुसंज्ञाद्वयमादाय द्विः प्रवृत्तेन 'धातोः' इति सूत्रेणोदात्तयोः प्रकृतिस्वरयोः समावेशः प्राप्तः। 'कर्तव्यम्' इत्यत्र धातुस्वरेण आदिरुदात्तः, प्रत्ययस्वरेण द्वितीयः, तित्स्वरेणान्त्यः स्वरित इति प्रकृतिप्रत्ययतित्स्वराणां[2] समावेशः प्राप्तः। सर्वश्चायं सूत्रेणानेन निवर्त्यते[3]। तत्र [4]सतिशिष्टस्वरबलीयस्त्वस्य वक्ष्यमाणत्वात् सतिशिष्टमागमादिस्वरमेकं वर्जयित्वा पदे शिष्टमनुदात्तम्। एकग्रहणं च विधीयमानस्वरोपलक्षणमित्युक्तम्। तेन 'यातवै,', 'इन्द्राबृहस्पती' इत्यत्र द्वयोस्त्रयाणां च वर्जनम्, 'यातवै' इत्यत्र 'अन्तश्चतवै युगपत्' इत्याद्यन्तयोर्द्वयोरुदात्तविधानात्, [5]उत्तरत्र 'देवताद्वन्द्वे च' इत्युभयपदप्रकृतिस्वरविधानात्। 'ऋज्रेन्द्र' इत्युणादौ रन्प्रत्ययान्तो निपातित इति इन्द्रशब्द आद्युदात्तः। बृहस्पतिशब्दे वनस्पत्यादित्वात् द्वावुदात्तौ। [6]एवमनेकाक्षु प्रत्ययेषु धातुषु च 'सभेयो युवा', 'ऊर्णोति' इत्यादौ। 'आद्युदात्तश्च,' 'धातोः' इति सूत्राभ्यामाद्यन्तयोरुदात्तत्वे इतरेषामचां न कश्चित् स्वरो विहित इत्यनियमे[7] यः कश्चित् स्वरः स्यात्, अस्वरकस्योच्चारणायोगात्। तत्र पक्षप्राप्तानुदात्तनियमोऽपि सूत्रस्य फलम्। न चैकं सूत्रं कथं विधिनियमोभयबोधकमिति वाच्यम्, पदग्रहणसामर्थ्यादिति वक्ष्यते। 'सभाया यः', 'ढश्छन्दसि' इति ढप्रत्ययान्तः[8] सभेयशब्दः॥

'आगमस्य विकारस्य प्रकृतेः प्रत्ययस्य च।
पृथक्स्वरनिवृत्त्यर्थमेकवर्जं पदस्वरः॥'

---

1. आमागमोऽपि ङ.
2. प्रकृतिप्रत्ययस्वरयोश्च ग. घ. प्रकृतितित्स्वरयोः च.
3. निवर्तितः ख. ग. घ.
4. सतिशिष्टमक्षरमेकं वर्जयित्वा
5. इतरत्र घ.
6. एवम् घ. नास्ति।
7. •नियमेन ग. घ.
8. ढप्रत्ययान्तः क. नास्ति।

इति[1] वार्त्तिकं तु प्रयोजनदिक्प्रदर्शनपरम् । 'चत्वारः' इत्यादीनि प्रागुक्तान्येवास्य[2] उदाहरणानि ॥

स्यादेतत्—परिभाषेयं सर्वैरुदात्तस्वरितविधिभिरेकवाक्यतामापद्यत इत्युक्तम्, तथा च 'चत्वारः' इत्यत्र 'त्रिचतुरोर्जसि' इत्यस्मिन् प्रवर्तमाने तेनैकवाक्यतामापद्य [3]आदिवर्जमितरेषामनुदात्ततां गमयति । 'चतुरनडुहोः' इत्यनेन त्वेकवाक्यतामापन्ना[4] आगमवर्जमितरेषामनुदात्ततां गमयति । एवं सर्वत्र । एवं च परस्परविरोधाद्विनिगमनाविरहाच्च कथम् अयं वर्ज्य इति व्यवस्थितिरिति[5] । उच्यते—

'परनित्यान्तरङ्गापवादभावैर्व्यवस्थितेः[6] ।
सतिशिष्टत्वेन चेदं सर्वेभ्यः प्रबलं मतम् ॥'

परत्वेन व्यवस्थायाम्—'यत्पदिबद्धा', 'ग्रीवबद्धमेनम्' [7]इत्युदाहरणम् । अत्र हि 'तत्पुरुषे तुल्यार्थ' इति [8]सप्तमीपूर्वपदप्रकृतिस्वरात् [9]परत्वात् 'गतिकारकोपपदात् कृत्' इति कृदुत्तरपदप्रकृतिस्वरः । [10]अक्षशौण्डादिराद्यस्यावकाशः । इध्मसंव्रश्चना[11]दिर्द्वितीयस्य । नित्यत्वेन व्यवस्थायां मृग्यमुदाहरणम् । 'पूर्वशालाप्रियः' इत्यादावन्तरङ्गत्वेन[12] व्यवस्थेति विप्रतिषेधसूत्रे समर्थसूत्रे च भाष्ये स्थितम् । अत्र हि पूर्वा शाला प्रिया यस्येति त्रिपदबहुव्रीहौ 'तद्धितार्थोत्तरपद-' इत्युत्तरपदे परतः पूर्वयोस्तत्पुरुषत्वे तदाश्रित्य समासस्वरः बहुव्रीह्याश्रयणेन पूर्वपदप्रकृतिस्वरश्च प्राप्तः । तत्र[13] पदत्रयाश्रयबहुव्रीहिस्वरादन्तरङ्गत्वात् [14]द्व्याश्रयस्तत्पुरुषस्वरो भवति । तेन शालाशब्दे अन्त उदात्तः । इदं तु न असाधारणमुदाहरणम्,

---

1. इति प्रयोजन...वार्त्तिकम् क.
2. वार्त्तिकस्य ख. ग. घ. ङ. ज.
3. आमागमादिवर्ज- ग.
4. आपन्नः क. ख. घ.
5. इति चेत् क. ग. घ. च. ज.
6. -स्थितिः ख. ग. घ. ङ. ज.
7. इत्युदाहरणम् ख. नास्ति ।
8. सप्तमीतत्पुरुषात् परत्वात् ग.
9. परत्वात् ख. नास्ति ।
10. अक्षशौण्ड इत्यादिः ग. घ. ङ.
11. व्रश्चन इत्यादिः ख. ग. घ.
12. इत्यत्रान्तरङ्गत्वेन ग. घ. ङ.
13. तत्र ग. नास्ति ।
14. द्विपदाश्रयः ख. ग. घ. ङ.

सतिशिष्टत्वेनापि सिद्धेः। उत्तरपदे परतस्तत्पुरुषस्य बहुव्रीहिनिमित्तकत्वेन[1] तत्स्वरस्य सतिशिष्टत्वात्। अपवादत्वेन व्यवस्था तु 'आद्युदात्तश्च', 'तित्स्वरितम्[2]' इत्यादौ सुप्रसिद्धा। 'तद्वैश्वदेवस्य वैश्वदेवत्वम्' इत्यादौ सतिशिष्टत्वेन व्यवस्थितिः। अत्र हि 'वैश्वदेवत्वम्' इत्यत्राण्प्रत्ययस्य 'आद्युदात्तश्च' इति स्वरे सति पश्चादुत्पन्ने त्वप्रत्यये शिष्टः प्रत्ययस्वरस्तं बाधते, सर्वापेक्षया सतिशिष्टस्वरस्य[3] प्रबलत्वात्। [4]'कृष्णोत्तरासङ्गस्य पुत्रः कृष्णोत्तरासङ्गपुत्र इति बहुव्रीहिगर्भे तत्पुरुषेऽपवादमपि बहुव्रीहिस्वरं बाधित्वा सतिशिष्टत्वात् समासान्तोदात्तता भवति। सतिशिष्टस्वरबलीयस्त्वं च[5] ज्ञापकसिद्धमिति वार्त्तिककृन्मतम्। तथा च समर्थसूत्रे वार्त्तिकम्—'एकशितिपात्स्वरवचनं तु ज्ञापकं निमित्तस्वरबलीयस्त्वस्य' इति। युक्तारोह्यादिषु एकशितिपाच्छब्दस्य[6] पाठ इत्यर्थः। तथा हि—अस्ति[7] 'युक्तारोह्यादयश्च' इति पूर्वपदाद्युदात्तत्वविधायकं सूत्रम्। युक्तारोह्यादिषु च एकशितिपाच्छब्दः पठितः। तत्र हि[8] एकः शितिः पादे[9] यस्येति [10]त्रिपदे बहुव्रीहौ एकशब्दस्यौणादिककन्प्रत्ययान्ततया बहुव्रीहिस्वरेणैवाद्युदात्तत्वसिद्धेः तत्र पाठोऽनर्थकः। न चोत्तरपदे परतो द्वयोस्तत्पुरुषे सति समासस्वरं व्यावर्तयितुं पाठः, बहुव्रीहिस्वरस्य समासस्वरापवादत्वेनेष्टसिद्धेः। तस्मात् सतिशिष्टमवयवस्वरं[11] बाधितुं क्रियमाणोऽयं पाठः सतिशिष्टस्वरबलीयस्त्वं ज्ञापयति इति। सतिशिष्टस्वरबलीयस्त्वमेव [12]'निमित्तस्वरबलीयस्त्वेन[13] वार्त्तिके व्यवहृतम्। हरदत्तश्च युक्तारोह्यादिसूत्रे 'निमित्तस्वरबलीयस्त्वं तु सतिशिष्टत्वम्' इति[14] वदन् तयोरभेदं द्योतयामास। भाष्ये तु युक्तारोह्यादिष्वेकशितिपाच्छब्दपाठः प्रत्याख्यातः। तथा हि—उत्तरपदे परतः

---

1. -निमित्तकसतिशिष्टत्वेन ख.
2. -स्वरितः ग. घ.
3. सतिशिष्टस्य ग.
4. एवं कृष्णो- च.
5. तु ख. घ.
6. -च्छब्दपाठः ग. घ.
7. अस्ति क. ग. ज. नास्ति।
8. हि ग. घ. ङ. नास्ति।
9. पादः ख.
10. त्रिपदे ग. नास्ति।
11. अवयवतत्पुरुषस्वरम् ख. ग. घ. छ.
12. वार्त्तिके निमित्त- ङ.
13. -यस्त्वशब्देन ख. ग. घ. च. छ.
14. -त्वादिति ख. ग. घ. ङ.

एकशितिशब्दस्य[1] तत्पुरुषत्वे 'संख्यापूर्वो द्विगुः' इति द्विगुसंज्ञायाम् 'इगन्तकालकपालभगालशरावेषु द्विगौ' इति सूत्रेण इगन्तादिषु उत्तरपदेषु द्विगौ पूर्वपदं प्रकृतिस्वरम् इत्यर्थकेन इगन्ते शितिशब्दे परत एकशब्दस्य प्रकृतिस्वरे सति एकशितिपाच्छब्दे आदेरुदात्तत्वसिद्धौ किं तत्र पाठेनेति। एवं च[2] भाष्यमते सतिशिष्टस्वरबलीयस्त्वं वाचनिकमिति समर्थसूत्रे कैयटः। [3]वृत्तिकृता तु वार्त्तिकरीत्या तत्रैकशितिपाच्छब्दपाठमभ्युपगम्य भाष्योक्तरीत्या द्विगुस्वरेणेष्टसिद्धौ पुनस्तत्पाठः[4] शित्यन्तस्योत्तरपदे परे[5] द्विगुस्वरो नेति ज्ञापनाय; 'द्विशितिपात्' इत्यत्र समासस्वरेण शितिशब्दे अन्त उदात्त इति युक्तारोह्यादिसूत्रे भाष्यविरुद्धं वदता सतिशिष्टस्वरबलीयस्त्वं ज्ञापकसिद्धमेवेति स्वमतं दर्शितम्। सतिशिष्टस्वरबलीयस्त्वं न्यायसिद्धमिति [6]हरदत्तभट्टोजियज्वप्रभृतयः। तथा हि—परिभाषेयं सर्वैः स्वरविधिभिरेकवाक्यतामापद्यत इत्युक्तम्। एवं चैकस्मिन् पदे क्रमेणानेकोदात्तस्वरितविधिषु प्रवर्तमानेषु तैरेकवाक्यतामापद्य तत्तत्सूत्रविधेयस्वरवर्जं पदस्यानुदात्ततां बोधयितुं [7]प्रवर्तमाना सा पूर्वपूर्ववाक्यार्थाबाधेन[8] विरोधादुत्तरोत्तरवाक्यार्थं बोधयितुमनीशाना पूर्वपूर्वं बाधित्वैवोत्तरोत्तरं बोधयति। चरमस्तु वाक्यार्थो बाधकाभावान्न[9] केनचिद्बाध्यत इति स एवावतिष्ठत इति सतिशिष्टस्य बलीयस्त्वमिति। मीमांसकैरपि षष्ठेऽपच्छेदाधिकरणे—

'पूर्वं परमजातत्वादबाधित्वैव जायते।
परस्यानन्यथोत्पादान्नाद्याबाधेन सम्भवः॥'

इति वदद्भिः 'पूर्वबोधितवाक्यार्थविरुद्धं [10]कल्पयदुत्तरं शास्त्रं पूर्वशास्त्रं बाधते' [11]इत्ययं न्यायोऽनुसृत इति दिक्।

---

1. एकशितिपाच्छब्दस्य क.
2. एवं च क. नास्ति।
3. पदकृता घ.
4. पुनस्तत्र तत्पाठः ख. ग. घ. च.
5. परे ग. घ. ङ. च. नास्ति।
6. इति तु हरदत्त- ख.
7. प्रवृत्ता ङ.
8. -बाधनेनाविरोधात् घ.
9. बाधकत्वान्न छ.
10. अर्थं बोधयदुत्तरं ख. ग. घ. ङ. च.
11. अयम् ङ. च. नास्ति।

ननु सतिशिष्टस्वरस्य प्राबल्ये, 'योऽग्निं चिनुते', 'यौ द्वौ संसुनुतः', 'पुनीत आत्मानं द्वाभ्याम्' इत्यादौ विकरणस्वरः प्रसज्येत, सार्वधातुके परतो विकरणविधानेन तत्स्वरस्य सतिशिष्टत्वात् । सार्वधातुकस्वरश्चात्र श्रूयत इति चेत्—सत्यम् ; विकरणेभ्योऽन्यत्र सतिशिष्टस्वरबलीयस्त्वम्, 'तास्यनुदात्तेन्ङिदुपदेशात्' इति लसार्वधातुकानुदात्तत्वविधानाल्लिङ्गात् । अन्यथा परत्वाल्लकारमात्रापेक्षत्वेनान्तरङ्गत्वाच्च तिबादिषु सत्सु लकार-विशेषापेक्षस्तासिः कृत इति तत्स्वरस्य सतिशिष्टत्वेन प्राबल्ये शेष-निघातेनैव 'श्वो यज्ञे प्रयोक्तासे' इत्यादौ लसार्वधातुकानुदात्तत्वसिद्धेः किं तद्विधिनेति ॥

अत्र वार्त्तिकानि—

'विभक्तिस्वरान्नञ्स्वरो बलीयानिति वक्तव्यम्' ।

'विभक्तिनिमित्तस्वराच्च' ।

'यच्चोपपदं कृति नञ् तस्य[1] स्वरो बलीयानिति वक्तव्यम्' ।

'सहनिर्दिष्टस्य च' इति ॥

अत्र तृतीयव्यतिरिक्तानि सतिशिष्टस्वरबलीयस्त्वबाधनार्थानि[2] । तृतीयं तु कृत्स्वरबाधनार्थं नञ्स्वरप्राबल्यप्रसङ्गादिह पठितम् । तथा हि[3]—'अतिस्रः' इत्यत्र 'तिसृभ्यो जसः' इति विहितं[4] विभक्त्युदात्तं सतिशिष्टस्वरं बाधितुमाद्यं वचनम् । तेन [5]तत्र 'तत्पुरुषे तुल्यार्थ' इत्यव्ययपूर्वपदप्रकृतिस्वरेण नञुदात्तः । 'अचत्वारः' 'अनडुहः' इत्यत्र 'चतुरनडुहोरामुदात्तः' इति विहितस्य विभक्तिनिमित्तस्यामो यः स्वरस्तं बाधितुं द्वितीयम् । 'आक्रोशे नञ्यनिः' इत्यनिप्रत्ययान्ते 'अकरणि'शब्दे 'नञि' इति सप्तमीनिर्देशेन तस्योपपदत्वात्, 'गतिकारकोपपदात् कृत्' इति परत्वात् कृदुत्तरपदप्रकृतिस्वरं प्रसक्तं बाधितुं तृतीयम् । 'अव्यथी' इत्यत्र 'जिदृक्षिविश्रीण्वमाव्यथ' इति इनिप्रत्ययान्ते, 'अव्यथ' इति

---

1. तस्य......वक्तव्यम् क. नास्ति ।
2. अत्र...-बाधनार्थानि क. नास्ति ।
3. तथा हि ग. नास्ति ।
4. विहितम् ग. घ. नास्ति ।
5. अत्र ग. घ. ङ.

निपातनाद्धातुना सह निर्दिष्टस्यास्य नञः समासे सति पश्चादिनिः इति सतिशिष्टं तत्स्वरं बाधित्वा[1] नञ्स्वरो यथा स्यादिति चतुर्थमिति। 'अव्यये नञ्कुनिपातानाम्' इति वार्त्तिके निपातत्वादेव सिद्धे नञः पृथग्ग्रहणं क्वचित्तत्स्वरस्य प्राबल्यज्ञापनाय। तेन 'यच्चोपपदम्' इत्यादिवार्त्तिकद्वयं नारम्भणीयमिति 'तत्पुरुषे तुल्यार्थ' इत्यत्र कैयटः। आद्यमपि न कर्तव्यमिति तत्रैव हरदत्तः। चत्वार्यपि न कर्तव्यानीति तत्रैव[2] मनोरमायाम्॥

यत्तु स्वरमञ्जर्यां विप्रकीर्णप्रकरणेऽभिहितम्,—'अप्राणते स्वाहा', 'असतो वा एष संभूतः', 'असतः सद्ये ततक्षुः' इत्यादौ, 'प्राणते स्वाहा' 'शृण्वते स्वाहा' इत्यादाविव 'शतुरनुमो नद्यजादी' इति विभक्त्युदात्तत्वं न भवति, 'विभक्तिस्वरान्नञ्स्वरो [3]बलीयान्' इति वचनात्—इति॥

तत्तुच्छम्; समासान्तोदात्तापवादेऽव्ययपूर्वपदप्रकृतिस्वरे सति अप्राणच्छब्दादीनामन्तोदात्तत्वाभावेन 'शतुरनुमः' इति विभक्त्युदात्तत्वस्यैवात्राप्रसक्तेः, 'शतुरनुमः' इत्यत्र 'अन्तोदात्तादुत्तरपदात्' इत्यतः 'अन्तोदात्तात्' इत्यधिकारस्य सर्वसंमतत्वात्। स्वरमञ्जर्यामेव 'अनुम् यः शतृप्रत्ययः तदन्तात् [4]अन्तोदात्तात्' इति 'शतुरनुमः' इति सूत्रं व्याख्याय, अन्तोदात्तादिति किंम्? 'बिभ्रती जराम्' 'जाग्रते स्वाहा'; अत्र 'अभ्यस्तानामादिः' [5]इत्याद्युदात्तः इति प्रत्युदाहृतत्वेन पूर्वापरविरोधाच्च। 'प्राणते' इत्यत्र तु कृत्स्वरेण शत्रन्तमन्तोदात्तमिति। एतेन यथाश्रुतं स्वरमञ्जरीग्रन्थमिममाम्रेडयन् परिमलकृदपि निरस्तः॥

प्रसक्तानुप्रसक्त्यालं प्रकृतं चिन्त्यतेऽधुना।
पदग्रहणमेतस्मिन् सूत्रे किं फलवन्न वा॥

अत्र स्वरमञ्जरीकारः—'वाक्यव्यावृत्त्यर्थं पदग्रहणम्, अन्यथा वाक्येऽपि एकं वर्जयित्वा[6] इतरदनुदात्तं स्यात्' इति। [7]तत्र [8]हरदत्तः—'आद्युदात्तश्च'

---

1. बाधितुं ख.
2. तत्रैव क. नास्ति।
3. बलवान् क.
4. अन्तोदात्तात् क. नास्ति।
5. इत्यादिरुदात्तः च.
6. एकवर्जमितरत् च.
7. अत्र ग.
8. तच्चिन्त्यम् च.

'धातोः' इत्यादिभिरस्यैकवाक्यतायां प्रत्ययादावादिरन्तो वा उदात्तो भवति, तमेकं वर्जयित्वा इतरदनुदात्तमित्यर्थो भवति । तत्र च सन्निधानात् प्रत्ययप्रभृतिष्वेव [1]इतरदनुदात्तमिति लाभेन वाक्ये तदप्रसक्तेः—इति । उच्यते—

अचामेकपदस्थानां सर्वेषामनुदात्तता ।
यथा स्यादिति कर्तव्यं पदग्रहणमन्यथा ॥

प्रत्ययादिष्वनेकाक्षु प्रत्येकमनुदात्तताम् ।
एकवर्जं सूत्रमेतत् सन्निधानेन बोधयेत् ॥

ततश्च प्रत्ययादीनां प्रसज्येत पृथक्स्वरः ।
अनैयत्यनिवृत्तिश्च पूर्वोक्तो नोपपद्यते ॥

सूत्रेणैकेन नियमो विधानं च कथं भवेत् ।
पदग्रहणसामर्थ्यलभ्यमेतद्द्वयं ततः ॥

यतः पूर्वोक्तरीत्या सन्निधानाद्धातुप्रत्ययादिष्वेकैकमचं वर्जयित्वा शिष्टमनुदात्तमिति सूत्रार्थः प्रसक्तः; अत एव पदग्रहणं सर्वस्य पदगतस्य अचोऽनुदात्तत्वार्थं क्रियते । इतरथा हि प्रकृतिप्रत्यययोः पृथक्स्वरप्रसङ्गः । यत्तु स्वरमञ्जर्यामुक्तम्—'आद्युदात्तश्च', 'धातोः' इत्यादिभिरस्यैकवाक्यतायां[2] प्रत्ययादावादिरन्तो वा उदात्तो भवति । तमेकं वर्जयित्वा इतरदनुदत्तं स्यादिति हरदत्तः । तत्रैकैकस्य उदात्तविधानेन अनेकोदात्तप्रसक्त्यभावात् प्रकृतौ प्रत्यये च प्रत्येकमेकवर्जं शिष्टमनुदात्तमिति सूत्रार्थ एव न भविष्यतीति न[3] तदर्थं पदग्रहणम्—इति । तन्मन्दम्; अनेकाक्षु फगादिषु प्रत्ययेषु गोपायतीत्यादिषु धातुषु प्रातिपदिकेषु चार्थाल्लक्षणेन च बहुळमनेकोदात्तादिप्रसक्तेः । एवं 'पदग्रहणाभावे यत्र न कश्चित् स्वरो विहितः तत्रानुदात्तत्वनियमः सूत्रस्य फलम्' इति यदुक्तम्, तदपि नोपपद्यते; [4]एकेन सूत्रेण विधिनियमयोः कर्तुमशक्यत्वात् । सति पदग्रहणे तत्सामर्थ्यात् कृत्स्नस्य पदस्यानुदात्तत्वार्थं क्वचिद्विधित्वं क्वचिन्नियमत्वं

---

1. तदनुदात्तम् ङ. ग. घ. च.
2. इत्यादिभिरेकैकस्यैवोदात्तविधानेन अनेकोदात्तप्रसक्त्यभावात्
3. न घ. नास्ति ।
4. एतेन घ.

क्वचिदुभयविधित्वं च सूत्रस्याश्रीयत इति सिद्धमिष्टम् । अथ सति पदग्रहणे पदसंज्ञानन्तरमेव शेषनिघातेन भाव्यमिति कुवलशब्दात् 'ग्रामादीनां च' इत्याद्युदात्तात् गौरादित्वान्ङीषि सत्यपि पदत्वाभावात् शेषनिघाताभावेऽनुदात्तादित्वाभावात् कुवल्या विकारः कौवलमित्यत्र 'अनुदात्तादेश्च' इत्यञ् न स्यात् । कथं वा सति पदग्रहणे 'धातोः' इत्यादिषु धात्वाद्युपदेशानन्तरमेव प्रवर्तमानेषु तदेकवाक्यतया इयं परिभाषा [1]शेषनिघातं बोधयेत् ? तदा तत्र पदसंज्ञाविरहादिति चेत्—सत्यम् ; अत एव अनुपपत्त्या पदशब्दस्य [2]पदीभविष्यति लक्षणाभ्युपगम्यते । 'एङः पदान्तात्' इत्यतः[3] पदाधिकारे पुनः पदग्रहणमपि तस्य गौणत्वे लिङ्गम् । अपि च, 'एकवर्जम्' इति परीप्सायां विहितो णमुलपि तत्र लिङ्गम् । परीप्सा—त्वरा, तत्र विहितश्च णमुल् यत्रोदात्तादिर्विधीयते तत्र तत्सम-कालमेव शिष्टमनुदात्तं कर्तव्यम्, न विलम्बितमिति[4] द्योतयति । न च पदग्रहणस्य [5]पदीभविष्यति लक्षणां विना तत्संभवतीति तां कल्पयति । एवं च 'धातोः' इत्यादिभिरस्य[6] एकवाक्यतायामयमर्थो भवति—धातो-रन्त उदात्तः, तं वर्जयित्वा तद्धातुघटितस्य यावतः समुदायस्य इतः परं पदसंज्ञा भविष्यति तद्गताः सर्वे चानुदात्ताः—इति । एवं च कुवली-शब्देऽपि पदसंज्ञायाः पूर्वमेव शेषनिघाते न पूर्वोक्तदोषः । 'एकवर्जम्' इति पदं तु[7] परिभाषाप्रवृत्तिविषयप्रदर्शनाय । 'अनुदात्तं पदम्' इत्युक्तौ हि किंविषयेयं[8] परिभाषेति न ज्ञायेत । 'एकवर्जम्' इत्यनेन तु स्वरितोदात्तवर्जमिति तदर्थपर्यवसानात् तद्विधिष्वेवास्याः प्रवृत्तिरिति प्रदर्श्यते । [9]सूत्रस्य परिभाषात्वे 'एकवर्जम्' इति पदमेव लिङ्गम् । अधिकारत्वे [10]तद्वैयर्थ्यात्, तत्सूत्रविधेयानां[11] विधिसामर्थ्यादेव निघाता-प्रवृत्तेः । यद्यप्यधिकारत्वेऽपि अस्य षाष्ठस्वरे प्रतियोगमस्योपस्थितौ

---

1. शेष- ग. नास्ति ।
2. पदे क. ग.
3. इत्यत्र घ.
4. विलम्बितं कर्तव्यमिति क. विलम्बितव्यमिति ग. घ. च. ज.
5. पदे क.
6. इत्यादिभिस्तस्याः छ.
7. पदं तु ग. नास्ति ।
8. इयं ख. नास्ति ।
9. सूत्रस्यास्य ग. घ.
10. तद्वैयर्थ्यम् ख.
11. तत्तत्सूत्रविधेयानाम् ङ. च.

न कश्चिद्दोषः ; ततश्च 'एकवर्जम्' इति न कर्तव्यमिति[1] लाघवम् ; तथापि स्थलान्तरवर्तिषु 'आद्युदात्तश्च' इत्यादिष्वस्यानुपस्थानात् शेषनिघातो न स्यादिति दोषात् परिभाषात्वमाश्रितम् ॥

स्यादेतत्—यदीयं परिभाषा तर्हि 'कार्यकालं संज्ञापरिभाषम्' इति अस्यास्त्रिपादीस्थैरपि स्वरितादिविधिभिरेकवाक्यत्वे 'य॒ज्ञस्य॑ घो॒षत्', 'द॒श ह॒स्त्यां॑ अ॒ङ्गुल॑यः' इत्यादौ 'उदात्तादनुदात्तस्य' इति स्वरितमाश्रित्य शेषनिघातप्रसङ्गः। न च तस्यासिद्धत्वम्, अस्यापि तत्रोपस्थाने तदभावात् । न च सन्निपातपरिभाषया उदात्तमाश्रित्य प्रवृत्तः स्वरित उदात्तविघातकस्य शेषनिघातस्य निमित्तं न स्यादिति वाच्यम् ; स्वरविधौ सन्निपातपरिभाषाया अनित्यत्वात् अप्रवृत्तेः । अन्यथा 'अन्तोदात्तादुत्तरपदादन्यतरस्याम्', 'ह्रस्वनुड्भ्यां मतुप्' इत्यादिभिरपि स्वरे कृते शेषनिघातानापत्तेः । अपि च 'अ॒जा ह्य॑ग्नेः' इत्यादौ 'उदात्तस्वरितयोर्यणः' इति स्वरितमाश्रित्य शेषनिघातप्रसङ्गः । न [2]त्वत्र सन्निपातपरिभाषाविरोधशङ्केति[3] ॥

उच्यते—यथोद्देशपक्ष एवात्र परिभाषायामाश्रीयते, लक्ष्यानुसारात्, केषांचित् स्वरसूत्राणामसिद्धकाण्डपाठालिङ्गाच्च । तथा चास्याः परिभाषायास्त्रिपादीस्थस्वरविधिभिरेकवाक्यत्वाभावेऽस्यां कर्तव्यायां तत्रत्यस्वरितादेरसिद्धत्वान्न कश्चिद्दोषः । [4]न चैवं स्वरविधिभिरस्यैकवाक्यतेति तत्र पूर्वोक्तं विरुध्येतेति वाच्यम् ; इदानीमपि [5]तैरेकवाक्यत्वानपायात् । इयांस्तु विशेषः—कार्यकालपक्षे तैरस्याः पदैकवाक्यता, [6]यथोद्देशपक्षे वाक्यैकवाक्यता—इति । यत्तु 'गुरोरनृतोऽनन्त्यस्य' इति सूत्रे हरदत्तेनास्याः कार्यकालत्वं[7] दर्शितम्, तत् उक्तयुक्तिविरोधात् 'न मु ने' इति

1. वक्तव्यमिति ख. ग. ङ.
2. ह्यत्र ख. ग. घ. ङ. च. छ.
3. शङ्केति चेत् क. घ.
4. नचैवं यथोद्देशपक्षाश्रयणे षाष्ठ... वाक्यता नेति वाच्यम् क. ङ.
5. तैः ग. नास्ति ।
6. यथोद्देशपक्षे तु ग.
7. कार्यकालपक्षत्वम् क.

सूत्रस्थस्वोक्तिविरोधाच्चोपेक्ष्यम् । तत्रत्यं भाष्यमपि तथाविधमापाततः प्रवृत्तमिति मन्तव्यम् । एतच्च तत्रैव स्पष्टयिष्यते ॥

यत्तु अस्यां परिभाषायां यथोद्देशपक्षाश्रयणे 'यतोऽनावः' इति सूत्रं ज्ञापकमिति मनोरमायामुक्तम् तच्चिन्त्यम् ; अयं हि तस्याशयः— 'यतोऽनावः' इति हि[1] सूत्रं यत्प्रत्ययान्तस्य द्व्यचः 'तित्स्वरितम्' इत्यन्त्यस्वरितत्वे प्राप्ते आद्युदात्तत्वार्थमारभ्यते । तच्चात्र कार्यकालपक्षाश्रयणेऽनर्थकम्, सत्यप्याद्युदात्तत्वे शेषनिघाते 'उदात्तादनुदात्तस्य' इति तस्य स्वरितत्वे तमाश्रित्य पुनः शेषनिघाते चान्त्यस्वरितस्यैवावस्थानेनाद्युदात्तत्वस्य क्वाप्यश्रवणात्—इति । एतच्च[2] वार्तम् ; अन्त्यस्य निघाते सति यत्र 'नोदात्तस्वरितोदयम्' इति निषेधात्, सन्नतरेण 'उदात्तस्वरितपरस्य सन्नतरः' इति सूत्रविहितेन बाधितत्वाद्वा, 'उदात्तादनुदात्तस्य' इति नान्त्यस्य[3] स्वरितत्वम्, किं तु सन्नतरः, तत्राद्युदात्तश्रवणार्थं तदारम्भात्, तत्रान्त्यस्य स्वरितत्वाभावेन तदादायाद्यस्य निघाताप्रवृत्तेः । श्रूयते चैवम्—'गायते न देयं गाथा हि', 'न देय ँ सोऽग्निः' इत्यादौ । यदपि तव्यतस्तित्त्वमस्यां परिभाषायां यथोद्देशपक्षाश्रयणे लिङ्गम् । तद्धि 'कर्तव्यम्' इत्यत्रान्तस्वरितत्वार्थम् । अत्र कार्यकालपक्षाश्रयणे च तित्त्वं विनाप्येतत् सिद्धम् ; तव्यस्य प्रत्ययस्वरेणाद्युदात्तत्वे शेषनिघाते 'उदात्तादनुदात्तस्य' इति[4] स्वरितत्वे तमाश्रित्य शेषनिघातादिति, तदप्यत एव निरस्तम् ; यत्र तव्यस्योदात्तस्वरितपरत्वम् 'कर्तव्यं यजुः' इत्यादौ तत्र सन्नतरेण 'उदात्तादनुदात्तस्य' इति स्वरितत्वस्य बाधितत्वेन आद्युदात्तस्य अन्ते सन्नतरस्य च श्रवणप्रसङ्गात् । ततश्च तं वारयितुं तित्त्वमित्युपपत्तेः कथमिदं[5] तज्ज्ञापकमिति[6] दिक् ॥

---

1. हि ग. नास्ति ।
2. एतच्च वार्त्तिकमन्त्यस्य ख. च. ज.
   एतच्च सूत्रम् ङ.
   एतच्च अन्त्यस्य. क. घ
3. नास्य ग.
4. इति तस्य स्वरितत्व ग. घ. च.
5. इदम् ग. घ. नास्ति ।
6. इत्येषा दिक् ग. घ. ङ. च. छ. ज.

## [६] ॥ एकादेश उदात्तेनोदात्तः ॥ (8—2—5)

'परिभाषेयम्' इति 'न मु ने' इति सूत्रे कैयटहरदत्तौ। सा च 'एकादेशः' इति लिङ्गात् 'आद्गुणः' इत्याद्येकादेशविधिषु उपतिष्ठते। 'उदात्त-स्वरितयोः' इति पूर्वसूत्रात् 'अनुदात्तस्य' इत्यनुवर्तते। तेनायमर्थः—आदचि गुण एकादेशो भवति, उदात्तानुदात्तयोरेकादेशो गुणो भवन् उदात्तो भवति—इति। एवमेकादेशशास्त्रान्तरेऽप्यूह्यम्। उदात्तानुदात्तयोरेकादेश आन्तर्यात् स्वरितः प्रसज्येतेति वचनम्। 'जातौ विश्वस्य भुवनस्य गोपौ'। 'ब्रह्म यच्छाप'। 'अवरुन्धतेऽसत्रम्'। 'जात'शब्दः क्तप्रत्ययान्तः प्रत्ययस्वरेणान्तोदात्तः। सुबनुदात्तः। अतो[1] 'वृद्धिरेचि' इत्येकादेश उदात्तः। 'यच्छ' इति 'तिङ्ङतिङः' इति निघातः। 'रुन्धते' इत्यत्राप्येवम्। 'उपसर्गाश्चाभिवर्जम्' इति 'अप' इत्यस्य[2] आदिरुदात्तः। 'असत्रम्' इत्यत्र अव्ययपूर्वपदप्रकृति-स्वरेणादिरुदात्तः। तयोरुभयोः[3] एकादेश उदात्तः। उदात्तेनेति किम्? अनुदात्तयोः स्वरितानुदात्तयोर्वा एकादेश उदात्तो मा भूत्। 'मा त्वान्वक्'। 'अथ क्वास्याहवनीयः'। अनुदात्तयोरेकादेश आन्तर्यादनुदात्तः। स्वरितानुदात्तयोः स्वरितः। अनुदात्तस्येति किम्? उदात्तस्वरितयोरेकादेश उदात्तो मा भूत्। उदात्तयोस्त्वेकादेश आन्तर्यादुदात्त एव। यथा—'मैत्रावरुणीत्याह'॥

ननु 'अनुदात्तस्य' इति पदमुदात्तस्वरितयोरेकादेश उदात्तो मा भूदित्येव-मर्थमित्ययुक्तम्, तस्याप्युदात्तत्वदर्शनात्। यथा—'सवनमुखे सवनमुखे कार्येति', 'अथोक्थ्योऽथातिरात्रः', 'याज्यैवैनम्'। 'कार्य'शब्दः 'ऋहलोर्ण्यत्' इति ण्यत्प्रत्ययान्तः [4]तित्स्वरितेनान्तस्वरितः। ततश्चाबनुदात्तः। तयोरेकादेश आन्तर्यात् स्वरितः। तस्य 'इति'शब्देकारेण उदात्तेनैकादेशः। उक्थ्यशब्दः[5] तित्स्वरेणान्त्यस्वरितः। स ह्युक्थशब्दात्[6]

---

1. ततः ग.
2. उपेत्युपसर्गे ख. ग. घ. ङ.
3. तदुभयत्र ख. ग. घ.
5. उक्थ्यशब्दे ग. घ.
6. उक्थ्यशब्दः क. ख. ङ. च. छ. ज.

'त्र्चो निष्केवलोक्थ' इति स्वार्थे यति निष्पन्नः। ततः सुप्प्रत्ययः। रुत्वो॰॰ते। सुप्त्वादुकारोऽनुदात्तः[1]; हलः स्रंसनधर्मित्वेन तत्स्थाने स्रंसनधर्मिणोऽनुदात्तस्यैवोकारस्यान्तर्यात् प्रवृत्तेर्वा। ततः 'आद्गुणः' इत्येकादेशः पूर्ववत् स्वरितः। पश्चात् 'अथ'शब्दाकारेण तस्य 'एङः पदान्तादति' इत्येकादेशः। 'अथ'शब्दश्च[2] 'निपाता आद्युदात्ताः' इति आद्युदात्तः। 'याज्य'शब्दोऽपि ण्यत्प्रत्ययान्तः स्वरितान्तः। ततश्चापि पूर्ववत् याज्याशब्दोऽपि अन्तस्वरितः। तत आङुपसर्गेणैकादेशः। 'चजोः कुधिण्ण्यतोः' इति कुत्वं तु याज्याशब्दे न भवति; 'यजयाच-' इति निषेधात्। प्रातिशाख्येऽपि 'उदात्तमुदात्तवति' (तै. प्रा. अ. १०. सू. १०) इत्येकादेशोदात्तत्वसूत्रे अनुदात्तस्येति न विशेषणं दत्तम्। उदात्तधर्मवति पूर्वत्र परत्र वा स्थिते य एकादेशः स उदात्तमापद्यत इति[3] सूत्रार्थः। बह्वृचा अपि 'क्वा॑वरम्' इत्यादौ स्वरितोदात्तयोरेकादेशमुदात्तमधीयते। बह्वृचप्रातिशाख्येऽपि

'उदात्तवत्येकीभाव उदात्तं सांध्यमक्षरम्'

इत्यत्रानुदात्तग्रहणं [4]न कृतम्। तस्मादनुदात्तस्येत्यनुवृत्तौ [5]लक्ष्यप्रातिशाख्यविरोध इत्यभिप्रेत्य स्वरमञ्जर्याम् अनुदात्तस्येत्यनुवृत्तिः[6] अनाश्रिता। एतदेव 'न सुब्रह्मण्यायाम्' इति सूत्रस्थकौस्तुभे उक्तम्[7]। अत्र सिद्धान्तकौमुदीमनोरमयोश्चानुमोदितम् इति चेत्—[8]तदुभयं चिन्त्यम्; वृत्तिहरदत्तग्रन्थभाष्यकैयट[9]विरोधात्। तथा हि—प्रकृतसूत्रे वृत्तिहरदत्तग्रन्थयोरनुदात्तानुवृत्तिः स्पष्टमभिहिता। 'न सुब्रह्मण्यायाम्' इति सूत्रभाष्य[10]वार्त्तिकपर्यालोनयाप्यनुदात्तानुवृत्तिः प्रतीयते। तत्र हि

---

1. सुप्त्वादनुदात्तः क. ख.
2. इति शब्दोऽथशब्दश्च ख. ग. घ. ङ. च. छ. ज.
3. इत्युक्त- ङ.
4. नोक्तम् क.
5. उक्तलक्ष्ये प्रातिशाख्ये ख. ग. घ.
6. अनुवृत्तिरत्र ख. ग. घ. छ.
7. उक्तम् ख. ङ. नास्ति।
8. इति तदुभयं क. ख. ग. ङ. च. छ. ज.
9. -वार्त्तिकविरोधात् ग. घ. ज.
10. -वार्त्तिक- क. नास्ति।

'तस्यादित:' इत्यादिनवसूत्र्युत्कर्षस्य प्रयोजनमभिदधद्वार्त्तिकं 'स्वरितो-दात्तार्थं च' इति । 'न सुब्रह्मण्यायां स्वरितस्य तूदात्त:' इति यदिदं सुब्रह्मण्यानिगदे स्वरितस्योदात्तत्वं विधीयते तदर्थमपि नवसूत्र्युत्क्रष्टव्या । अनुत्कर्षे 'इन्द्रागच्छ' इत्यादौ 'उदात्तादनुदात्तस्य' इति योऽयं स्वरित आकार: तस्यासिद्धत्वेन स्वरितस्योदात्तविधानं न स्यादिति वार्त्तिकाशय:[1] । अत्र च वचनबलात् स्वरितस्य[2] सिद्धत्वं भविष्यतीत्याशङ्क्याभिहितं भाष्ये 'य: सिद्ध: स्वरित: तदर्थमेतत् स्यात्, यथा सुब्रह्मण्योम्' इति । अयमाशय:—सुब्रह्मणि साधु: सुब्रह्मण्य: । 'तत्र साधु:' इति यत्प्रत्यय: । तित्स्वादन्त: स्वरित: । ततष्टापा सह एकादेश आन्तर्यात् स्वरित: । ततो निपातेन 'ओं'शब्देन 'ओमाङोश्च' इति पररूपम् । तच्चोदात्तस्वरितयो: स्थाने भवदान्तर्यात् स्वरितात्मकम् । [3]तस्य असिद्धत्वाभावात् तदर्थं 'स्वरितस्य तूदात्त:' इति वचनं स्यात्—इति वार्त्तिकाभिप्राय इति । एतच्चात्रानुदात्तानुवृत्तिं ज्ञापयति । अन्यथा 'ओमाङोश्च' इति पररूपस्य उदात्तस्वरितस्थानिकस्य प्रकृतसूत्रेणैवो-दात्तत्वसिद्धौ 'स्वरितस्य तूदात्त:' इति वचनस्य कथं तदर्थता स्यादिति । उक्तश्चायं भाष्याशय: कैयटेन दर्शित इति तस्याप्येतदनुमतम् । नन्वनु-गुणलक्ष्याभावात् उदाहृतलक्ष्यविरोधाच्च सर्वोऽप्ययं ग्रन्थ आपातत इति कल्प्यत इति चेत्—न ; लक्ष्याभावस्तावत् कुतोऽवगत: ? उक्तशाखा-द्वयेऽनुपलम्भादिति चेत्—तत् किं शाखाद्वयमेव व्याकरणस्य विषय: ? येन तत्रानुपलम्भात् तदभावो निर्णीयेत । न हीदानीं तद्भिन्नास्व-परिमितासु शाखासु भाषायां वा काप्युदाहृतभाष्यवार्त्तिकानुगुणलक्ष्यं नास्तीति पितामहेनापि निश्चेतुं शक्यम् । पश्यामश्च परिदृश्यमान-लक्ष्यविरुद्धमर्थं परिकल्प्य तत्साध्यं लक्ष्यं शाखान्तरीयमुदाह्रियमाणं भाष्यकृता । तद्यथा—'कर्मधारये निष्ठा' इति सूत्रे 'श्रेण्यादय: कृतादिभि:' इति प्रतिपदोक्तकर्मधारयस्य ग्रहणम्, तेन महानिरष्टशब्दे पूर्वपदप्रकृतिस्वर उक्तसूत्रेण नेति 'महान् व्रीह्यपराह्ण' इत्यत्र भाष्ये स्थितम् । इदं च परिदृश्यमानलक्ष्यविरुद्धम्, 'वारुणं दशकपालं

1. वार्त्तिककार: ग.
2. स्वरितस्य क. नास्ति ।
3. तस्य स्वरितस्य ग. घ.

महानिरष्टा दक्षिणा समृद्धयै' इत्यादौ पूर्वपदप्रकृतिस्वरदर्शनात् । उदाहृतं च भाष्ये 'महानिरष्टो दक्षिणा दीयते' इति शाखान्तरीयं वाक्यम् । तथा उलूकशब्दस्य 'यदुलूको वदति' 'इत्थादुलूकः' इत्यादावाद्युदात्तपाठदर्शनाच्छान्दसमाद्युदात्तत्वम् । लोके तु 'लघावन्ते' इति लक्षणवशान्मध्योदात्ततेति 'खण्डिकादिभ्यश्च' इति [1]सूत्रे भाष्ये कौस्तुभे च दर्शितम् । सूत्रकारश्च 'न भूवाक्चिद्दिधिषु' इति 'पत्यावैश्वर्ये' इति प्राप्तं[2] पूर्वपदप्रकृतिस्वरं निषेधति । अधीयते च भूशब्दे प्रकृतिस्वरम् 'भूपतये स्वाहा' 'अहं भूपतिः' इत्यादौ । एवं कार्तकौजपादिषु याज्यानुवाक्याशब्दं पूर्वपदप्रकृतिस्वरार्थं पठति[3] । 'समानी याज्यानुवाक्ये भवतः' इत्यादौ चाकस्मिकमन्तस्वरितत्वं दृश्यते । एतादृशानि सूत्राणि बहूनि सुप्रसिद्धान्येव । न ह्येतावतां [4]सूत्राणामापाततः प्रवृत्तिः कल्प्या । यदि च शाखान्तरविषयत्वेन [5]भाषाविषयत्वेन च सूत्राणामुपपत्तिः, अस्मदादिपरिदृष्टानि तु कतिपयानि लक्ष्याणि प्रातिशाख्यादिभिर्बहुलग्रहणाद्वा साधनीयानीत्युच्यते, तर्हि प्रकृतेऽपि दीयतां दृष्टिः । अत एव लक्ष्यविरोधोऽपि निरस्तः । न च भाषायां स्वरनियमो नेति मन्तव्यम् ; मनोरमादिष्वेव 'भाषायां [6]स्वरनियमो नेति भ्राम्यन्तः परास्ताः' इत्यसकृदभिधानात् । स्वरविधौ छन्दोऽधिकाराभावात् । 'विभाषा भाषायाम्' इत्यादिस्वरसूत्राणामानर्थक्यप्रसङ्गाच्च । तस्मात् त्रिचतुरविरुद्धलक्ष्यदर्शनेन भाष्यवार्त्तिकाद्यन्यथाकरणमतिसाहसमित्युपेक्ष्यम् ॥

अथास्य परिभाषात्वे किं मानं ? किं च तत्फलम् ? ।
लक्ष्याणि साधयेदेव स्वतन्त्रोऽपि ह्ययं विधिः ॥

अत्रोच्यते सनुमकस्य प्रतिषेधः शतृस्वरे ।
प्रमाणं परिभाषात्व इति प्रोवाच कैयटः ॥

---

1. इत्यत्र भाष्यादौ ख. ङ. छ. ज.
2. प्रापितम् ख.
3. इति ग. अधिकम् ।
4. सूत्राणामपि ङ.
5. भाषाविषयत्वेन च क. ख. नास्ति ।
6. स्वरानुरोधः ख.

अयादिषु स्वरस्यास्य सिद्धत्वं तु प्रयोजनम् ।

अन्तोदात्तादनुमः शत्रन्तात् परस्या नद्या अजादिविभक्तेश्चोदात्तविधायकः 'शितुरनुमो नद्यजादी' इति स्वरविधिः शतृस्वरः । तत्र 'अनुमः' इति सनुम्कस्य प्रतिषेधोऽस्य परिभाषात्वे प्रमाणम् । स हि निषेधो 'वक्ष्यन्ती॑' इत्यादौ नद्युदात्तत्वाभावाय क्रियते । अत्र च स्यप्रत्ययस्य प्रत्ययस्वरेणोदात्तत्वे शतुरदुपदेशात् परत्वाल्लसार्वधातुकानुदात्तत्वे च तयोरेकादेशस्वरेण शत्रन्तस्यान्तोदात्तत्वमाश्रित्य शतृस्वरप्रवृत्तिः । 'शतुरनुमः' इत्यत्र 'अन्तोदात्तात्' इत्यनुवृत्तेः । यदि चेयं परिभाषा न स्यात् तदा एकादेशस्वरस्य 'पूर्वत्रासिद्धम्' इति शतृस्वरेऽसिद्धत्वेन अन्तोदात्ताभावादेव [1]अत्र शतृस्वराभावे 'अनुमः' इति प्रतिषेधो निष्फलः स्यात्[2] । न [3]ह्येकादेशस्वरं विना शत्रन्तं सनुम्कं च कचिदन्तोदात्तमस्ति, यदर्थः प्रतिषेधः स्यात् । [4]अथापि क्रियमाणोऽयं निषेधः स्वसाफल्यायास्य परिभाषात्वं ज्ञापयति । तथा हि—'आद्गुणः' इत्यादिभिरस्य विधेरेकवाक्यत्वेनासिद्धकाण्डानन्तर्गतत्वादेकादेशस्वरस्यासिद्धत्वाभावे 'वक्ष्यन्ती॑' इत्यादिव्यावृत्तये नुमो[5] निषेधः कर्तव्य इति । परिभाषात्वे फलं तु अयादिष्वस्य स्वरस्यासिद्धत्वाभावः । स्वतन्त्रविधित्वे हि 'त इमं यज्ञमवन्तु त इदं क्षेत्रम्' इत्यादौ प्रातिपदिकान्तविभक्त्योरुदात्तानुदात्तयोरेकादेशे तत्स्वरस्यायादेशे कर्तव्येऽसिद्धत्वं स्यात् । ततश्चान्तर्याभिनिर्वृत्तस्वरितबुद्ध्यैव प्रवर्तमानोऽयादेश आन्तर्यात् स्वरितः स्यात् । एवम् 'तावेवास्मै' इत्यादावावादेशोऽपि । इष्यते चोभयत्रोदात्तत्वम । तथा 'तेऽब्रुवन्', 'सोऽब्रवीत्', 'तेऽमृतत्वमकामयन्त,' 'गाङ्गेऽनूपे' इत्यादौ पूर्ववत् प्रातिपदिकान्तविभक्त्योरेकादेशस्वरस्य 'एङः पदान्तादति' इति द्वितीये एकादेशे कर्तव्येऽसिद्धत्वेन द्वितीय एकादेशः पूर्ववदान्तर्यात् स्वरित एव स्यात् । इष्यते च 'स्वरितो वानुदात्ते पदादौ' इत्युत्तरसूत्रेण 'तेऽब्रुवन्' इत्यादौ

1. अत्र घ. नास्ति ।
2. भवति छ.
3. न हि ग. घ. नास्ति ।
4. तथापि, तथा च ग.
5. अयं ख. ग. घ. छ.

स्वरितत्वम्, 'गाङ्गेऽनूपे' इत्यादौ [1]च पाक्षिकोदात्तत्वम्। गङ्गाशब्दादणि गाङ्गशब्दः प्रत्ययस्वरेणान्तोदात्तः। ततः सप्तम्येकवचनेनैकादेशः। अनुगता आपो यस्मिंस्तदनूपम्। 'ऋक्पूः' इत्यकारः समासान्तः। 'ऊदनोः' इत्यूकारः। 'अनोरप्रधानकनीयसि' इत्युत्तरपदस्यान्तोदात्तत्वात् अनुदात्तादिरयम्। एवम् 'जागरिष्यते स्वाहा' इत्यादौ 'लटः सद्वा' इति शतरि 'स्यतासी' इति स्यप्रत्ययेऽदुपदेशाल्लसार्वधातुकानुदात्तत्वे एकादेशे एकादेशस्वरे च 'शतुरनुमः' इति विभक्त्युदात्तत्वं न स्यात्। एकादेशस्वरस्यासिद्धत्वेन शत्रन्तस्यान्तोदात्तत्वाभावात्। तथा च[2] 'उत्सृजन्त्यनुसवनम्', 'स्वामेव तद्योनिं प्रविशन्ति' इत्यत्र शविकरणाददुपदेशात् परस्य लसार्वधातुकस्यानुदात्तत्वे तदकारेण शविकरणाकारस्योदात्तस्यैकादेशे तत्स्वरस्यासिद्धत्वाद्यथाक्रमं शेषनिघातः तिङ्निघातश्च न स्यात्। ततश्चाद्योदाहरणे धातोरप्युदात्तत्वं द्वितीयस्मिन् एकादेशस्वरश्च प्रयोगे श्रूयेत। परिभाषात्वे च सर्वत्रैकादेशस्य[3] सिद्धत्वात्, उक्तस्थले सर्वमिष्टं सिध्यतीति अयादिषु स्वरस्य सिद्धत्वं परिभाषात्वफलम्। एवं च 'एकादेशस्वरोऽन्तरङ्गः सिद्धो भवतीति [4]वक्तव्यम्, अयवायावेकादेशशतृस्वरैकानुदात्तसर्वानुदात्तार्थम्' इति वार्त्तिकं न कर्तव्यम्। उक्तान्येव वार्त्तिकोदाहरणानि। अवादेशे उदाहरणं नेति भाष्यम्। अयादेशस्य तु 'पौर्णमास्या आज्यं निर्वपति' इत्यादिकमुदाहरणम्। 'पूर्णमासादण् वक्तव्यः' इति अणन्तान्ङीपि 'पौर्णमासी'शब्द उदात्तनिवृत्तिस्वरेणान्तोदात्तः। ततो ङेप्रत्ययस्याडागमे उदात्तस्य ङीपो यणादेशे 'उदात्तयणो हल्पूर्वात्' इत्याट उदात्तत्वे आडेकारयोरुदात्तानुदात्तयोरेकादेशस्वरस्य सिद्धत्वात् आयादेश उदात्तो भवति। अन्यथा स्वरितः स्यादिति वार्त्तिकाशयः। अन्तरङ्गत्वादाडेकारयोरनुदात्तयोरेव पूर्वमेकादेशः, तत 'उदात्तयणो हल्पूर्वात्' इति तस्योदात्तत्वमिति न्याय्यमिति[5] नेदं प्रयोजनमिति भाष्यकृतः। यद्यप्यस्य स्वतन्त्रविधित्वम् [6]अङ्गीकृत्य 'अनुमः' इति निषेध एकादेशस्वरस्य

1. च क. नास्ति।
2. च ग. घ. नास्ति
3. एकादेशस्वरस्य ग. घ.
4. वाच्यम् घ.
5. इति न्याय्यमिति घ. नास्ति।
6. स्वीकृत्य ग ०

सिद्धत्वे लिङ्गमिति कल्पनेऽपि न कश्चिद्दोषः, उक्तवार्त्तिकमपि न कर्तव्यमिति तुल्यम्, तथापि परिभाषात्वकल्पनमेव ज्यायः, एवं सत्यसिद्धत्वशङ्काया [1]अप्यनुन्मेषात् ।

'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्'

इति न्यायादिति कैयटाशयः । न च परिभाषात्वे बहिरङ्गस्याप्येकादेशस्वरस्य सिद्धत्वप्रसङ्गः । ततश्च 'यजतेऽप्यन्यम्', 'छिनत्तीति होवाच' इत्यादौ पदद्वयापेक्षबहिरङ्गैकादेशस्वरस्य सिद्धत्वे तमाश्रित्य शेषनिघातप्रसङ्ग इति वाच्यम् ; 'असिद्धं बहिरङ्गमन्तरङ्गे' इत्येव तस्यासिद्धत्वादिति । एवं च एकादेशस्वरविधेः त्रिपादीपठने फलं चिन्त्यम् । न चानुदात्तस्येत्यपेक्षणाय तदिति वाच्यम्[2] ; 'अनुदात्तस्य च' इत्यनन्तरपठनेऽपि तत्सिद्धेः । अपि चैवम् उदात्तग्रहणमप्यत्र न कार्यम्, 'कर्षात्वतः' इत्यतस्तदधिकारादित्यपरमप्यनुकूलम् । एवं सति स्वतन्त्रविधित्वमप्यस्य सुवचमिति ॥

## [७] स्वरितो वानुदात्ते पदादौ ॥ (8—2—6)

पदादावनुदात्ते सति उदात्तेन तस्य य एकादेशः स स्वरितो वा भवति । पक्षे पूर्वेणोदात्तः । भाषायामैच्छिको विकल्पः । वेदे तु योगस्य व्यवस्थितत्वाद्व्यवस्थितो विकल्पः । तत्रोकारयोरेकादेशे 'एङः दान्तादति' इत्येतद्विषये च स्वरितत्वम्, इतरत्रोदात्तत्वमिति तित्तिरिशाखायां व्यवस्था । तथा च प्रातिशाख्यसूत्राणि—

'ऊभावे च' (तै. प्रा. अ. १०. सू. १७) । उदात्तादुकारात् परस्यानुदात्तोकारस्य ऊभावे—ऊकाररूपैकादेशे—सति य ऊकारः स स्वरित इत्यर्थः ॥

---

1. एवानुन्मेषात् ग. घ.
2. इति वाच्यम् ख. ग. घ. नास्ति ।

'तस्मिन्ननुदात्ते पूर्व उदात्तः स्वरितम्' (तै. प्रा. अ. १२. सू. ९) यस्याकारस्य 'एङः पदान्तादति' इति पूर्वरूपं विहितं व्याकरणे, तस्य प्रातिशाख्ये लोपो विहित इत्युक्तम् । तस्मिन्ननुदात्ते लुप्ते सति यः पूर्व उदात्तः स स्वरिततामापद्यत इत्यर्थः ॥

'उदात्तमुदात्तवति' । व्याख्यातमिदं सूत्रम् ।

एवं शाखान्तरेऽपि यथायथं व्यवस्था बोध्या । 'सून्नीयमिव', 'सू द्राता', 'तेऽब्रुवन्', 'आदित्योऽस्मिन्' । इतरत्रोदात्तत्वम् । यथा 'सविता प्रार्पयतु', 'दिवीव चक्षुः' । अनुदात्त इति किम् ? 'यन्नैकां रशनाम्' । पदादाविति किम् ? 'इमौ देवौ' । उदात्ते विकल्पिते आन्तर्यादेव पक्षे स्वरिते सिद्धे स्वरितग्रहणमफलम् । न चैवम् 'तेऽमृतत्वमकामयन्त', 'गाङ्गेऽनूपे' इत्यादावान्तर्यात् प्राप्तस्य स्वरितस्यासिद्धत्वाभावात्तमाश्रित्य शेषनिघातः स्यादिति वाच्यम् ; बहिरङ्गत्वेन तस्य [1]असिद्धत्वसम्भवात् । 'कन्यानूपे' इत्यादौ स्वरितानुदात्तयोरेकादेशे आन्तर्यात् स्वरिते शेषनिघाताय बहिरङ्गत्वेनासिद्धत्वस्य [2]अवश्याश्रयणीयत्वाच्चेति ॥

## [ ८ ] ॥ युष्मदस्मदोर्ङसि ॥ (6—1—211)

अनयोरादिरुदात्तो भवति ङसि । 'मम[3] नाम तव च जातवेदः' । 'युष्यसिभ्यां मदिक्' इति मदिक्प्रत्ययान्ते[4] युष्मदस्मदी प्रत्ययस्वरेणान्तोदात्ते । ताभ्याम्[5] 'युष्मदस्मद्भ्यां ङसोऽश्' इति अशादेशः । 'तव[6] ममौ ङसि' इति तयोर्मपर्यन्तस्य तवममादेशौ । 'शेषे लोपः' इत्यन्तलोपः । 'अनुदात्तौ सुप्पितौ' इत्यनुदात्तेन विभक्त्यवरेण प्रकृत्यकारस्य 'अतो गुणे' इति पररूपैकादेशः ।

---

1. असिद्धं बहिरङ्गमन्तरङ्गे इत्यसिद्धत्वसम्भवात् क. छ.
2. अवश्याङ्गीकर्तव्यत्वाच्च ख.
3. 'मम नाम प्रथमं जातवेदः' ग.
4. मदिक्प्रत्ययान्तौ युष्मदस्मदौ
5. ताभ्यां ङसः ग. घ.
6. तव ममौ.........पररूपैकादेशः घ. नास्ति ।

तस्यैकादेशस्वरे प्राप्ते आद्युदात्तत्वाय[1] अयमारम्भ इति हरदत्तः। यदपि[2] शेषे लोपष्टिलोपः इति पक्षः तदपि 'अनुदात्तस्य च यत्रोदात्तलोपः' इति विभक्तेरुदात्तत्वे तवममादेशाकारेणानुदात्तेन पूर्ववदेकादेशे एकादेशस्वर एव प्राप्त इति सर्वथैकादेशस्वरापवादोऽयं योगः। ङसि किम्? 'यस्याहमस्मि पुरोहितः'॥

## [९] ॥ ङयि च ॥ (6—1—212)

युष्मदस्मदोरादिरुदात्तो भवति ङेप्रत्यये परतः। 'तुभ्यं ता अङ्गिरस्तम'। 'मह्यं त्वादुः'। 'ङे प्रथमयोः' इति ङेरमादेशः। '[3]तुभ्यमह्यौ' इति युष्मदस्मदोस्तुभ्यमह्यावादेशौ। अत्रापि पूर्ववदेकादेशस्वरः प्राप्तः। योगविभागो यथासङ्ख्यशङ्कानिवृत्त्यर्थः। 'युष्मदस्मदोर्ङसङयोः' इत्युक्तौ हि यथासङ्ख्यशङ्का स्यात्॥

## [१०] ॥ तिङो गोत्रादीनि कुत्सनाभीक्ष्ण्ययोः ॥ (8—1—27)

आष्टमिकमिदं सूत्रं विभज्य 'तिङो गोत्रादीनि' इत्ययमंशो विधित्वेन, 'कुत्सनाभीक्ष्ण्ययोः' इत्ययमंशः परिभाषात्वेन व्याख्यातो भाष्यादौ। तत्र परिभाषांशे पूर्वभागात् 'गोत्रादीनि' इत्यनुवर्तते। तेनायमर्थः—इह शास्त्रे तिङो गोत्रादीनि कुत्सनाभीक्ष्ण्यविषयाण्येव ग्रहीतव्यानि—इति। तेन 'चनचिदिव गोत्रादितद्धिताम्रेडितेष्वगतेः' इत्यादौ एतत्सूत्रपूर्वभागे[4] च कुत्सनाद्यर्थकस्यैव गोत्रादेर्ग्रहणं सिद्धम्। एकयोगत्वे तु प्रकृतसूत्र एव तथाविधस्य [5]ग्रहणं स्यात्, न तु 'चनचिदिव' इत्यादौ, इति योगविभागेन परिभाषात्वमाश्रितम्। एवं च 'तिङो गोत्रादीनि' इति विधीयमानं तिङः

---

1. आद्युदात्तार्थः ङ.
2. यदा तु ग. घ.
3. तुभ्यमह्यौ ङयि। अत्रापि ख. ग. घ. ज.
4. सूत्रभागे ग.
5. गोत्रादेर्ग्रहणं ङ.

परेषां गोत्रादीनामनुदात्तत्वम्, 'पचति गोत्रम्', 'जल्पति गोत्रम्' इत्यादौ यत्र भोजनार्थं गोत्रं ज्ञापयति[1] तत्रैव भवति।

'न भोजनार्थं स्वे विप्रः कुलगोत्रे निवेदयेत्'

इति मनुस्मरणेन[2] अत्र कुत्सनप्रतीतेः। 'जल्पति गोत्रमाचार्येण पृष्टः' इत्यादौ न[3] भवति, कुत्सनाद्यभावात्। एवं चनादिशब्देषु परतः अगतेः परस्य तिङन्तस्य 'तिङ्ङतिङः' इति प्राप्तनिघात-निषेधः 'चनचिदिव' इ[4] क्रियमाणः उक्तरीत्या कुत्सनादिप्रतीतावेव भवतीति॥

## (५) हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवत्॥

परिभाषेयम् 'समासस्य' इति सूत्रे वार्त्तिककृता पठिता। फलं तु 'समासस्य' इत्यन्तोदात्तत्वस्य 'विश्वामित्रजमदग्नी' इत्याद्यजन्तेष्विव 'अवभृथयजूंषि' इत्यादौ हलन्तेऽपि प्रवृत्तिः। अन्यथा योऽत्र समासस्यान्तः स नोदात्तधर्मयोग्यः, यश्च योग्यो नासौ समासान्त इति हलन्तेषु न समासस्वरः स्यात्। यद्युच्येत—उदात्तादिशब्दा इहाज्विशेषे संकेतिताः, ततश्च 'अष्टन आ विभक्तौ' इत्यादौ हलः स्थाने आकारविधिवदन्त्यस्य हलः स्थाने उदात्ताद्यज्विशेषविधिः सम्भवति—इति। एवमपि नेष्टसिद्धिः; अन्त्यस्य हलः स्थाने उदात्तप्रसङ्गात्। अचः स्थाने चोदात्तादेशस्येष्यमाणत्वात्। व्यञ्जनस्याविद्यमानवद्भावे तु हलन्तेष्वप्यजेव शास्त्रदृष्ट्या अन्त इति सिद्धमिष्टम्। एवम् 'धातोः' इत्यन्तो-दात्तत्वस्य 'यजतेऽप्यन्यम्' इत्यादौ हलन्तधातौ[5] प्रवृत्तिरपि फलम्। अन्यथा भूप्रभृतिष्वजन्तेष्वेव तत् स्यात्। [6]एवम् 'लिति' इति प्रत्ययात् पूर्वस्योदात्तत्वम् 'जनतामिष्यन्' इत्यादौ 'ग्रामजन' इति तल्प्रत्य-यान्ते यथा भवति तथा 'सदने सीद' इत्यादौ ल्युडन्ते हल्व्यवधानेऽपि

1. ज्ञापयतीत्यर्थः क. ङ. छ. ज.
3. मनुस्मरणात् ग.
3. इत्यादौ तु न ङ.
4. इति सूत्रेण ख. ग. घ.
5. धातौ ग. नास्ति।
6. एवम् घ. नास्ति।

भवति, तस्याविद्यमानवत्त्वात् । तथा 'ञ्नित्यादिर्नित्यम्' इति यथा 'औद्दालकिरकामयत' 'तदिष्टीनाम्' इत्यादाविञन्ते क्तिन्नन्ते चाजादौ भवति, एवम् 'सात्यकामिरुवाच', 'वृष्टिर्वै विश्वधायाः' इत्यादौ हलादावपि भवति[1], व्यञ्जनस्याविद्यमानवत्त्वात्[2] अत्रापि अच एवादित्वादिति ॥

अथ 'स्वरविधौ व्यञ्जनमविद्यमानवत्' इत्येवास्तु, हलिति किमर्थम् ? उच्यते । तथा सति 'मरुत्वाँ इन्द्र' इत्यादौ 'ह्रस्वनुड्भ्यां मतुप्' इति मतुबुदात्तत्वप्रसङ्गः, मरुच्छब्दतकारस्याविद्यमानवत्त्वेन[3] मतुपोऽत्र ह्रस्वात् परत्वात् । 'हल्स्वरप्राप्तौ' इत्युक्तौ तु उक्ततकारस्यात्र स्वराप्रसङ्गेन विद्यमानेन तेन व्यवधानेन ह्रस्वात् परत्वाभावान्न दोषः[4] । ननु[5] हल्ग्रहणे सति 'दधि' इत्यादौ 'उदात्तादनुदात्तस्य' इति स्वरितत्वं न स्यात्, धकारेण व्यवधानात् । तस्यात्र स्वरप्राप्त्यभावेनाविद्यमानवत्त्वाभावात् । तथा अनुदात्तादेरन्तोदात्ताच्च यदुच्यते तद्व्यञ्जनादेर्व्यञ्जनान्ताच्च न स्यात् । ततश्च कुवल्या विकारः 'कौवलम्' इत्यत्र 'अनुदात्तादेः' इत्यञ् न स्यात् । 'औदुम्बरम्' इत्यादावेव तु स्यात् । 'अन्तोदात्तादुत्तरपदात्' इति विभक्त्युदात्तत्वं 'परमवाचा' इत्यादौ न स्यात् । 'परमभूभ्याम्' इत्यादावेव तु स्यात् । 'स्वरविधौ व्यञ्जनम्' इत्युक्तौ तु स्वरसम्बन्धी भवति सर्वोऽप्ययं विधिरिति व्यञ्जनस्याविद्यमानवत्त्वात् सिध्यतीष्टमिति चेत्—न ; 'उदात्तादनुदात्तस्य' इत्यत्र—न विद्यते उदात्तो यस्मिन् स सङ्घातोऽनुदात्तः, तस्योदात्तात् परस्य स्वरितः—इति व्याख्यानाद्याद्यदोषाभावात् । 'दधि' इत्यत्र [6]धिशब्दस्य तादृशसमुदायस्योदात्तात परत्वात् । न चैवं सङ्घातस्य स्वरितप्रसङ्गः । 'आदेः परस्य' इति 'धि'शब्देकारे तत्प्रवृत्तेः । 'हल्स्वरप्राप्तौ' इति धकारस्याविद्यमानवत्त्वात् । 'स्वरविधौ सङ्घातः कार्यी' इति परिभाषाभ्युपगन्तृमते तु वचनमेवात्र इष्टसिद्ध्यर्थमाश्रयणीयमित्याहुः । नापि द्वितीयो दोषः ; 'नोत्तरपदेऽनुदात्तादौ'

---

1. भवति घ. नास्ति ।
2. अविद्यमानत्वेन घ.
3. अविद्यमानवद्भावेन क. ख. ग.
4. न दोषः ग. नास्ति ।
5. अथ ख. ग. घ. ङ. छ. ज.
6. दधिशब्दस्य क.

इति देवताद्वन्द्वोभयपदप्रकृतिस्वरं प्रतिषिध्य 'अपृथिवीरुद्रपूषमन्थिषु' इति तत्प्रतिषेधाल्लिङ्गात् अनुदात्तादेः[1] उच्यमानस्य व्यञ्जनादावपि प्रवृत्तेः। इयं च परिभाषा 'यतोऽनावः' इति नौप्रतिषेधात् भाष्ये ज्ञापिता। स हि प्रतिषेधः 'नौवयोधर्म' इति यति नाव्यमित्यत्राद्युदात्तत्वाभावाय क्रियते। यदि च व्यञ्जनमविद्यमानवन्न स्यात्, तर्हि योऽत्रादिर्नकारः नासौ स्वरयोग्यः, यश्च योग्योऽकारः नासावादिरिति प्रतिषेधोऽनर्थकः स्यात्। वृत्तिकारस्तु 'स्वरविधौ व्यञ्जनमविद्यमानवत्' इत्येव परिभाषामशिश्रियत्। 'ह्रस्वनुड्भ्यां मतुप्' इत्यत्रेयं[2] परिभाषा नाश्रीयते। तेन 'मरुत्वान्' इत्यत्र न दोष इत्याह। अत्र च परिभाषानाश्रयणं वाचनिकमेवेति हरदत्तः। परिभाषेयमनित्येति 'अर्मे चावर्णं द्व्यच्त्र्यच्' इति सूत्रे स एव। तत्र हि वृत्तौ 'अवर्णमिति किम्? बृहदर्मम्' इति प्रत्युदाहृतम्। तत्र व्यञ्जनस्याविद्यमानवद्भावात् तद्दोषतादवस्थ्यं आशङ्कमानो हरदत्तः 'अनित्यत्वात् 'स्वरविधौ व्यञ्जनमविद्यमानवत्' इत्यत्र न प्रवर्तते' इत्याह। एवं चानित्यत्वादेव 'मरुत्वान्' इत्यादावियं परिभाषा न प्रवर्तत इति न तदर्थं वचनं कर्तव्यमिति बोध्यम्। अर्मशब्दे परेऽवर्णान्तं द्व्यच्त्र्यच् पूर्वपदमाद्युदात्तमिति 'अर्मे च' इत्यादिसूत्रार्थः॥

## (प) स्वरविधौ सप्तम्यस्तदन्तसप्तम्यः॥

स्वरविधौ सप्तम्यो यस्याः प्रकृतेः परत्वेनोत्पन्नाः तत्प्रकृत्यन्तस्य[3] कार्यित्वबोधिकाः, न तु तत्प्रकृत्यर्थे परतः पूर्वस्य बोधिकाः। यथा 'उपोत्तमं रिति' इत्यत्र 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति परिभाषया रिति परतः पूर्वस्य कार्यित्वं प्राप्तम्। अनया तु परिभाषया रिदन्ते उपोत्तममुदात्तमिति रिदन्तस्य कार्यित्वं बोध्यते। तेन जुहोतेर्बाहुलकादधिकरणेऽनीयर्प्रत्ययेन निष्पन्नस्य हवनीयशब्दस्य आङा सह गतिसमासे आहवनीयशब्दे कृदुत्तरपदप्रकृतिस्वरेण ईकारस्योदात्तत्वं सिद्धम्। इतरथा 'त्र्यादीनामन्त्यमुत्तमं तत्समीपमुपोत्तमम्' इति वचनात् अत्र रिति प्रत्यये परतः पूर्वत्रोपोत्तमाभावान्नायं स्वरः स्यात्। न चानीयरो रित्त्ववैफल्यम्। बह्वक्षु

1. अनुदात्तायादेः ङ.
2. इत्यत्र चेयं ग. घ. ङ.
3. तत्प्रकृत्यर्थान्तस्य ख. ग. घ. छ. ज.

धातुषु चरितार्थत्वात् । न चैवं 'चतुरः शसि' इत्यत्रापि शसन्तस्य कार्यित्वे तस्यान्तोदात्तप्रसङ्गः । ततश्च 'चतुरः पदः प्रतिदधत्' इत्यादौ मध्योदात्तत्वं न स्यादिति वाच्यम् । 'चतुरः शसि' इति पृथग्योगकरणसामर्थ्यात् अत्रोक्तपरिभाषाप्रवृत्तेः । अन्यथा 'ऊडिदं पदाद्यप्पुम्रैद्युभ्यः' इत्यत्रैव 'द्युचतुर्भ्यः' इति चतुर्शब्दमपि पठेत् । न चैवमत्र 'असर्वनामस्थाने' इत्यनुवृत्तेः शसतिरिक्तस्यापि असर्वनामस्थानस्योदात्तत्वप्रसङ्गः ; इष्टत्वात् । 'षट्त्रिचतुर्भ्यो हलादिः' इति सिद्धान्तेऽपि चतुरो हलादिविभक्तेरुदात्तत्वविधानात् । 'झल्युपोत्तमम्' इत्यनेन तु झलादौ विभक्तौ तद्बाध्यत[1] इति । इदानीमपि तत्तुल्यम् । तस्मात् पृथग्योगकरणात् 'चतुरः शसि' इत्यत्रेयं[2] न प्रवर्तत इति सिद्धम् । इयं च परिभाषा 'भीह्रीभृहुमदजनदरिद्राजागरां प्रत्ययात् पूर्वम्' इति सूत्रे पूर्वग्रहणाद्भाष्ये ज्ञापिता । तत्र हि 'पिति' इति सप्तमीनिर्देशादेव 'तस्मिन्निति' परिभाषया पूर्वस्य कार्यित्वे सिद्धे पुनः पूर्वग्रहणं पिदन्तस्य कार्यित्वव्यावृत्त्यर्थं क्रियमाणम् 'स्वरविधौ सप्तम्यस्तदन्तस्य कार्यित्वबोधिकाः' इति ज्ञापयति । न चैवम् 'रितः' 'चङः' इति [3]सर्वत्र षष्ठ्येवोच्चार्यताम्, तदाक्षिप्तविशेषणेन 'येन विधिः' इति तदन्तविधिनैव तदन्तस्य कार्यित्वसिद्धेरिति वाच्यम् ; लाघवाय सप्तमीनिर्देशादित्याहुः । इदं च ज्ञापकं यत्र तदन्तसप्तम्यां परसप्तम्यां च फलभेदः 'रिति' इत्यादौ तत्रैव[4] । '[5]चतुरः शसि' इत्यत्र तु न फलविशेष इति न तत्र भवतीति केचित्[6] । सार्वत्रिकमेवेत्यपरे ॥

## (प) स्वरविधौ संघातः कार्यी ॥

स्वरविधौ यः समुदायः कार्यभाक्त्वेन षष्ठ्यादिना निर्दिष्टः स एव कार्यी, न तु 'अलोऽन्त्यस्य' इत्यादिना तदेकदेशः ।

---

1. बाध्यत इतीदमपि तुल्यम् ग.
2. इत्यत्र नेयं परिभाषेति ख. ग. घ. ङ. छ.
3. सर्वत्र स्वरविधौ ख. ग. घ. छ. अधिकम् ।
4. तद्विषयमेव ख. ग. घ. ङ. छ.
5. 'ञ्नित्यादिर्नित्यम्' इत्यादौ तु उभयथा न फलविशेषः ख. ग. घ.
6. केचित् घ. नास्ति ।

एवं च 'अलोऽन्त्यस्य' 'आदेः परस्य' इति स्वरविधौ न प्रवर्तेत इत्युक्तं भवति । इयमपि परिभाषा 'भीह्री' इत्यत्रैव प्रत्यय-ग्रहणेन भाष्ये ज्ञापिता । तत्र हि 'पिति पूर्वम्' इत्येतावतैव प्रत्ययात् पूर्वस्योदात्तत्वं [1]सिद्धम्, पितः प्रत्ययस्याव्यभिचारात् । क्रियते तु पुनः प्रत्ययग्रहणं प्रत्ययात् पूर्वस्य चोदात्तत्वं यथा स्यात्, सङ्घातस्य मा भूदिति । यदि च स्वरविधौ सङ्घातः कार्यी भवति[2] तन्निवृत्त्यर्थमिह प्रत्ययग्रहणमर्थवद्भवतीति भवति प्रत्ययग्रहणं ज्ञापकम् । सङ्घातस्य च तत्र कार्यित्वे पर्यायेणोदात्तत्वं[3] 'बिभेति' इत्यत्र प्रसज्येतेति कैयटः । प्रयोजनं च 'आसीनश्शयानः' इत्यादौ 'चित्स्वरात्तास्यादिस्वरो विप्रतिषेधेन' इति वार्त्तिकोक्तविप्रतिषेधोपपत्तिरिति 'तास्यनुदात्तेत्' इत्यत्र 'भीह्री' इत्यत्र च भाष्यकैयटादौ स्थितम् । तथा हि— 'आसीनः' 'शयानः' इति शानजन्ते 'चितः' इत्यन्तोदात्तापेक्षया परत्वात् 'तास्यनुदात्तेन्ङिददुपदेशात् लसार्वधातुकम्' इति लसार्वधातुकानुदात्तत्वं भवतीत्युक्तविप्रतिषेधवार्त्तिकाशयः । अयं च विप्रतिषेधः 'स्वरविधौ सङ्घातः कार्यी' इति परिभाषाभावे नोपपद्यते । 'आसीनः' इत्यादौ 'चितः' इत्यन्तस्योदात्तत्वम्, 'अदुपदेशात्' इति पञ्चमीनिर्देशात् 'तस्मादित्युत्तरस्य' 'आदेः परस्य' इति लसार्वधातुकस्यादेरनुदात्तत्वमिति भिन्नविषयत्वेनाविरोधादुभयोः प्रवृत्तिसम्भवात् । न च 'लसार्वधातुकम्' इत्यत्र षष्ठीनिर्देशाभावात् 'आदेः परस्य' इत्यस्य कथं प्रवृत्तिः इति वाच्यम्, 'अदुपदेशात्' इति पञ्चम्या 'लसार्वधातुकम्' इति प्रथमायाः षष्ठीप्रकल्पनात् । 'आमि सर्वनाम्नः' इत्यत्र सर्वनाम्न इति पञ्चम्या आमीति सप्तम्याः षष्ठीप्रकल्पनवत् । न च षष्ठीप्रकल्पनं[4] सप्तम्यन्तस्येति नियमः, मानाभावात् । 'दिवादिभ्यः' इति पञ्चमी शबिति प्रथमायाः षष्ठीं प्रकल्पयतीति भाष्याच्च । तस्मात् स्वरविधौ सङ्घातस्य कार्यित्वाभावे उक्तरीत्या विप्रतिषेधोऽयमनुपपन्नः । तस्य कार्यित्वे चोपपद्यते । तदानीम् 'आदेः परस्य' इत्यस्याप्रवृत्त्या 'आसीनः'

---

1. सिद्धमपि ततः पूर्वस्याव्यभिचारात् ख.
2. भवति तदा ङ.
3. पर्यायेणान्तोदात्तत्वं क.
4. -प्रत्यापत्तिः ख. -प्रक्लृप्तिः छ.

इत्यादावानस्य[1] सर्वस्यानुदात्तत्वं प्राप्तम् । 'चितः' इति चान्तोदात्तत्वमिति तयोरेकविषयत्वेन विरोधात् । यत्तु 'लसार्वधातुकमनुदात्तम्' इति सामानाधिकरण्येनान्वयात् तत्रत्यस्य सर्वस्याचोऽनुदात्तत्वं सिध्यति[2] । अनुदात्तत्वं च 'चादयोऽनुदात्ताः' इत्यादिवत् । ततश्च स्वरविधौ सङ्घातस्य कार्यित्वाभावेऽपि विप्रतिषेध उपपन्न इति, तदेतन्निरस्तम् । 'तस्मादित्युत्तरस्य' इति षष्ठीप्रक्लृप्त्या[3] सामानाधिकरण्यायोगात् । स्वरविधौ सङ्घातस्य कार्यित्वादेव 'किं धातोरन्त उदात्तः, आहोस्वित् आदिः ?' इति भाष्यम्, 'धातोरन्त उदात्त इति चेत्' इत्यादि वार्त्तिकं च 'धातोः' इति सूत्रस्थं सङ्गच्छते । यदि 'अन्तः' इति वर्तते 'कर्षात्वतः' इत्यतः तदा अन्त उदात्त इति पक्षः, अथ निवृत्तं तदा क्रमानुल्लङ्घनात् आदिरुदात्त इति पक्ष इति[4] भावस्तयोस्तत्र कैयटेन दर्शितः । एतच्च सङ्घातस्य कार्यित्वाभावे न घटते । 'अन्तः' इत्यस्य निवृत्तावपि 'अलोऽन्त्यस्य' इत्यन्त्यस्यैवोदात्तता स्यादिति पक्षान्तरानुन्मेषात् । सङ्घातस्य कार्यित्वादेव 'कर्षात्वतः' इत्यत्र अन्तग्रहणं कृतम् । अन्यथा 'अलोऽन्त्यस्य' इत्येव सिद्धेस्तद्वैफल्यात् । एवं च 'कर्षात्वतः' इति सूत्रे यत् हरदत्तेनोक्तम्—'अलोऽन्त्यस्य' इति सिद्धे अन्तग्रहणमुत्तरार्थम् —इति, यच्च तदेव भाष्यरत्नावल्यामनूदितम्, यच्च 'तित्स्वरितः' सूत्रे तव्यप्रत्यये 'अलोऽन्त्यस्य' इत्यन्तः स्वरित इति स्वरकौमुद्यामुक्तम्, यदपि मनोरमायाम् 'भीह्री' इत्यत्र 'न लुमताङ्गस्य' इत्यत्र कौस्तुभे च—'भीह्री' इत्यत्र पूर्वग्रहणाभावे तदन्तस्य कार्यित्वे प्रत्ययान्तानां भ्यादीनामुदात्त इति अलोऽन्त्यपरिभाषया प्रत्ययान्त एवोदात्तः स्यात्—इत्युक्तम्, यच्च 'अनुदात्तं सर्वमपादादौ' इत्यत्र वार्त्तिकं 'सर्ववचनमन्नादेरनुदात्तार्थमिति चेत् ल्युटि प्रतिषेधात् सिद्धमलोऽन्त्यप्रसङ्गस्तु' इत्यादि, यच्च तद्विवरणभाष्यं[5], यदपि कैयटहरदत्तयोस्तत्र तदनुसरणम्, यच्च 'अधुना' इति सूत्रे—इदमोऽशभावो धुना च प्रत्ययः इति पक्षे 'ऊडिदम्' इत्यादिना विभक्तिस्वरः, स च 'आदेः परस्य' इत्यादेरिति

---

1. इत्यत्रासीनस्य सर्वानुदात्तत्वम् ग.
2. सिद्धमिति ग. घ.
3. प्रतिपत्त्या ख.
4. पक्ष इति क. नास्ति ।
5. तद्विवरणपरं भाष्यम् ग. घ. ङ.

मध्योदात्तत्वम् 'अधुना' शब्दस्य—इति हरदत्तेनोक्तम्, तेषामेतेषां 'सङ्घातः कार्यी' इति परिभाषाविरोधः कथमुद्धर्तव्य इति [1]विपश्चिद्भि-श्चिन्तनीयम् । अत्र[2] केचिदाहुः—परिभाषेयं मास्तु, फलाभावात् । न चोक्तविप्रतिषेधोपपत्तिः फलम् ; 'तास्यनुदात्तेत्' इत्यत्र 'कर्षात्वतः' इत्यतः अन्तग्रहणस्य, 'षट्त्रिचतुर्भ्यो हलादिः' इत्यत आदिग्रहणस्य चानुवृत्त्या तास्यादिभ्यः परस्य लसार्वधातुकस्यादिरन्तश्चोदात्त इति व्याख्यानात् लसार्वधातुकस्य सर्वस्यानुदात्तत्वप्राप्तौ विनापि परिभाषां विप्रतिषेधोपपत्तेः । यदि तु[3] लसार्वधातुकस्य क्वचिद्बह्वच्त्वशङ्का तदा 'झल्युपोत्तमम्' इत्यत उपोत्तमग्रहणमप्यनुवर्तितव्यम्[4] । एवं चाने-नैवाभिप्रायेण सर्वोऽप्ययं ग्रन्थः प्रवृत्त इति न कश्चिद्विरोधः । 'धातोः' इत्यादिसूत्रस्थभाष्यादयस्तु प्रौढिवादप्रवृत्ता इति । अत्र पक्षे 'भीह्री-' इत्यत्र प्रत्ययग्रहणमफलम्, 'कर्षात्वतः' इत्यत्रान्तग्रहणस्य, 'तास्यनुदात्त-' इत्यत्रानुवृत्तिः[5] फलम् । अनेनैवाभिप्रायेण तत्र हरदत्तेनोक्तम्—'अलोऽन्त्यस्य' इति सिद्धेऽन्तग्रहणमुत्तरार्थमिति ॥

॥ इति परिभाषाप्रकरणम् ॥

———

1. विद्वद्भिः ग. घ. ज.
2. अत्र ग. घ. ङ. नास्ति ।
3. च ग. घ. ङ.
4. अपि तत्रानुवर्त्यम् ग. घ. ङ. ज.
5. अनुवृत्तिः ग. घ. नास्ति ।

## ॥ अथ प्रत्ययस्वरप्रकरणम् ॥

इत्थं प्रदर्शितं संज्ञापरिभाषमथोच्यते ।
अपेक्षितत्वात् सर्वत्र संहितागोचरः स्वरः ॥

### [११]. उदात्तादनुदात्तस्य स्वरितः ॥ (8—4—66)

उदात्तात् परस्यानुदात्तस्य स्वरितः स्यात् संहितायाम् । 'यज्ञस्य घोषदसि' । 'कर्मणे वाम्' । 'यजयाचयतविच्छप्रच्छरक्षो नङ्' इति नङ्प्रत्ययान्तो यज्ञशब्दः प्रत्ययस्वरेणान्तोदात्तः । ततः सुबनुदात्तः । कृत्वो 'मनिन् सर्वधातुभ्यः' इति मनिन्प्रत्यये कर्मन्शब्दो नित्स्वरेणाद्युदात्तः । ततः सुबनुदात्तः । शेषनिघातः । तयोरनेन स्वरितत्वम् । न च तमाश्रित्य शेषनिघातः शङ्क्यः, यथोद्देशपक्षाश्रयणेन 'अनुदात्तं पदम्' इति परिभाषायास्त्रिपाद्यामप्रवृत्तेः इत्युक्तत्वात्[1] । 'अग्निमीळे' इत्यादौ पदकाले नायं स्वरितः । 'तयोर्य्वावचि' इति सूत्रादत्र 'संहितायाम्' इत्यनुवृत्तेः । अत एव—पुरोहितमिति पुरः ऽ हितम्—इत्यादाववग्रहेऽपि नायं स्वरितः । परसन्निकर्षाभावेन तत्र संहिताविरहात् । अत एव 'प्रत्युष्टमिति प्रति ऽ उष्टम्' इत्यादाववग्रहे न यणादेशः । यद्यपि—

'संहितैकपदे नित्या नित्या धातूपसर्गयोः ।
नित्या समासे'

इत्यादिवचनात् समासे संहिता नित्या, तथापि अवग्रहे पदकारैः अनुक्रियमाणरूपाविनाशाय संहिता न विवक्षितेत्याहुः । बह्वृचास्तु[2] 'पुरोहितम्' इत्यादाववग्रहेऽपि [3]हितशब्दं स्वरितं पठन्ति । तत्तत्प्रातिशाख्य वचनादिति[4] बोध्यम् ॥

---

1. अप्रवृत्तेरुक्तत्वात् ग. घ. ङ.
2. तु ग. नास्ति ।
3. हिशब्दं ग.
4. प्रातिशाख्यविशेषवचनात् ग. घ. ज,

## [१२] ॥ नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम् ॥ (8—4—67)

उदयशब्दः परशब्दपर्यायः प्रातिशाख्यादिषु प्रसिद्ध इत्याहुः । उदात्ते स्वरिते वा[1] परत उदात्तात् परस्य अनुदात्तस्य स्वरितो न स्यात् । गार्ग्यादीनां तु मते स्यादेव । भाषायामैच्छिकौ भावाभावौ । वेदे तु व्यवस्थितौ । तत्र तैत्तिरीयके उदात्तस्वरितपरत्वे न भवत्येव स्वरितः । तत्प्रातिशाख्ये 'उदात्तात् परोऽनुदात्तः स्वारितम्' (तै. प्रा. अ. १४. सू. २९) इत्युक्त्वा 'नोदात्तस्वरितपरः' (तै. प्रा. अ. १४. सू. ३१) इति सर्वथा निषेधात् । 'इ॒षे त्वो॒र्जे त्वा॑' । 'यो॑ऽस्य॒ स्वो॑ऽग्निः' । [2]अत्र 'उदात्तस्वरितपरस्य सन्नतरः' इति वक्ष्यमाणः सन्नतरादेशः । एवं शाखान्तरेऽपि तत्प्रातिशाख्यानुरोधात्[3] व्यवस्था बोध्या । अत्र यद्यपि नञ्द्वयाभावेऽपि 'उदात्तस्वरितोदयं गार्ग्यकाश्यपगालवानामेव' इति नियमाश्रयणादिष्टसिद्धिः, तथापि 'गार्ग्यादीनामुदात्तस्वरितोदयमेव' इति विपरीतनियमं वारयितुं नञ्द्वयादरः[4] । 'नोदात्तस्वरितयोः' इति वक्तव्ये उदयशब्दः[5] मङ्गलार्थं प्रयुक्तः । गार्ग्याद्यनेकमहर्षिग्रहणमपि मङ्गलार्थमेव ॥

## [१३] ॥ स्वरितात् संहितायामनुदात्तानाम् ॥ (1—2—39)

स्वरितात् परेषामनुदात्तानां संहितायामेकश्रुतिः स्यात् । एकश्रुतिः प्रचय[6] इति पर्याय इत्युक्तम् । अनुदात्तानामिति जातौ बहुवचनम् । तेनैकस्य द्वयोर्बहूनां च एकश्रुतिर्भवति । 'दी॒क्षि॒त॒वा॒दं॑ वदति' । अत्र 'धातोः' इति धात्वकार उदात्तः । शप्तिपौ पित्त्वादनुदात्तौ । तत्र शबकार 'उदात्तादनुदात्तस्य' इति स्वरितः । तत एकस्य अनुदात्तस्यैकश्रुतिः । 'अग्नाविष्णू

---

1. च ग. घ.
2. अथ॒ क्व॑ तानू॒नप्त्रम् ङ.
3. अनुसारात् ख. छ. ज.
4. नञ्द्वयारम्भः ख.
5. -शब्दः शास्त्रान्ते ग. घ.
6. प्रचयपर्याय इत्युक्तम् ग.
. प्रचय इत्युक्तम् घ.

सजोषसा' । अत्र आद्यस्य आमन्त्रितस्य षाष्ठिकेन 'आमन्त्रितस्य' इत्यनेन आदिरुदात्तः । तत उत्तरस्य पूर्ववत् स्वरितः । ततः 'उभयोर[1]नुदात्तयोरेकश्रुतिः' । 'इमं मे गङ्गे यमुने सरस्वति' । इदंशब्दः ''फि[2]षोऽन्त उदात्तः' इत्यन्तोदात्तः । फिषिति प्रातिपदिकस्य प्राचां संज्ञा । ततः सुबनुदात्तः । त्यदाद्यत्वम् । अमि पूर्वः । एकादेशस्वरः । मेशब्दः 'तेमयावेकवचनस्य' इति अस्मच्छब्दादेशः सर्वानुदात्तः, तत्र 'अनुदात्तं सर्वमपादादौ' इत्यधिकारात् । तस्य पूर्ववत् स्वरितः । ततः परेषां गङ्गेप्रभृतीनां त्रयाणामामन्त्रितानाम् 'आमन्त्रितस्य च' इत्याष्टमिकेन सर्वानुदात्तत्वम् । अत्र बहूनामेकश्रुतिः । न च द्वितीयादीनां आद्यादिना व्यवधनादेकश्रुत्यसम्भवः, स्वरितात् परत्वाभावादिति वाच्यम्; अनुदात्तत्वजातेः स्वरिताव्यवहितत्वात् । 'अनुदात्तानाम्' इति जातौ बहुवचनाश्रयणात् । ननु सर्वत्रात्र 'उदात्तादनुदात्तस्य' इति त्रिपादीस्थसूत्रविहितस्य स्वरितस्य प्रथमाध्यायपठितप्रकृतसूत्रेण ऐकश्रुत्ये कर्तव्ये असिद्धत्वेन स्वरितात् परत्वाभावः । न च 'स्वरितात्' इत्याश्रयणात् सिद्धत्वम्; 'क्वास्थाहवनीयः' इत्यादौ सिद्धस्वरितस्थले तस्य चारितार्थ्यात्[3] । 'किमोऽत्' इत्यत्प्रत्यये 'क्वाति' इति तस्मिन् परतः किमः क्वादेशे च क्वशब्दः । तत्र अत्प्रत्ययस्य 'तित्स्वरितः' इति स्वरितः । स च[4] षाष्ठत्वात् सिद्धः इति चेत्[5]—सत्यम्; 'तस्यादितः' इत्यादिनवसूत्र्याः प्रथमगताया 'नोदात्तस्वरितोदयम्' इत्यतः परत्रोत्कर्षस्य भाष्यादौ ज्ञापितत्वेन तन्मध्यपतितस्य प्रकृतसूत्रस्यापि 'उदात्तादनुदात्तस्य' इत्यतः परत्वेन तत्स्वरितस्य प्रकृतसूत्रं प्रत्यसिद्धत्वाभावात् । एतच्चोत्तरत्र स्फुटीकरिष्यते । अथ संहिताग्रहणमनर्थकम् । न च 'इमं मे गङ्गे' इत्यादौ पदकाले एकश्रुत्यभावाय तत्; 'स्वरितात्' इति पञ्चमीनिर्देशेन स्वरिताव्यवहितानुदात्तस्यैव एकश्रुतिविधानात् । पदकाले च कालेन व्यवधानेन

---

1. द्वयोः छ.
2. फिट् । फिटो- ङ. ज.
3. चरितार्थत्वात् ग. घ. ङ.
4. च घ. नास्ति ।
5. इति चेत् ग. घ. ङ. छ. नास्ति ।
6. व्यत्ययेन क.

तदभावात् । सत्यम् ; 'अन्यत्र पञ्चमीनिर्देशे कालो न व्यवधायकः' इति ज्ञापनाय संहिताग्रहणम् । तेन 'तिङ्ङतिङः' इति निघातः पदपाठे 'वायवः । स्थ', 'अग्निम् । ईळे' इत्यादौ भवति, वस्नसादयश्च युष्मदस्मदादेशा इति हरदत्तादयः । 'उदात्तादनुदात्तस्य' इति स्वरितत्वं तु संहिताधिकारान्न पदकाले भवतीत्युक्तम् ॥

## [१४] ॥ उदात्तस्वरितपरस्य सन्नतरः ॥ (1—2—40)

उदात्तः स्वरितो वा यस्मात्[1] तस्यानुदात्तस्य सन्नतरः—अनुदात्ततर आदेशो भवति । स्थान्युदात्तापेक्षः प्रकर्षः । अत्र[2] वृत्त्यादिग्रन्थपर्यालोचनया उदात्तस्वरितान्यतरपरकस्यानुदात्तस्य सर्वस्याप्यादेशः सन्नतरः प्रतीयते । प्रातिशाख्ये तु उदात्तस्वरितप्रचयानामन्यतमपूर्वकस्यैव तथाविधस्यानुदात्तस्य विक्रमसंज्ञाविधिपूर्वकं सन्नतरत्वं विहितम् । तथा हि—

॥ 'स्वरितयोर्मध्ये यत्र नीचं स्यादुदात्तयोर्वान्यतरतो वा उदात्तस्वरितयोः स विक्रमः' (तै. प्रा. अ. १९. सू. १) ॥ ''अन्यतरतो वा' इत्यस्य स्वरितोदात्तयोर्वा इत्यर्थः' इति त्रिभाष्यरत्नम् । तथा च स्वरितयोः उदात्तयोः स्वरितोदात्तयोः उदात्तस्वरितयोर्वा मध्ये योऽनुदात्तः स विक्रमसंज्ञ इत्यर्थः ॥

॥ 'प्रचयपूर्वश्च कौण्डिन्यस्य' (तै. प्रा. अ. १९. सू. २) ॥ चकारात् 'उदात्तस्वरितान्यतरपरकः' इति लभ्यते । तथाविधः प्रचयपूर्वकश्चानुदात्तो विक्रमसंज्ञः । एवं विक्रमसंज्ञां विधाय तस्यानुदात्ततरत्वं विहितम्— 'स्वारविक्रमयोर्दृढप्रयत्नतरः पौष्करसादेः' (तै. प्रा. अ. १७. सू. ६) इति सूत्रान्तरेण । स्वारः—स्वरितः । अत्र यद्यपि दृढप्रयत्नतरशब्दो न सन्नतरे रूढः ; तथा सति स्वरितस्यापि सन्नतरविध्यापत्तेः, तथापि स्वरितो दृढप्रयत्नतरः क्रियमाणः स्वरिततरः संपद्यते, अनुदात्तश्च तथा

---

1. यस्मात् परस्तस्य घ. 2. अत्र च सूत्रवृत्त्यादि- ख. घ. ङ.

क्रियमाणोऽनुदात्ततर इति पर्यवसानगत्या तथा लाभः । एवं च प्रातिशाख्यमते उदात्तस्वरितान्यतरपरकस्यापि उदात्तपूर्वकस्य [1]अपूर्वकस्य चानुदात्तस्य 'इषे त्वा', 'देवासुराः' इत्यादौ न सन्नतरत्वमिति फलितम् । व्याकरणपर्यालोचने तु तत्रापि तद्भवतीति प्रतीयते । दर्शितं च तथाविधम् 'अग्निः' 'कन्या' इत्यादिकं सन्नतरोदाहरणं हरदत्तभट्टोजियज्वग्रन्थेषु । त्रिभाष्यरत्नकृता तु 'स्वारविक्रमयोः' इति सूत्रमनिर्दिष्टमिति ब्रुवता तैत्तिरीयके न क्वापि सन्नतर इत्यनुसृतः तृतीयः पन्थाः । किमत्र तत्त्वमिति चेत्—तत्र केचिदाहुः—प्रातिशाख्यसूत्रानुसरणमेवात्र रमणीयम् ; तद्विषये 'तस्माद्वा एतस्मात्' इत्यादौ सन्नतराध्ययनस्य सर्वसिद्धत्वात् । न ह्येवम् 'इषे त्वा' 'देवासुराः' इत्यादौ तदविषये सन्नतरत्वमनुभूयते । अत एव परिमलकृता '‘जुहवानी’ इत्यत्र जुशब्दे न सन्नतरत्वम्' इति वदता प्रातिशाख्यमेवानुसृतम् । व्यकरणं तु अन्यत्रापि सन्नतरं विदधत् शाखान्तराभिप्रायं भाषाभिप्रायं वेति नेतव्यम् । त्रिभाष्यरत्नं तु चिन्त्यमेवेति । तत्र व्याकरणरीत्या उदात्तपरः सन्नतर उदात्तानुदात्तस्वरितप्रचयानामन्यतमस्य पूर्वत्र स्थितौ कस्याप्यभावे च सम्भवतीति पञ्चविधः । एवं स्वरितपरोऽपीति दशविधः सन्नतरः । प्रातिशाख्यरीत्या तु उदात्तस्वरितप्रचयानामन्यतमपूर्वत्वेन उदात्तपरसन्नतरस्त्रिविधः । एवं स्वरितपरोऽपीति षडेव भेदाः । षण्णां क्रमेणोदाहरणानि—'जुहवानी ३' । 'भवत्यात्माना' । 'इमं मे गङ्गे यमुने सरस्वति शुतुद्रि' । 'तेन कोऽर्हति स्पर्धितुम्' । 'योऽस्य स्वोऽग्निः' । 'ब्रह्मवादिनो वदन्ति न्यङ्ङग्निः' । ननु 'वदन्ति न्यङ्ङग्निः' इत्यत्र कथं स्वरितपरत्वम् ? निपूर्वादञ्चेः किनि व्युत्पादिते न्यङ्शब्दे 'न्यधी च' इति पूर्वपदप्रकृतिस्वरे यणादेशे च 'उदात्तस्वरितयोः' इति सूत्रविहितस्य स्वरितस्य 'पूर्वत्रासिद्धम्' इति सन्नतरं प्रत्यसिद्धत्वादिति चेत्—न ; नवसूत्र्युत्कर्षेण सन्नतरस्यास्य उक्तस्वरितसूत्रात् परत्वेन तं प्रति उक्तस्वरितसूत्रविहितस्वरस्य[2] पूर्वत्वेन असिद्धत्वाभावात् । नन्वेवं सति 'स्वरितात् संहितायाम्'

1. अविद्यमानपूर्वकस्य ङ. 2. -स्वरितस्य ग. घ.

इति पूर्वसूत्रं प्रकृतसूत्रं चासिद्धकाण्डान्तर्गतं स्यात् । ततश्च सरस्वतीकारस्य पूर्वसूत्रेणैकश्रुत्यमस्तु, आहोस्वित् शुतुद्रिशब्दोकारे पादादित्वेनाष्टमिकनिघाताभावे सति षाष्ठेन 'आमन्त्रितस्य च' इति सूत्रेण उदात्ते परे सन्नतरोऽनेनास्तु इति विचारे पूर्वेणैकश्रुत्यमेव स्यात्। न च परत्वादनेन सन्नतरः शङ्क्यः ; 'पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्य' इति न्यायात् । न चैवं सन्नतरस्य निरवकाशत्वम् ; यत्र 'स्वरितात् संहितायाम्' इत्यस्य न प्रसक्तिः[1], पूर्वस्य स्वरिताभावात्, तादृशस्थलेषु[2] 'जुहवानी' इत्यादौ तस्य चरितार्थत्वात् । न च तत्रापि 'उदात्तादनुदात्तस्य' इति स्वरितेन बाधान्निरवकाशत्वम् ; 'नोदात्तस्वरितोदयम्' इति तन्निषेधात् । यत्र पूर्वत्रोदात्तस्याप्यभावेन 'उदात्तात्' इति स्वरिताप्रसङ्गः, तत्रापि सन्नतरस्य चरितार्थत्वात् । 'अग्निः' 'कन्या' इत्यादौ तादृशस्थलेऽपि व्याकरणरीत्या सन्नतरस्योक्तत्वादिति चेत्[3]—अत्र हरदत्तादयः 'न मु ने' इत्यत्र 'न' इति योगविभागात् सन्नतरस्य नासिद्धत्वम्, ततश्च ऐकश्रुत्यात् परत्वात् सरस्वतीकारे सन्नतरत्वमिति । न चैवं 'नोदात्तस्वरितोदयम्' इति प्रतिषेधोऽनर्थकः, परत्वात् सन्नतरेण स्वविषये 'उदात्तादनुदात्तस्य' इति स्वरितस्य बाधेनैवेष्टसिद्धेरिति वाच्यम् ; 'अगार्ग्यकाश्यपगालवानाम्' इति प्रतिप्रसवार्थं तदारम्भात् । न चैवं 'अजा ह्यग्नेः' इत्यादौ 'उदात्तस्वरितयोर्यणः' इति स्वरितात् परत्वादनेन सन्नतरः स्यादिति वाच्यम् ; योगविभागस्येष्टसिद्ध्यर्थतया क्वचिदेव अस्यासिद्धत्वाभावात् । एवं च अस्य सन्नतरस्य 'अग्निः' 'कन्या' इत्यादिर्निर्बाधोऽवकाशः । 'तस्माद्वा एतस्मात्' इत्याद्यपि । न चात्र 'उदात्तादनुदात्तस्य' इति स्वरितप्रसङ्गः ; 'नोदात्तस्वरितोदयम्' इति निषेधात् । एवं लब्धावकाशश्चायमुक्तरीत्या परत्वादैकश्रुत्यं स्वविषये बाधत इति निष्कर्षः । एतेन 'स्वरितात् संहितायाम्' इत्यैकश्रुत्ये 'उदात्तादनुदात्तस्य' इति स्वरिते च प्राप्ते सन्नतरविधिरिति वदन् स्वरमञ्जरीकारः 'सन्नतरविधेरपवादत्वमाह[4]' इत्यादिना अमुं ग्रन्थं व्याचक्षाणेन

---

1. प्रवृत्तिः ग. घ. ङ.
2. तादृशस्थले ज.
3. चेत् ग. घ. ङ. नास्ति ।
4. अपवादद्वयम् ग. घ. छ. ज.

परिमलकृता सह निरस्तः ; 'नोदात्तस्वरितोदयम्' इति निषेधेनोक्तस्वरितस्य सन्नतरविषयेऽप्रसङ्गात्, ऐकश्रुत्यस्यापि परत्वात् सन्नतरबाध्यत्वेनास्य तदपवादत्वाभावादिति ॥

यत्तु प्लुतस्वरप्रकरणे परिमलकृता ''जुह्वानी' इत्यत्र कथं 'वा' शब्दस्य सन्नतरः ? अनुदात्तस्य हि सन्नतरो विधीयते । न चायं वाशब्दोऽनुदात्तः ; तस्य प्रागेव 'उदात्तादनुदात्तस्य' इति स्वरितविधानात्' इत्याशङ्क्य परिहृतम्, 'नैष दोषः, परत्वात् स्वरितस्यासिद्धौ सन्नतरविधिप्रवृत्तेः' इति । तत्राक्षेपस्तावदयुक्तः ; 'नोदात्तस्वरितोदयम्' इति निषेधेन तत्र वाशब्दे 'उदात्तादनुदात्तस्य' इति स्वरिताप्रसङ्गात्, 'सन्नतरविधेरपवादत्वमाह[1]' इत्यनन्तरोक्तस्वग्रन्थविरोधाच्च । न हि सन्नतरविधेरुक्तस्वरितापवादत्वे तद्विषये तत्प्रवृत्तिरुपपद्यते ; अपवादविषयपरिहारेणोत्सर्गप्रवृत्तेः । परिहारोऽपि नवसूत्र्युत्कुर्षविस्मरणविजृम्भितः ; तदुत्कर्षे परत्वात् स्वरितस्यासिद्धत्वकथनायोगात् । यदपि सन्नतरप्रकरणे स्वरमञ्जर्यामुक्तम् ''पूर्वत्रासिद्धम्' इति सन्नतरादेशे कर्तव्ये स्वरितत्वमसिद्धं भवेत्[2] । अत्रोच्यते—आश्रित्य विधानान्नासिद्धत्वम्' इति । तत्राक्षेपस्तावदनुपपन्नः । अयं हि तस्याभिप्रायः परिमलकृता दर्शितः—'तेन कोऽर्हति स्पर्धितुम्' 'रथौ वध्वा यादमानः' इत्यादौ 'स्वरितो वानुदात्ते' इति 'उदात्तस्वरितयोर्यणः' इति च विहितस्य स्वरितस्य असिद्धत्वेन स्वरितपरत्वाभावात् कथं सन्नतरः स्यात्—इति । न चैतद्युक्तम् ; प्रकरणोत्कर्षेण स्वरितस्यासिद्धत्वाभावात् । 'आश्रित्य विधानात्' इति परिहारोऽपि हेयः ; 'अथ कास्य' इत्यादौ सिद्धे तित्स्वरिते परतः सन्नतरप्रवर्तनेन वचनस्य चरितार्थत्वादिति । यच्चान्यत् सन्नतरप्रकरणे तत्र[3] बहु प्रलपितम्, तत्सर्वमत्यन्तासम्बद्धत्वान्नेहानूद्य निराक्रियते । अथ 'उदात्तस्वरितयोः सन्नतरः' इत्येवास्तु ; 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति परिभाषयैव 'परतः' इति लाभात् । तथा च परग्रहणमनर्थक-

---

1. अपवादत्वद्वयम् छ. ज.
2. स्वरितत्वं कथं सिद्धं भवेत् ग.
3. तत्र ग. नास्ति ।

मिति । अत्र हरदत्तः—[1]'परग्रहणं बहुव्रीहावेकत्वविवक्षार्थम् , तेन 'इमं मे' इत्यादौ गङ्गेप्रभृतीनां सन्नतराभावः—इति । यद्यपि निर्दिष्टग्रहणस्य नैरन्तर्यार्थतया परग्रहणाभावेऽपि उक्तपरिभाषया अव्यवहितपूर्व एव कार्यं भविष्यति, गङ्गेप्रभृतिषु च न तत्प्रसक्तिः, तथापि पूर्वत्र 'अनुदात्तानाम्' इति जातिपरो निर्देश इति स्थितमिति तत्रेव अत्रापि व्यवहितानामपि कार्यं प्रसक्तम् ; तस्यैव पदस्य अत्रानुवृत्तेः । तच्च परग्रहणेन वार्यत इति हरदत्ताशयः[2] । यदि तु अत्र अनुवृत्तस्य तस्य पदस्य व्यक्तिपरत्वमुच्यते, तदा परग्रहणं शक्यमकर्तुम् । पदकाले च नायं सन्नतरः ; 'संहितायाम्' इत्यनुवृत्तेः । यद्यप्यत्र तरबर्थातिशयो न विवक्षित इत्यपि पक्षो भाष्ये[3] दर्शितः, तथापि अध्ययनानुसारात् हरदत्तादिग्रन्थानुसाराच्च विवक्षापक्ष एव प्रबलः ॥

## [१५] ॥ उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य ॥
(8—2—4)

उदात्तस्य स्वरितस्य वा स्थाने यो यण् ततः परस्य अनुदात्तस्य स्वरितः स्यात् । 'अजा ह्यग्नेः' । 'वैश्वदेव्यो वै प्रजाः' । 'निपाता आद्युदात्ताः' इति फिट्सूत्रात् 'हि'शब्द उदात्तः । 'अङ्गेर्नलोपश्च' इति निप्रत्ययान्तः प्रत्ययस्वरेणान्तोदात्तत्वादनुदात्तादिरग्निशब्दः । विश्वदेवशब्दादणि ङीपि उदात्तनिवृत्तिस्वरेण वैश्वदेवीशब्दोऽन्तोदात्तः । ततो जसनुदात्तः । उक्तयोरुदात्तयोर्यणादेशे ततः परयोरनुदात्तयोरुदात्तयणः परत्वात् स्वरितत्वम् । अस्य स्वरितस्य त्रैपादिकत्वेन 'अनुदात्तं पदम्' इति परिभाषां प्रत्यसिद्धत्वात् 'अजा ह्यग्नेः' इत्यत्र शेषनिघाताभावः । अथ स्वरितयणः परस्योदाहरणम् । खलप्व्याशा । खलपूशब्दः कृत्स्वरेणान्तोदात्तः ।

---

1. परग्रहणस्य....विवक्षार्थत्वात् ग.
2. हरदत्तादयः घ.
3. भाष्ये घ. नास्ति ।

ततः सप्तम्येकवचनं ङिः सुप्त्वादनुदात्तः । तस्मिन् परे 'ओः सुपि' इति खलपूशब्दोकारस्य उदात्तस्य यणादेशः । उदात्तयणः परत्वात् 'वैश्वदेव्यः' इत्यादाविव प्रकृतसूत्रपूर्वभागेनैव ङेः स्वरितत्वम् । न च 'उदात्तयणो हल्पूर्वात्' इति विभक्त्युदात्तत्वप्रसङ्गः ; 'नोङ्धात्वोः' इति निषेधात् । आशाशब्दः 'आशाया अदिगाख्या चेत्' इति सूत्रेणान्तोदात्तत्वात् अनुदात्तादिः । अतो ङेः स्वरितस्य यणादेशे स्वरितयणः परत्वादाशाशब्दे आदिमाकारस्य स्वरितत्वम् । उदात्तस्वरितयोरिति किम् ? 'सर्वं ह्यस्थूरिणाभ्यश्नुते' । 'हि च' इति निषेधात्तिङ्निघाताभावे 'अश्नुते' इति प्रत्ययस्वरेणान्तोदात्तं पदम् । सतिशिष्टोऽप्यत्र न विकरणस्वरः ; 'सतिशिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्यः' इत्युक्तेः । 'तिङि चोदात्तवति' इति गतेरभेर्निघातः । अतोऽयमनुदात्तयण् । अनुदात्तस्येति किम् ? 'अति ह्यप्रवत' । 'सर्वं ह्यस्थूरिणाभ्यश्नुते' । यण्ग्रहणमुदात्तादिस्थानिकेभ्य आवादिभ्यः परस्य मा भूदिति । 'तावेवास्मै' । 'त इमं यज्ञमवन्तु' । उदात्तादिस्थानिकस्य यण इति व्याख्यानादिह न । 'प्रजानन् वाज्यपि' । 'क्व वः सङ्क्थः' । इतरथा ह्युदात्तस्वरितसमीपवर्तियणः परस्येत्यपि सम्भवेनात्र 'वा''वः'शब्दयोरपि स्वरितत्वं प्रसज्येत । यद्यप्यनुवादे 'षष्ठी स्थाने' इति परिभाषा न प्रवर्तते ; 'गुणानां च परार्थत्वात्' इति न्यायात्, अत एव 'उदीचामातः स्थाने' इत्यत्र स्थानेग्रहणं कृतम्, तथापि व्याख्यानात् स्थानषष्ठ्येवेति हरदत्तः । स्यादेतत्—'खलप्व्याशा' इति न स्वरितयणोऽनुदात्तस्य स्वरितत्व उदाहरणम् ; यणादेशे कर्तव्ये प्रकृतसूत्रपूर्वभागविहितस्य ङेः स्वरितस्य 'पूर्वत्रासिद्धम्' इति असिद्धत्वेन यणः स्वरितस्थानिकत्वाभावात् । न च 'स्वरितयणः' इत्याश्रयणात् सिद्धत्वं भविष्यति रुत्वमिवोत्व इति वाच्यम् ; तथा सति 'उदात्तादनुदात्तस्य' इति विहितस्यापि सिद्धत्वापत्त्या तद्यणः परस्यापि स्वरितत्वप्रसङ्गात् । न चेष्टापत्तिः ; 'आश्रयात् सिद्धत्वमिति चेत् उदात्तात् स्वरिते दोषः' इति वार्त्तिके दोषत्वकथनेन तदनिष्टत्वोन्नयनात् । 'वस्वस्मभ्यम्' इत्यादौ उदात्तात् स्वरितयणः परस्य अनुदात्तस्य स्वरितत्वदर्शनाच्च । तस्मादाश्रयात् सिद्धत्वाश्रयणे अतिप्रसङ्ग इति

प्रकृतसूत्रपूर्वभागविहितस्य स्वरितयणः परस्य स्वरितत्वमिष्यते । तच्च यणं प्रति स्वरितस्यासिद्धत्वाद्दुर्लभमिति । अत्र वार्तिककृतः—प्रकृतसूत्रपूर्वभागविहितस्वरितो यणं प्रति सिद्धो वक्तव्यः, तेन नातिप्रसङ्गः, इष्टसिद्धिश्चेति । तथा च वार्त्तिकम्—"यणः स्वरो[1] यणादेशे सिद्धो वक्तव्यः स्वरितयण्स्वरार्थम्' इति । भाष्यकृतस्तु वचनमन्तरेणैवामुमाक्षेपं द्वेधा समादधुः । तथा हि—योगविभागः क्रियते । 'उदात्तयणः स्वरितोऽनुदात्तस्य' इत्येको योगः । [2]ततः 'स्वरितयणः' इति द्वितीयः । अत्र 'उदात्तयणः' इत्यनुवर्तते । तेनोदात्तयण इत्येवमभिनिर्वृत्तो यः स्वरितः तस्य स्थाने यो यण् ततः परस्य अनुदात्तस्य स्वरितत्वमिति द्वितीययोगार्थः । एवं च प्रकृतसूत्रपूर्वभागविहितस्वरितस्यैवाश्रयणादस्यैवाश्रयात् सिद्धत्वम्, न तूदात्तात् स्वरितस्यापि इतीष्टसिद्धिः । अथ वा स्वरितयण्ग्रहणं न कर्तव्यम्; 'खलप्व्याशा' इत्यादौ 'उदात्तयणः' इत्येव स्वरितसिद्धेः । खलपूशब्दोकारस्थानिकोदात्तयणः सत्त्वात् । न च ङेर्यणादेशेन व्यवधानम्; 'स्वरविधौ व्यञ्जनस्याविद्यमानवद्भावात्' इति । वृत्तिकारस्तु उक्तरीत्या 'खलप्व्याशा' इति स्वरितयण उदाहृत्य यणं प्रति स्वरितस्यासिद्धत्वात् कथमिदमुदाहरणम्? न चाश्रयात् सिद्धत्वम्; 'दध्याशा' इत्यादावुदात्तात् स्वरितयणः परस्यापि स्वरितत्वप्रसङ्गादित्याक्षिप्य, 'तस्मादयमेव यण्स्वरो यणादेशे सिद्धो वक्तव्यः' इति वार्त्तिकमतेन स्वयं परिहृत्य पश्चात् 'केचित्तु ब्रुवते' इत्युपक्रम्य 'उदात्तात् स्वरितयणोऽपि परस्यानुदात्तस्य स्वरितत्वं दृश्यते । तथा हि—तैत्तिरीयके 'यास्ते विश्वाः समिधः सन्त्यग्ने' इत्ययमकारः स्वरितः पठ्यते । तथा ब्राह्मणेऽपि 'दध्याशयति' इत्याकारः स्वरितः पठ्यते' इति केषांचिन्मतमुपन्यस्य 'यथा तु वार्त्तिकं भाष्यं च तथोदात्तात् स्वरितयणः परस्यानेन स्वरितत्वं न भवतीति स्थितम्' इति उदाहृतभाष्यवार्त्तिकविरोधात् तन्मतं दूषितवान्[3] । हरदत्तोऽपि 'आश्रयात् सिद्धत्वाश्रयेण उदात्तात् स्वरिते दोष इत्युद्भावितमतिप्रसङ्गं केषांचिन्मतेन परिहरति—केचित्त्विति' इत्युदाहृतं

1. यण्स्वरः ग. घ. छ.
2. ततः ग. नास्ति ।
3. दूषितम् ग. घ. छ.

वृत्तिग्रन्थमवतार्य[1] 'सन्त्यग्ने' 'दध्याशयति' इत्यादौ उदात्तात्स्वरितयणः परस्य अनुदात्तस्य स्वरितत्वमनेन दृश्यत इति वृत्तिकृदुपन्यस्ते केषाञ्चिन्मते दूषणमित्थं प्रदर्शितवान्[2]। तद्यथा—'सन्त्यग्ने' इत्यादावुदात्तात् स्वरितयणः परस्य न प्रकृतसूत्रेण स्वरितत्वम्, अपि तु यणादेशे सति 'उदात्तादनुदात्तस्य' इति। न च यणा व्यवधानम्; स्वरविधौ व्यञ्जनस्य अविद्यमानवद्भावात्। न च प्रकृतसूत्रेणैवात्र स्वरितत्वमस्त्विति वाच्यम्; तथा सति 'वस्वस्मभ्यमाभर', 'अन्वग्निरुषसाम्', 'यन्मध्वग्नौ जुहोति' इत्यादावपि तत्प्रसङ्गात्। 'उदात्तादनुदात्तस्य' इति स्वरितस्तु नात्र भवति; 'नोदात्तस्वरितोदयम्' इति निषेधात्। न च प्रकृत-सूत्रस्याप्ययं निषेधोऽस्तु, अतो नातिप्रसङ्ग इति वाच्यम्; 'अनन्तरस्य' इति न्यायेन 'नोदात्तस्वरितोदयम्' इत्यस्य 'उदात्तादनुदात्तस्य' इत्येतन्निषेधकत्वात्। अत एव 'दहाशसो रक्षसः पाह्यस्मान्' इत्यादौ उदात्तपरस्याप्यनुदात्तस्य प्रकृतसूत्रेण स्वरितत्वं दृश्यते। तस्मात् 'उदात्तात् स्वरिते दोषः' इत्युद्भावितातिप्रसङ्गस्य नेदं व्यभिचारदर्शनमित्येव दूषणं प्रदर्श्य, 'तस्माच्चिन्त्यमेतत्' इत्युक्त्वा 'निराकरिष्यमाणत्वाद्वा नात्र सुष्ठु निबन्धः कर्तव्यः। तन्निराकरणं दर्शयति—यथा त्विति' इत्युत्तरवृत्तिग्रन्थमुपादाय तत्रोक्तं केषाञ्चिन्मते भाष्यवार्तिक-विरोधं स्पष्टमुपपादयामास। एवं स्थिते प्रकृतसूत्रमनोरमायाम्—उदात्तात् स्वरितयणः परस्मिन्ननुदात्ते स्वरितत्वप्रसङ्गवारणाय योऽयं भाष्यकृता योगविभागेन परिहारो दर्शितः, स किल 'सन्त्यग्ने' इत्यादि-प्रयोगदर्शनेन वृत्तिकृता न सङ्गच्छत इति दूषित इति वृत्ति-कृन्मतमुपन्यस्य तत्र हरदत्तोक्तदूषणोद्भावनेन, 'सोऽयं वृत्तिकृतो महान् व्यामोह इति मात्सर्यमुत्सार्य सुधीभिराकलनीयम्' इत्युक्तम्, तदेतदपरिशीलितवृत्त्यादिग्रन्थव्यामोहनमात्रम्। वृत्तौ भाष्योक्तयोग-विभागपक्षस्यैव [3]अनुपक्षेपाददूषणाच्च। 'तस्मादयमेव यण्स्वरो यणादेशे सिद्धो वक्तव्यः' इति वार्तिकमतस्यैव तत्रोपन्यासात्। प्रत्युत

---

1. वृत्तिग्रन्थमेवमवतार्य ङ.
2. उपदर्शितवान् ङ.
3. अनाक्षेपात् ग.

'केचित्तु ब्रुवते' इत्यादिना भाष्यविरुद्धपक्षं केषाञ्चिन्मतत्वेन[1] उपक्षिप्य निराकुर्वता भाष्यपक्ष एव समर्थितः। 'केचित्तु' इत्यस्वरसोद्भावनेन हरदत्तोक्तदोषश्च तन्मते सूचित इति न कश्चिद्वृत्तिकृतो व्यामोह इति विद्वद्भिर्विलोकनीयम्। यत्तु वृत्तौ—'खलप्व्याशा' इत्यादौ 'उदात्तयणः' इति स्वरितत्वं न सिद्ध्यति, पूर्वस्मादपि विधौ ङ्येर्यणादेशस्य स्थानिवद्भावेन अचा व्यवधानात्। न च स्वरविधौ स्थानिवद्भाव-निषेधः; 'स्वरदीर्घयलोपेषु लोपाजादेश एव न स्थानिवत्' इति वचनात्। तस्मात् स्वरितयणग्रहणं कर्तव्यम्—इत्युक्तम्, तद्यद्यपि 'पूर्वत्रासिद्धे न स्थानिवत्' इति निषेधात्[2] स्थानिवद्भावाप्रसक्त्या न युक्तम्, तथापि 'पूर्वत्रासिद्धे न स्थानिवत्' इत्यस्य अनित्यत्वेन इष्टानिष्टविभागस्य लक्षणैकचक्षुष्कैर्दुर्ज्ञेयतया[3] च मन्दबुद्ध्यनुग्रहाय सूत्रकृता स्वरितग्रहणं कृतमिति स्वरितग्रहण कृतवतः सूत्रकृतः[4] तात्पर्यकथनमात्रपरमिति न कश्चिद्दोषः। 'पूर्वत्रासिद्धे न स्थानिवत्' इत्यस्यानित्यत्वं तु स्थानिवदाह्निके कौस्तुभ एव स्पष्टम्। एतेन 'इत्याह', 'दध्याशयति' इति स्वरितयणग्रहणस्योदाहरणं दर्शयन् स्वरमञ्जरीकारः प्रत्युक्तः। न च उदात्तात् स्वरितयणः परस्यानेन स्वरितत्वम्, 'वस्वस्मभ्यम्' इत्यादावतिप्रसङ्गात्। भाष्यवार्त्तिकादि-सकलग्रन्थविरोधाच्च। 'इत्याह' इत्यादौ तु 'उदात्तादनुदात्तस्य' इति स्वरितत्वमित्युक्तत्वात्। यदपि तत्रोक्तम्—'दध्याशयति' इत्यादौ यणादेशे सति [5]अनुदात्तमुदात्तात् परं स्यात्। ततश्च 'उदात्तादनुदात्तस्य' इत्येव स्वरितसिद्धेरिदं विधानमनर्थकमिति चेत्—अत एव भाष्यकारः स्वरितग्रहणं प्रत्याख्यातवान्—इति, तद्भाष्यापरिचयविजृम्भितम्। न हि भाष्यकारः 'उदात्तादनुदात्तस्य' इत्येव स्वरितसिद्धेरत्र[6] सूत्रे स्वरितग्रहणं प्रत्याख्यातवान्। अपि तु 'उदात्तयणः' इति प्रकृतसूत्रैकदेशेनैव

1. -मतेन ग. घ.
2. न्यायात् ङ.
3. दुर्ज्ञानतया च ग. ङ.
4. कुर्वतः सूत्रकारस्य ङ.
5. यद्यनुदात्तम् . ग.
6. सिद्धेः प्रकृतसूत्रे ग. घ. ङ

तत्सिद्धेरिति । तथा च भाष्यम्—'अथवा स्वरितग्रहणं न करिष्यते । केनेदानीं स्वरितयणः परस्यानुदात्तस्य स्वरितो भवति ? 'उदात्तयणः' इत्येव' इति । न वा 'खलप्व्यत्ति' 'खलप्व्यश्नाति' इति भाष्याभिमतोदाहरणे 'उदात्तादनुदात्तस्य' इति स्वरितसम्भवः ; उदात्तात् परत्वाभावात् । यत्र तु तत्सम्भवः 'दध्याशा' 'मध्वाशा' इत्यादौ, तत्र स्वरितत्वं नैव भाष्याभिमतम्, न वा तत्र तेनैव[1] सूत्रेण स्वरितसम्भवः, 'नोदात्तस्वरितोदयम्' इति निषेधादित्यास्तां विस्तरः ॥

## [१६] ॥ उदात्तयणो हल्पूर्वात् ॥ (6—1—174)

उदात्तस्य स्थाने यो यण् हल्पूर्वस्तस्मात् परा नदी अजाद्य-सर्वनामविभक्तिश्चोदात्ता भवति । पूर्वसूत्रेण स्वरितत्वप्राप्तौ अयमुदात्त-विधिः । 'चोदयित्री सूनृतानाम्' । 'अहां नेत्री जनित्री प्रजानाम्' । 'धात्रे पुरोडाशम्' । 'अनुमतमेवैनं मात्रा पित्रा' । चोदयितृशब्दादयस्तृजन्ता-श्चित्स्वरेणान्तोदात्ता इति यणत्रोदात्तस्थानिकः । 'ऋन्नेभ्यो ङीप्' । 'स्वाद्वीं त्वा' । 'मृद्वीं कृत्वा' । 'उर्वी पृथ्वी बहुले' । स्वादुशब्दः 'कृपावाजिमिनिस्वदि' इत्युणप्रत्ययान्तः । पृथुमृदुशब्दौ 'प्रथिम्रदिभ्रस्जां संप्रसारणं सलोपश्च' इति कुप्रत्ययान्तौ । उरुशब्दोऽपि 'महति ह्रस्वश्च' इति कुप्रत्ययान्तः । सर्वेऽपि प्रत्ययस्वरेण अन्तोदात्ताः । ततो 'वोतो गुणवचनात्' इति ङीषि प्राप्ते 'गुणवचनान्ङीबाद्युदात्तार्थः' इति वचनान्ङीप् । ततो यणि प्रकृतसूत्रेण ङीबुदात्तः । न चैवं 'गुणवचनान्ङीबाद्युदात्तार्थः' इति वचनवैफल्यम् ; यत्र ङीप्प्रकृतेराद्युदात्तत्वं तत्र उदात्तयणभावेन प्रकृतसूत्राप्रवृत्त्या साफल्यात् । यथा 'वस्वी चासीत्याह' । 'वस्वीं करोति' । वसुशब्दो हि 'धान्ये नित्' इत्यतो निदित्यनुवृत्तौ 'शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च' इति उप्रत्यये निष्पन्न[2] आद्युदात्तः । 'ङीबाद्युदात्तार्थः' इति वचनाभावे हि अत्र ङीषि सतिशिष्टेन प्रत्ययस्वरेणान्तोदात्तत्वं प्रसज्येत ।

---

1. एव ग. नास्ति । 2. व्युत्पन्नः ग. घ. ङ.

'परिवृक्त्यै गृहे' इत्यत्र परिवृक्तिशब्दो राज्ञो मध्यमपत्नीवाची परिपूर्वात् वृणाते:[1] 'क्तिच्क्तौ च संज्ञायाम्' इति क्तिच्प्रत्ययान्तः । अत्र प्रकृतसूत्रेण विभक्त्युदात्तत्वं न भवति, व्यत्ययात् । तेन 'उदात्तस्वरितयोः' इति स्वरित[2] एवेति वेदभाष्यकृतः । 'छर्वीं छर्व्या' इत्यत्रापि व्यत्ययादेव विभक्तेः स्वरितत्वम् । 'छर्व्यौपाकृताय' इत्यत्र एकादेशोऽपि व्यत्ययेनैव स्वरितः । उदात्तयण इति किम् ? 'दोग्ध्री धेनुः' । दुहेस्तृन्नन्तो दोग्धृशब्द आद्युदात्त इति उदात्तयणभावः । हल्पूर्वादिति किम् ? बहुतितवा ब्राह्मण्या । 'तनोतेर्डउः सन्वच्च' इति डउप्रत्ययान्तस्तितउशब्दः । 'चालिनी तितउः[3] पुमान्' इत्यमरः । बहवः तितवः यस्या इति बहुव्रीहिः । 'बहोर्नञ्वदुत्तरपदभूम्नि' इत्युत्तरपदान्तोदात्तत्वम् । 'ब्राह्मण्या' इति स्त्रीलिङ्गोपादानं नाभावनिवृत्त्यर्थम् । अत्र वार्त्तिकम्—'उदात्तयणि हल्ग्रहणं नकारान्तार्थम्' इति । 'उदात्तयणः' इत्यपनीय 'उदात्तहलः' इति सूत्रं पठितव्यम्, उदात्तस्थानिको यो नकारः तदन्तान्ङीपि उदात्तत्वार्थम् इत्यर्थः । वाचः पतिः स्त्री वाक्पत्नी । समासस्वरेण वाक्पतिशब्दे अन्त उदात्तः । 'पत्यावैश्वर्ये' इति पूर्वपदप्रकृतिस्वरस्तु न ; 'न भूवाक्चित्' इति निषेधात् । 'विभाषा सपूर्वस्य' इति तस्योदात्तस्य नकारादेशः । नान्तत्वान्ङीप् । तस्योक्तवार्त्तिकबलादुदात्तत्वम् । वृत्तिकारस्तु 'नकारग्रहणं च कर्तव्यम्' इति इदमेव वार्त्तिकमर्थतः पठति स्म । 'सुपत्नीरुपसेदिम' इत्यत्र शोभनः पतिर्यस्या इति बहुव्रीहावपि 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वं न ; 'आद्युदात्तं द्व्यच्छन्दसि' इति उत्तरपदाद्युदात्तत्वेन बाधितत्वात् । तेनात्र 'विभाषा सपूर्वस्य' इति नकारस्योदात्तस्थानिकत्वाभावान्नानेन वार्त्तिकेन ङीप उदात्तत्वम् ॥

---

1. वृणक्तेः ङ.
   वृणुतेः छ.
2. स्वरितत्वमेव ग. घ.
3. बहवः पुमान् छ.

## [१७] ॥ नोङ्धात्वोः ॥ (6—1—175)

ऊङो धातोश्च सम्बन्धी य उदात्तयण् हल्पूर्वस्तस्मात् परा अजाद्यसर्वनामस्थानविभक्तिर्नोदात्ता भवति । 'नद्यजादी' इत्यनुवृत्तावपि ऊङ्धातुयणः परा नदी न संभवतीत्येवं व्याख्यातम् । ब्रह्मबन्ध्वा । ब्रह्मबन्धूशब्दो बहुव्रीहिः वृत्तस्वाध्यायहीनायां ब्राह्मणजातौ वर्तते । ततः 'ऊङुतः' इति ऊङ्प्रत्ययः[1] प्रत्ययस्वरेणोदात्तः । [2]ततः प्रकृत्युकारेणैकादेश एकादेशस्वरेणोदात्तः । अलाब्वा । कर्कन्ध्वा । यद्यपि अलाबूकर्कन्धूशब्दाभ्याम् 'ऊङुतः' इति ऊङ्प्रत्ययो न भवति[3], तत्र 'इतो मनुष्यजातेः' इत्यतः मनुष्यजातेरित्यनुवृत्तेः अनयोर्मनुष्यजातिवाचित्वाभावात्, तत्र कर्कन्धूशब्दस्य[4] 'अन्दूदृम्भू' इत्युणादिसूत्रे कूप्रत्ययान्ततया निपातनेनोदात्ताभावाच्च । अलाबूशब्दोऽपि 'नञि लम्बेर्नलोपश्च' इति ऊप्रत्ययान्तत्वेन अनुदात्तः, तथापि 'अप्राणिजातेश्चारज्ज्वादीनाम्' इति वार्त्तिकात् ऊङ्प्रत्ययः । अत्र वार्त्तिके 'उतः' इति नापेक्ष्यते ; अलाबूरित्यादिभाष्योदाहरणात् । रज्ज्वादिपर्युदासेन उवर्णान्तेभ्य इति लभ्यते । ऊकारान्तेभ्योऽपि ऊङ्प्रत्ययविधिरनेन सूत्रेण विभक्त्युदात्तत्वनिषेधार्थ एव । अयं निषेध ऊङ्प्रत्ययविषयः, न तूकारान्तमात्रविषयः[5], 'ऊङुतः' इत्यत्र प्रकृतसूत्रे च ङकारोपादानसामर्थ्यात् । अत एव 'ऊङुतः' इत्यत्र भाष्ये—ङकारः 'नोङ्धात्वोः' इत्यत्र विशेषणार्थः । 'नोधात्वोः' इतीयत्युच्यमाने 'यवाग्वे' 'यवाग्वै' इत्यत्रापि प्रसज्येत—इत्युक्तम् । ननु 'यवाग्वै' इति कथं ङकारग्रहणस्य प्रत्युदाहारणम् ? 'सृयुवचिभ्योऽन्युजागूजक्नुचः' इत्यागूचप्रत्ययान्तात् यवागूशब्दात् 'अप्राणिजातेश्च' इति वार्त्तिकात् ऊङ्प्रत्ययसंभवादिति चेत्—सत्यम् ; अत एव भाष्यात् यवागूशब्दो रज्ज्वादित्वात् नोङ्प्रत्ययान्त इति

---

1. -प्रत्ययः ग. घ. नास्ति ।
2. ततः ग. नास्ति ।
3. सम्भवति ग. घ. छ.
4. तत्र कर्कन्धूशब्दस्य ग. घ. नास्ति ।
5. ननु....विषयः छ. नास्ति ।

गम्यते । एतेन यदत्र[1] स्वरमञ्जर्याम् ऊङ उदाहरणं दर्शितम् 'यवाग्वा ग्रामकामस्य' इति, तच्चिन्त्यम् ; यदपि तत्र[1] 'वध्वा या-दमाना:' इत्युदाहृतम्, तदपि चिन्त्यम्[2] ; वधूशब्दस्य 'वहेर्धश्च' इति ऊप्रत्ययान्तत्वेन प्राणिवाचकत्वेन चोङ्प्रत्ययविधायकसूत्रवार्त्तिक-योरप्रवृत्तेः ऊङन्तत्वायोगात् । स्वरनिर्वाहस्तु उभयत्र व्यत्ययादेव । यदि तु भाष्योदाहरेण यवागूशब्दो न प्राणवाची, किं तु यौगिकः क्रियाशब्दः । तेन जातिवाचकत्वाभावात् 'अप्राणिजातेश्च' इति नोङ्प्रसङ्गः । स्वरमञ्जर्यां तु प्राणवाची उदाहृतेति कल्प्येत तदा न विरोधः । यत्तु तत्रैव 'अच्छिद्रया जुह्वा' इत्युदाहृत्य 'यज्जुह्वां गृह्णाति', 'चतुर्जुह्वां गृह्णाति' इत्यादौ व्यत्ययाद्विभक्त्युदात्तत्व-मित्युक्तम्, तत्र जुहूशब्दस्य जातिवाचकत्वे 'अप्राणिजातेश्च' इत्येव तत ऊङ बोध्यः । 'कुह्वै चरुम्', 'कुह्वा वाचं दधाति' इत्यादौ कुहूशब्दस्योङन्तत्वाद्विभक्त्युदात्तत्वनिषेध इति तत्रैव । राजसूयब्राह्मणे 'कुह्वै चरुम्' इत्यत्र वेदभाष्ये तु—जुहोतेर्ह्वयतेर्वा क्विपि कुहूः, 'नोङ्धात्वोः' इति धातुयणः परत्वाद्विभक्त्युदात्तत्वनिषेधे 'उदात्त-स्वरितयोर्यणः' इति विभक्तिः स्वर्यत इत्युक्तम् । अथ धातुयण उदाहरणम् ; 'सेनान्यै दिशां च' । 'सेनान्यो गृहे' । 'ग्रामण्यो गृहे' । 'सत्सूद्विष' इति सेनादावुपपदे नयतेः क्विपि कृदुत्तर-पदप्रकृतिस्वरेण सेनान्यादिरन्तोदात्तः । 'एरनेकाचः' इति यण् । यत्तु स्वरमञ्जर्याम्—ऊङो धातोश्च तृतीयादिविभक्तिरुदात्ता नेति सूत्रं व्याख्यातम्, तन्मन्दम् ; 'तृतीयादिः' इत्यननुवृत्तेः । 'शतुरनुमो नद्यजादी' इति हि प्रकृतम् । न च तृतीयादिरिति सम्भवद्विषय-प्रदर्शनम् ; शसोऽसंग्रहप्रसङ्गात् । ऊङन्ताच्छन्दसि 'ब्रह्मबन्धूः' इत्यादौ पूर्वसवर्णदीर्घेण यणभावेऽपि 'खलप्वै' इत्यादौ धातुयणः परस्य शसः सङ्ग्राह्यत्वादिति ॥

1. सूत्रे ग. अधिकम् ।
2. इदं वाक्यं क. ख. ग. घ. ङ. नास्ति ।

## [१८] ॥ तिसृभ्यो जसः ॥ (6—1—166)

'अन्त उदात्तः' इत्यनुवर्तते। 'तेषामसुराणां तिस्रः पुर आसन्'। 'यत्तिस्रश्चितयः'। त्रिशब्दः फिट्सूत्रेण[1] अन्तोदात्तः। 'त्रिचतुरोस्त्रियां तिसृचतसृ' इति तत्स्थाने विहितः तिस्रादेशोऽपि स्थानिवद्भावादन्तोदात्तः। ततो जस् सुप्त्वात् अनुदात्तः। 'अचि र ऋतः' इति तिसृशब्दान्त्यस्य रादेशे 'उदात्तस्वरितयोर्यणः' इति जसः स्वरितत्वं प्राप्नोतीति वचनम्[2]। 'तिस्रोऽनुष्टुभः' इत्यत्र 'स्वरितो वानुदात्ते पदादौ' इति एकादेशः स्वरितः। न च 'उदात्तयणो हल्पूर्वात्' इत्यनेनैव जस उदात्तत्वं सिद्धमिति वाच्यम्; तत्र 'असर्वनामस्थानम्' इत्यनुवृत्तेर्दर्शितत्वात्। 'वैश्वदेव्यो वै प्रजाः' इत्यादौ जसि अतिप्रसङ्गवारणाय तदनुवृत्तेरावश्यकत्वात्। अथ जसो ग्रहणमनर्थकम्; तथा हि—न तावत् एकवचनादिनिवृत्त्यर्थं तत्; तिसृशब्दस्य बहुवचनविषयत्वात्। नापि शस्व्यावृत्त्यर्थम्; 'उदात्तयणो हल्पूर्वात्' इति तत्र विभक्त्युदात्तत्वस्य इष्यमाणत्वात्। अत एव तथैव प्रयोगः। 'सतिस्रः पुरो भित्त्वा', 'तस्मात्तिस्रो रात्रीः' इत्यादौ। नापि [3]तदन्यहलादिव्यावृत्त्यर्थम्; 'षट्त्रिचतुर्भ्यो हलादिः' इति 'झल्युपोत्तमम्' इति स्वरेण तत्र भाव्यत्वात्। एतेन 'जस इति किम्? 'तिसृभिरस्तुवत'' इति स्वरमञ्जरी निरस्ता; परत्वात् 'झल्युपोत्तमम्' इति स्वरेणास्य बाधान् इष्टसिद्धेः[4] इति [5]चेत्—उच्यते। अतिक्रान्तौ तिस्रः 'अतितिस्रौ' इत्यत्र तिसृशब्दात् पराया औकारविभक्तेरुदात्तनिवृत्त्यर्थं जस्ग्रहणम्। न च 'तिसृभ्यः' इति बहुवचननिर्देशात्तिस्रर्थप्राधान्य एवायं स्वरः,[6] 'षड्भ्यो लुक्' इत्यादिबहुवचननिर्देशविषये तथाभ्युपगमादिति वाच्यम्; 'उपसमस्तार्थमेके जस्ग्रहणमिच्छन्ति' इति भाष्यानुसारेणात्र तथानाश्रयणात्। अर्थगतं बहुत्वं शब्दे समारोप्य 'तिसृभ्यः' इति बहुवचननिर्देश इति कैयटादयः। न च 'तिसृभ्यो

---

1. फिट्स्वरेण ग. घ.
2. सुवचम् ग. घ.
3. हलादिविभक्तिनिवृत्त्यर्थम् ग. घ.
4. इष्टसिद्धेः क. ख. नास्ति।
5. चेत् ङ. नास्ति।
6. स्वरितः ङ.

विहितस्य' इत्याश्रयणात् 'अतितिस्रौ' इत्यत्र नातिप्रसङ्ग इति वाच्यम् ; अस्मादेव भाष्यात् तथाप्यनाश्रयणात् । अत एव 'अतितिस्रः' इत्येतत् 'विभक्तिस्वरान्नञ्स्वरो बलीयान्' इत्यस्योदाहरणमिति प्राग्दर्शितम् । एवं च 'अतितिस्रौ' इत्यत्रानेन विभक्त्युदात्तत्वाभावे 'अतेरकृत्पदे' इति सूत्रेण अतितिसृशब्दस्यान्तादोत्ततया रादेशे 'उदात्तस्वरितयोर्यणः स्वरितः' इत्यौकारः स्वरितः । 'अतितिस्रः' इत्यत्र जसि तु अनेन विभक्त्युदात्तत्वमेव । 'अवङ् स्फोटायनस्य' इत्यत्र अवङादेश आद्युदात्तो निपात्यते । तेन [1]चित्रगवाग्रादौ बहुव्रीहित्वात् पूर्वपद-प्रकृतिस्वरेणाद्युदात्तत्वासिद्धिः । अन्यथा फिट्स्वरेण उदात्तगोशब्दस्य[2] स्थाने भवतोऽवङादेशस्यान्तर्यादुदात्ताचकत्वेऽपि तदीयस्य आदिमस्यैव अच उदात्तत्वे मानाभावादन्त्यस्यापि कदाचित्तथात्वे गवाग्रादौ आद्युदात्तनियमो न स्यात् । न चैवं गवाग्रादौ तत्पुरुषे समासान्तोदात्तत्वं न स्यात्, परत्वात्तस्मिन् कृते प्रवर्तमानस्यावङ्स्वरेण सतिशिष्टेन बाधादिति वाच्यम् ; अवङ उपदेशिवद्भावेन पूर्वमवङि पश्चात् समासस्वरे इष्टसिद्धेः । एतच्च षाष्ठभाष्यादौ स्थितम्[3] ॥

॥ इति प्रत्ययस्वरप्रकरणम् ॥

---

1. चित्रगवाग्रम् ङ. ज.
2. उदात्तस्य गोशब्दाचः ङ.
3. स्पष्टम् क. ख. घ. ङ.

## ॥ अथ धातुस्वरः ॥

### [१९] ॥ धातोः ॥ (6—1—162)

'कर्षात्वतः' इत्यतः 'अन्त उदात्तः' इत्यनुवर्तते । अस्वरस्याच उच्चारणासंभवात् अनियमेन यः कश्चित् स्वरः प्राप्त इति सर्व एव स्वरविधिर्नियमार्थः । धातोरन्त उदात्त एव भवति । 'अनुदात्तं पदम्' इति नियमाच्छिष्टमनुदात्तमेव । यत्र धातोर्विहितः प्रत्ययः अनुदात्तो लुप्तो वा, तत्रास्य स्वरस्य श्रवणम् । अन्यत्र सतिशिष्टत्वात् प्रत्ययस्वरादिः । यथा—'भवत्यात्मना' । अत्र शप्तिपावनुदात्तौ । 'यद्यजते' । अत्रापि शप् पित्त्वादनुदात्तः । ततः परं लसार्वधातुकमदुपदेशात् परत्वात् 'तास्यनुदात्तेन्ङिददुपदेशात्' इत्यनुदात्तम् । सर्वत्र 'उदात्तादनुदात्तस्य' इत्यनुदात्तस्य स्वरितत्वं 'स्वरितात् संहितायाम्' इत्यैकश्रुत्यं च यथायथं बोध्यम् । समानवाक्यस्थपदात् परत्वाभावात् 'भवति' इत्यत्र तिङ्निघाताभावः । 'निपातैर्यद्यदि' इति यद्योगात् 'यजते' इत्यत्र निघाताभावः । 'वागस्यैन्द्री' । अत्र 'क्विब्वचि' इति विहितस्य क्विपो लोपाद्धातुस्वरः । नन्वन्तग्रहणानुवृत्तिरफला[1], 'अलोऽन्त्यस्य' इत्येव धात्वन्तस्यान्तोदात्तत्वसिद्धेरिति चेत्—न ; 'स्वरविधौ सङ्घातः कार्यी' इति परिभाषया स्वरविधौ 'अलोऽन्त्यस्य' इत्यादेरप्रवृत्तेरुक्तत्वात् । एवं चान्तग्रहणाननुवृत्तौ प्रथमातिक्रमे कारणाभावात् धातोरादेरुदात्तत्वप्रसङ्गः । अत एव 'किं धातोरन्त उदात्तो भवति आहोस्विदादिः' इत्यादिरूपे प्रकृतसूत्रगते 'अनुदात्तस्य च यत्र' इति सूत्रगते च भाष्यवार्तिके 'यद्यन्तग्रहणमभिसंबध्यते, ततोऽन्तस्योदात्तेन[2] भवितव्यम्[3] ; अथ नानुवर्तते तदा क्रमानुल्लङ्घनादादेर्भवितव्यमिति पक्षद्वयसंभवः' इति कैयट उपापीपदत्[4] । अनेनैवाभिप्रायेण. अन्तग्रहणानुवृत्तिर्वृत्तिकृतापि आश्रिता[5] । यद्यप्येकाक्षु

---

1. -अनुवृत्तिरपि किमर्था घ.
2. उदात्तत्वेन ग. घ.
3. भाव्यम् छ.
4. उदपीपदत् छ.
5. अत्राश्रिता ख. ग. घ. ङ.

धातुषु आदेरुदात्तत्वेऽपि न दोषः, अनेकाक्ष्वपि अभ्यस्तसंज्ञकेषु 'यदि जाग्रद्यदि स्वप्ने', 'मनसा दीध्यानः' 'जहात्येनाम्', 'ददातु वीरम्' इत्यादौ 'अभ्यस्तानामादिः' 'अनुदात्ते च' इति इष्यत एव आद्युदात्तत्वम् । एवं सन्नन्तेषु च 'यः संग्रामं जिगीषति', 'यो वा बुभूषेत्' इत्यादौ नित्स्वरेणाद्युदात्तत्वमपि इष्यत एव । 'य एवं विद्वान् विचिकित्सति' इत्यत्र तु व्यत्ययात् ककारेकार उदात्तः । णिजन्तेषु तु 'यो याजयति' 'यत् साधयति' इत्यादौ 'चितः' इत्येव सिद्धमन्तोदात्तत्वम् ; तथापि 'यज्जञ्जभ्यते', 'जञ्जभ्यमानो ब्रूयात्', 'चङ्क्रम्यमाणाय स्वाहा', 'यदि कामयेत' 'कण्डूयमानाय स्वाहा', 'यद्धस्तेन कण्डूयेत', हिनस्ति वै संध्यर्धीतम्', 'पूर्वार्धेनानड्वान्भुनक्ति', 'गोपायनः स्वस्तये' यर्थर्षभाय वाशितान्याविच्छायति' इत्यादौ यङन्ते णिङन्ते[1] कण्ड्वादियगन्ते श्नम्प्रत्ययगर्भधातौ[2] गुप्धातौ आयप्रत्ययान्ते ऊर्णोतीत्यादिषु[3] चान्तोदात्तत्वार्थमन्तग्रहणम् । अन्यथा उक्तरीत्या आद्युदात्तत्वप्रसङ्गः । जभी जृभि—गात्रविनामे । 'लुपसद्चरजपजभ' इति जभेर्यङि 'सन्यङोः' इत्यादिना द्विर्वचनादौ 'जपजभ' इत्यभ्यासस्य नुकि लडादौ जञ्जभ्यतेशब्दः । तत्र शपो लसार्वधातुकस्य चानुदात्तत्वात् धातुस्वरः । जञ्जभ्यतेर्लटः शानचि आने मुकि लसार्वधातुकानुदात्वे च जञ्जभ्यमानेत्यत्रापि स एव स्वरः । चङ्क्रम्यमाणायेति क्रमेर्यङि 'नुगतोऽनुनासिकान्तस्य' इति नुक् । इतरत् पूर्ववत् । यत्तु स्वरमञ्जर्याम्—यङन्ते णिजन्ते च प्रत्ययस्वरेणैवान्तोदात्तत्वसिद्धेर्न तदर्थमन्तग्रहणम्—इति, तदसत् ; अन्तग्रहणाभावे प्रत्ययस्वरं बाधित्वा परत्वात् सतिशिष्टत्वाच्च 'धातोः' [4]इति आद्युदात्तत्वप्रसङ्गात् । एतेन ''गोपायति' इत्यादावसत्यन्तग्रहणे प्रत्ययादिराकार उदात्तः स्यात्' इति तत्रोक्तं प्रत्युक्तम् । यदि च परिभाषाप्रकरणोक्तरीत्या 'स्वरविधौ सङ्घातः कार्यी' इति परिभाषा नाश्रीयते, तदा नात्रान्तग्रहणस्य किंचित् फलमिति मन्तव्यम् ।

---

1. णिजन्ते क.
2. श्नम्प्रत्ययान्ते क.
3. ऊर्णोतीत्यादिषु च क. नास्ति ।
4. इत्युभयत्र छ.

अथान्तग्रहणे सति 'पाघ्राध्मा' इति विहिते पिबादेशे स्थानिवद्भावेन 'धातोः' इत्यन्तस्याकारस्योदात्तत्वं स्यात्; 'पिबति' इत्यादौ लघूपधगुण-निवृत्तये तस्यादन्तत्वाश्रयणात्। ततश्च 'या पर्णेन पिबति', 'अञ्जलिना वा पिबेत्' इत्यादौ आद्युदात्तत्वश्रवणविरोधः, शपा सहैकादेशे[1] एकादेश-स्वरेण द्वितीयस्योदात्तत्वप्रसङ्गादिति चेत्—न; 'पाघ्रा' इति सूत्रे 'पिब' इत्याद्युदात्तत्वनिपातनाश्रयणादिति भाष्यादौ। स्वरमञ्जर्यां तु—पिबिरदन्त एव न। लघूपधगुणाभावस्तु 'लोपः पिबतेः' इति निपातनात्। अतो न [2]कश्चिद्दोषः—इत्युक्तम्। नन्वेवमपि 'पिबेत्' इत्यत्र कथमाद्यु-दात्तत्वम्[3]? 'यासुट् परस्मैपदेषूदात्तो ङिच्च' इति यासुट उदात्तत्वेन तत्स्थानिकस्य 'अतो येयः' इतीयादेशस्याप्युदात्तत्वेन [4]तेनैकादेशस्य एकादेशस्वरेणोदात्तत्वौचित्यादिति चेत्—[5]अत्रोक्तं स्वरमञ्जर्याम्—यासुट उदात्तत्वेऽपि स्थानिवद्भावेन इयादेशस्य नोदात्तत्वम्; 'स्थानिवदादेशः' इत्यत्र हि उक्तम् 'धात्वङ्गकृत्तद्धिताव्ययसुप्तिङ्पदादेशाः प्रयोजनम्' इति। न ह्यत्र 'धात्वाद्यादेशा धात्वादिवद्भवन्ति' इतिवत् 'आगमादेशा आगमवद्भवन्ति' इति [6]अभिहितम्—इति, तत्तुच्छम्। न हि 'धात्वङ्ग-कृत्तद्धित' इत्यादि वार्तिकं भाष्यं वा। किं तु वार्त्तमिदं वाक्यम्। तदपि प्रयोजनदिक्प्रदर्शनपरम्, न तु परिगणनपरम्, अन्यथा सिच्क्सचङ्ङादीनां आदेशस्य शानचश्च स्थानिवद्भावानापत्तेः। 'धात्वङ्ग' इत्यादावपाठात्। हरदत्तेनापि 'प्रयोजनदिक्प्रदर्शनमेतत्' इत्युक्तत्वाच्च[7]। अपि च आगमादेशस्यागमवद्भावाभावे 'अग्रहीत्' इत्यत्र 'पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्य' इति न्यायेन प्रथमं 'ग्रहोऽलिटि दीर्घः' इतीटो दीर्घत्वे कृते स्थानिवद्भावेन 'इट ईटि' इति

1. सह तस्यैकादेशे ङ.
2. क्वचिद्दोषः ङ.
3. कथमादिरुदात्तः घ.
4. शपा सह तदेकादेशस्य ख. ग.
5. अत्रोक्तम् घ. नास्ति।
6. अभिहितमिति क. ख. घ. नास्ति।
7. हरदत्तेन...उक्तत्वाच्च क. ग. घ. ङ. नास्ति।

सिज्लोपो न स्यात् । व्यक्तं च स्थानिवत्सूत्रस्थयोः[1] 'सामान्यातिदेशे विशेषानतिदेशः' इति वार्तिकभाष्यकैयटयोः 'अग्रहीत्' इत्यत्र स्थानिवद्भावेन ईट इट्त्वमाश्रित्यैव सिज्लोप इति । यत्तु 'धात्वङ्ग' इत्यादिवृत्तिकृद्वचोऽर्थप्रदर्शिकां स्वरमञ्जरीं व्याचक्षाणेन परिमळकृताभिहितम्—लेशतो वार्तिकार्थमाह—धात्वादेश इति । न ह्यत्रेति । अस्मिन् वार्त्तिक इत्यर्थः—इति, तत् वृत्तिकृद्वचने वार्त्तिकत्वभ्रान्त्या । यदपि तेनैवाभिहितम्—'धात्वङ्ग' इत्यादिस्वरमञ्जर्यभिहितसमाधानमभ्युच्चयमात्रम् । स्वरविधेरल्विधित्वात् 'अनल्विधौ' इति निषेधादेव इयादेशस्य स्थानिवत्त्वनिवृत्तिरिति वास्तवः परिहारः—इति, तदपि मन्दम् ; 'अनल्विधौ' इति निषेधो हि स्थान्यलाश्रये कार्ये भवति । यथा 'द्यौः' 'पन्थाः' इत्यादौ । अत्र हि 'दिव औत्' 'पथिमथ्यृभुक्षामात्' इति विहितयोरौकाराकारयोः स्थानिवत्त्वेन हल्त्वमाश्रित्य 'हल्ङ्याभ्यः' इति सुलोपो न । न चात्र इयादेशस्य उदात्तत्वं स्थान्यलाश्रयम् ; येन प्रतिषेधः स्यात् । न च अलि विधीयमाने स्थानिवत्त्वं 'अनल्विधौ' इति निषिध्यते, तच्चेहाप्यस्तीति युक्तम् ; 'अरुदिताम्' 'अरुदितम्' इत्यादौ तसाद्यादेशस्य तामादेः स्थानिवत्त्वेन सार्वधातुकत्वमाश्रित्य 'रुदादिभ्यः सार्वधातुके' इति इडभावप्रसङ्गात् । अस्ति हि अत्र इड्रूपस्य अलो विधिरिति निषेधापत्तेरित्यादिना भाष्यादावेवास्य पक्षस्य दूषितत्वात् । अत एव फिट्सूत्रेण[2] अन्तोदात्तस्य त्रिशब्दस्य स्थाने भवन् तिसृशब्दः स्थानिवद्भावेनान्तोदात्त इति 'तिसृभ्यो जसः' इत्यत्र कैयटादयः । अपि च मास्त्वागमादेशस्यागमवद्भावः, तथापि इयादेशस्योदात्तत्वं दुर्वारमेव ; स्थानेऽन्तरतमपरिभाषया उदात्तवतो यासुटः स्थाने तथाविधस्यैव इयादेशस्य भावादिति । तर्हि 'पिबेत्' इत्यत्र कथमाद्युदात्तत्वमिति चेत्—इत्थम् ; 'तास्यनुदात्तेन्ङिददुपदेशात्' इति लसार्वधातुकानुदात्तत्वं शब्रूपाददुपदेशाद्भवत् यासुटो भवति, लसार्वधातुकरूपागमिग्रहणेन तस्य ग्रहणादिति यासुटोऽनुदात्तत्वे तत्स्थानिकस्य इयादेशस्याप्यनुदात्तत्वेन एकादेशस्याप्यनुदात्तत्वे धातुस्वरस्यैवावस्थाना-

---

1. सूत्रगतयोः छ. 2. फिट्स्वरेण ग. घ. ङ.

दिति । एवमेव 'यत्र स्कन्देत्', 'यदि बलिं हरेत्', 'स येन यज्ञक्रतुना याजयेत्' इत्यादावपि धातुस्वरो बोध्यः । 'यद्येकं कपालं नश्येत्' इत्यादौ श्यन्विकरणेऽपि नित्त्वाद्धातुस्वरः । 'यन्नावद्येत्' इत्यादौ तु 'ओतः श्यनि' इत्योकारलोपे नित्स्वरेणोदात्तनिवृत्तिस्वरेण वान्तोदात्तत्वम् । 'यदक्षसङ्गं वृश्चेत्', 'यदि हिरण्यं न विन्देत्' इत्यादौ अदुपदेशाल्लसार्वधातुकमनुदात्तमिति यासुटोऽनुदात्तत्वेऽपि शविकरणस्योदात्ततया एकादेशस्वरेणान्तोदत्तत्वं बोध्यम् । इदं त्ववधेयम्— अस्ति हन्तेर्वधादेशः 'हनो वध लिङि' 'लुङि च' इति सूत्रविहितः । तस्य चाद्युदात्तनिपातनम्[1] आश्रितम् 'अवधीत्' 'अवधिष्ट' इत्यादौ इण्णिषेधाभावाय । अन्यथा हन्तेरुपदेशेऽनुदात्तत्वादेकाच्त्वाच्च स्थनिवद्भावेन 'अवधीत्' इत्यादौ 'एकाच उपदेशे' इति इण्णिषेधप्रसङ्गात् । एवं च 'यदा वधिषीष्ट' इत्यादौ स निपातनस्वरः प्रत्ययस्वरं बाधेत[1], आर्धधातुके परतो वधादेश इति तन्निपातनस्वरस्य सतिशिष्टत्वात् इति । स्यादादेशे[2] निपातनस्वरस्य सतिशिष्टत्वं यद्यार्धधातुके परतो वधादेशः, न त्वेवम् ; 'आर्धधातुके' इति विषयसप्तम्याश्रयणात् । एवं चार्धधातुकोत्पत्तेः पूर्वमेव[3] वधादेशे पश्चात् आर्धधातुकम् इति प्रत्ययस्वरस्यैव सतिशिष्टत्वात् इष्टसिद्धिः[4] इति दिक् ॥

## [२०] ॥ अनुदात्ते च ॥ (6—1—190)

न विद्यते उदात्तो यत्र तत्र[5] लसार्वधातुके परतोऽभ्यस्तानां आदिरुदात्तः स्यात्[6] । 'अभ्यस्तानामादिः' इति सिद्धे अनजाद्यर्थोऽयमारम्भः । 'ददातु वीरम्' । 'याभिर्ददासि' । पित्त्वात्तिप्सिपौ अनुदात्तौ । 'यद्यजुषा मिमीते' । ङितः परत्वाल्लसार्वधातुकमनुदात्तम् ।

---

1. -निपातनम् घ. नास्ति ।
2. स्यादेवं निपा- ग. घ. ङ.
3. प्रागेव ङ.
4. इष्टसिद्धेः घ.
5. तत्र ग. नास्ति ।
6. स्यात् ग. घ. ङ. नास्ति ।

योगानारम्भे तु अत्र धातुस्वरेण उदात्तस्य द्विर्वचने 'द्विः प्रयोगो द्विर्वचनं षाष्ठम्' इति सिद्धान्तात् दळद्वयमपि उदात्तम्, 'अनुदात्तं पदम्' इत्युक्तेः पर्यायो वा स्यात्। 'अनुदात्ते' इति बहुव्रीहिनिर्देशाश्रयणादिहापि भवति। 'मा हि स्म दधात्'। 'जहात्येनाम्'। 'नीचैरनुदात्तः' इति पारिभाषिकग्रहणे तु न स्यात्। नित्यत्वात् अन्तरङ्गत्वाच्च 'इतश्च' इति इकारलोपे यणि च सति अनुदात्ताभावात्। धात्रः 'स्मोत्तरे लङ् च' इति लङि 'दधात्' इति रूपम् ॥

## [२१] ॥ भीह्रीभृहुमदजनधनदरिद्राजागरां प्रत्ययात् पूर्वं पिति ॥ (6—1—192)

एषामभ्यस्तानां पिति लसार्वधातुके परे प्रत्ययात् पूर्वमुदात्तं भवति[2]। पूर्वापत्रादः। बिभेति। जिह्रेति। 'य आण्डकोशे भुवनं बिभर्ति'। 'बिभर्ष्यस्तवे' इत्यत्र तु व्यत्ययेनाद्युदात्तत्वम्। 'योऽग्निहोत्रं जुहोति'। 'ममत्तु नः परिज्मा'। माद्यतेर्लोटस्तिप्। 'बहुलं छन्दसि' इति श्यनः श्लुः। मदेः शपः श्लुः इत्यन्ये। 'जजनदिन्द्रम्'। 'दधनद्धानिष्ठाः'। जन—जनने। धन—धान्ये। लिङर्थे लेट्। तिप्। इतश्च लोपः परस्मैपदेषु। शपः श्लुः। द्विर्वचनादि[3]। 'लेटोऽडाटौ' इत्यट्। 'अभ्यस्तानामादिः' इत्येतदपि अत्र परत्वाद्बाध्यते। दरिद्राति। जागर्ति। 'भीह्री' इत्यादि किम्? 'ददातु वीरम्' पिति किम्? दरिद्रति। परत्वात् 'श्नाभ्यस्तयोरातः' इत्याकार लोपे इकार उदात्तः स्यात्। पूर्वग्रहणं 'सौवर्यः सप्तम्यस्तदन्त सप्तम्यः' इत्यस्य ज्ञापकम्। प्रत्ययग्रहणं तु 'स्वरविधौ सङ्घात कार्यो' इत्यस्य। उभयमेतत् परिभाषाप्रकरण एव प्रदर्शितम् ॥

॥ इति धातुस्वरप्रकरणम् ॥

---

1. हि घ. नास्ति।
2. भवति घ नास्ति।
3. द्वित्वादि घ.

## ॥ अथ प्रत्ययस्वरः ॥

## [२२] ॥ आद्युदात्तश्च ॥ (3—1—3)

अधिकारोऽयं 'गुप्तिज्किद्भ्यः सन्' इत्यारभ्य आ पञ्चमाध्यायपरिसमाप्तेः प्रतियोगमुपतिष्ठते । तेन विधानसमय एव सनादयः सर्वेऽपि प्रत्यया आद्युदात्तत्वविशिष्टा विधीयन्त इति फलितम् । अस्वरकस्याच उच्चारणासंभवात् अनियमेन यः कश्चन[1] स्वरः प्राप्त इति सर्व एव स्वरविधिर्नियमार्थ इत्युक्तम् । तत्र 'प्रत्ययस्य आदिरुदात्त एव' इति नियमार्थमिदम् । 'अनुदात्तं पदम्' इति वचनाच्छिष्टमनुदात्तमेव । व्यपदेशिवद्भावादेकाक्ष्वपि प्रत्ययेष्वयं नियमः । 'पूतं पवित्रेण' । क्तप्रत्ययान्तः पूतशब्दः । इत्रप्रत्ययान्तः पवित्रशब्दः । 'पुवः संज्ञायाम्' इति इत्रप्रत्ययः । ननु 'उपोत्तमं रिति', 'चितः', 'तित्स्वरितम्', 'अनुदात्तौ सुप्पितौ', 'एकश्रुति दूरात् संबुद्धौ' इत्यादौ रित्येव[2] मध्य उदात्तः, चित एवान्त उदात्त इत्यादिनियमाश्रयणात् परिशेषादन्यः प्रत्यय आद्युदात्त एव भविष्यतीति किमर्थं सूत्रमिति चेत्—न ; 'चितः अन्त एवोदात्तः' इति विपरीतनियमः किं न स्यात् ? किं च त्वदुक्तेऽपि नियमे चिदादीनामनियमः स्यात् । 'यदि[3] चित् चितः अन्त उदात्त एव' इत्यादिरूपो नियम आश्रीयते तर्हि प्रत्ययान्तरस्यानियतस्वरत्वं दुर्वारमित्यारम्भणीयं सूत्रम् । इदं तु स्यात् —[4]स्वरप्रकरण एव 'ञ्नित्यादिर्नित्यम्' इत्यनन्तरं[5] 'प्रत्ययस्य च' इति सूत्रयितव्ये[6] किमर्थं प्रकरणभेदेनात्रेदमाद्युदात्तत्वमुच्यते[7] ? न च तत्र करणे प्रत्ययग्रहणपरिभाषया तदन्तस्य स्वरः स्यात् । इह तु करणे न दोषः ; उत्पद्यमानदशायामेव प्रत्ययस्य आद्युदात्तत्वप्रवृत्तेः ।

---

1. कश्चित् ग. घ.
2. रिदन्त एव घ.
3. यदि च चिदन्तः घ.
   चितोऽन्तः ग.
4. ननु घ. अधिकम् ।
5. इत्यस्यानन्तरं ग.
6. सूत्रयितव्यम् ग. घ.
7. इति ग. घ. ङ. अधिकम् ।

न च[1] तदानीं प्रत्ययस्य स्वकार्यं तदन्तविध्यादिकं प्रति निमित्तत्व-संभवः ; अनुत्पन्नत्वात् । उत्पन्नस्यैव प्रत्ययस्य घटादिवत् [2]स्वकार्यनिमित्तत्वादिति वाच्यम् ; तत्र 'प्रत्ययस्य च' इति करणेऽपि 'ञ्नित्यादिर्नित्यम्' इति लिङ्गात् तदन्तविध्यप्रवृत्तेः । यदि हि 'प्रत्ययस्य च' इत्यत्र तदन्तविधिः स्यात्, तर्हि [3]ञ्नित्प्रत्ययान्तस्याद्युदात्तत्वविधानमनर्थकम् ; तेनैव सिद्धत्वात् । अथ 'स्रौघ्नी' 'पौर्णमासी' इत्यादौ उदात्तनिवृत्तिस्वरः प्रत्ययसंज्ञासन्नियोगेन आद्युदात्तत्वविधेः फलम् । अन्यथा स्रुघ्नशब्दात् पूर्णमासशब्दाच्च 'तस्येदम्' इति 'पूर्णमासादण् वक्तव्यः' इति च अणि तदन्तान्ङीपि 'स्रौघ्न ई' 'पौर्णमास ई' इति स्थिते[4] 'प्रत्ययस्य च' इत्याद्युदात्तत्वं बाधित्वा परत्वात् 'यस्येति' लोपे उदात्तनिवृत्त्यभावात् स न स्यादिति चेत्—न ; अन्तरङ्गत्वात् 'यस्येति' लोपात् प्राक् 'प्रत्ययस्य च' इति स्वरप्रवृत्तेः[5] । लोपो हि ङीबुत्पत्तिमपेक्षते । स्वरस्तु तन्निरपेक्षः । अवश्यं चेदमन्तरङ्गत्वमाश्रयणीयम् । अन्यथा प्रत्ययसंज्ञासन्नियोगेन आद्युदात्तत्वकरणेऽपि 'आग्नेयी' इत्यादावुदात्तनिवृत्तिस्वरो न स्यात् ; 'तद्धितस्य कितः' इति स्वरं बाधित्वा परत्वात् 'यस्येति' लोपे उदात्तनिवृत्त्यभावात् । अग्नेर्ढकि 'टिड्ढ' इति ङीपि 'आग्नेयी' । [6]स्यादेतत्—इडाद्यागमस्य [7]अनुदात्तत्वार्थमत्र[8] प्रत्ययाद्युदात्तकरणम् । अन्यथा 'शयिताय स्वाहा' 'पलायिष्यमाणाय' इत्यादौ 'प्रत्ययस्य च' इति स्वरात्[9] परत्वात् इटि कृते तस्य प्रत्ययग्रहणेन ग्रहणादिट एव प्रत्ययाद्युदात्तत्वं स्यात् । न च स्वरभिन्नस्य प्राप्त इडागमः अनित्य इति वाच्यम् ; शब्दान्तरप्राप्त्या[10] स्वरस्यापि अनित्यत्वात् । अत्र

---

1. न हि प्रत्ययस्य तदा घ.
   न च तदा स्वकार्यन्त- ग. ङ.
2. स्वरकार्य- घ.
3. किं ञिनि...त्वविधिना ख. ग. घ. ङ.
4. स्रौघ्न.... स्थिते घ. नास्ति ।
5. प्रागाद्युदात्तत्वप्रवृत्तेः घ.
6. न च इडागमस्य घ. ।
7. उदात्तत्वार्थं घ.
8. अत्र ग. नास्ति ।
9. अस्मात् घ.
10. शब्दान्तरस्य प्राप्तेः घ.

प्रत्ययाद्युदात्तत्वविधौ तु[1] प्रत्ययोत्पत्तिकाल एवाद्युदात्तत्वे [2]कृते पश्चाद्भवत[3] इडागमस्य सिध्यति अनुदात्तत्वमिति । नैतदपि प्रयोजनम् ; 'यासुट् परस्मैपदेषूदात्तो ङिच्च' इति यासुट उदात्तवचनाल्लिङ्गादेव[4] आगमानामनुदात्तत्वात् । अन्यथा 'चिनुयात्' 'चिनुयाताम्' इत्यादौ यासुटः[5] प्रत्ययत्वात्[6] सिद्धमुदात्तत्वमित्यनर्थकं तत् स्यात् ॥

ननु 'चिनुयात्' इत्यादौ पिद्भक्तस्य यासुटः पिद्ग्रहणेन ग्रहणात् प्रत्ययस्वरं बाधित्वा 'अनुदात्तौ सुप्पितौ' [7]इत्यनुदात्तत्वं स्यात् । अतस्तद्बाधनाय उदात्तवचनमिति कथमस्य लिङ्गत्वमिति चेत्—न ; यद्येतावत् प्रयोजनं स्यात्, पित्त्वमेव प्रतिषेधेत्[8] 'यासुट् परस्मैपदेष्वपिच्च' इति । एवं च ङित्त्वमपि न वक्तव्यम्[9], 'सार्वधातुकमपित्' इत्येव सिद्धेः[10] । एवं सिद्धे 'उदात्तो ङिच्च' इति वचनं लिङ्गमेवागमानुदात्तत्वस्य । अवश्यं चैतज्ज्ञापकमाश्रयणीयम् । अन्यथा प्रत्ययसंज्ञासन्नियोगेनाद्युदात्तविधावपि, 'लविषीय' 'मन्दिषीमहि' इत्यादौ लावस्थायामनच्कत्वात् असति[11] स्वरे विशेषविहितत्वात् परत्वाच्च सीयुटि कृते पश्चाल्लादेशे प्रत्ययाद्युदात्तत्वं सीयुट एव स्यात् । ज्ञापकाश्रयणे तु [12]सीयुडनुदात्तः, 'इटोऽत्' इत्यकारो महिङ इकारश्च प्रत्ययस्वरेणोदात्तो भवति । ननु[13] कथं भवति ? यतः सीयुटि कृते अकारस्य विच्छिन्नमादित्वमिति चेत्[14]—न ; यासुट उदात्तवचनाल्लिङ्गात् प्रत्ययाद्युदात्तत्वे कर्तव्ये आगमानामविद्यमानवत्त्वात् । अन्यथा 'चिनुयाताम्' इत्यादौ यासुटः प्रत्ययादित्वात् सिद्धमुदात्तत्वमित्यनर्थकं तत् स्यात् इति भाष्यादौ ॥

---

1. तु घ. नास्ति ।
2. कृते ग. नास्ति ।
3. पाश्चात्यस्य सिध्यतीडागमस्य घ.
4. एव घ. नास्ति ।
5. यासुडागमस्य घ.
6. प्रत्ययादित्वात् ग. घ. ङ. छ.
7. इत्यनुदात्तत्वबाधनाय घ.
8. प्रतिषिध्येत् क.
9. कर्तव्यम् ग. छ.
10. तत्सिद्धेः ग.
11. सति स्वर- ग. अस्ति स्वरविशेष- घ.
12. सीयुडनुदात्तः घ. नास्ति ।
13. न च घ.
14. वाच्यम् घ.

हरदत्तस्तु—'लवितव्यम्' 'जागरितार्य' इत्यादावपि इडागमस्य अनुदात्तार्थम् आगमानुदात्तत्वमवश्याश्रयणीयम् । अन्यथा प्रत्ययसंज्ञा-सन्नियोगेनाद्युदात्तत्वविधानेन पूर्वमाद्युदात्तत्वे [1]सत्यपि पश्चाद्भवन्निट् किमित्यनुदात्तो भवति । न च [2]शेषनिघातेनेति वाच्यम् ; शेषनिघात-शास्त्रस्य हि यस्मिन् पदे यस्यामवस्थायां उदात्तः स्वरितो वा विधीयते तस्मिन् पदे तस्यामवस्थायां सन्निहितमजन्तरं निहन्यत इत्यर्थः । न चायं प्रकारोऽत्र संभवति—इत्याह ॥

अत्र चोदयन्ति—यासुडुदात्तवचनं कथमागमानुदात्तत्वस्य तदविद्यमानवद्भावस्य च ज्ञापकम् ? न चोभयं विना तदनुपपत्तिः अन्यतरज्ञापनेन तस्य चरितार्थत्वात् । न चान्यतरज्ञापन एव भाष्यादेस्तात्पर्यम् ; आगमानुदात्तत्वमात्रज्ञापने [3]हि 'मन्दिषीमहि' इत्यादौ तेन व्यवधानात् महिङादेः प्रत्ययाद्युदात्तत्वाभावप्रसङ्गात् । तदविद्यमानवत्त्वमात्रज्ञापने हरदत्तोक्तरीत्या 'लवितव्यम्' इत्यादौ [4]इडनुदात्तत्वाभावप्रसङ्गात् । 'आगमानुदात्तार्थं वोदात्तवचनम्' इति 'यासुट्परस्मैपदेषु' इति सूत्रस्थवार्तिकविरोधाच्चेति । अत्राहुः—विनिगमनाविरहाल्लक्ष्यानुसाराच्चोभयज्ञापकं यासुडुदात्तवचनमिति ॥

केचित्तु—शेषनिघातस्वरप्रवृत्तिसमये [5]यदेतत् सन्निहितमजन्तरं तस्यैवेति न नियमः, किं तु पदे संभावितस्याज्मात्रस्य । [6]तत्र हि पदग्रहणं पदगतस्य कृत्स्नस्याचोऽनुदात्तत्वार्थमिति हरदत्तादिभिरुक्तम् । एवं सत्येव सतिशिष्टस्वरप्राबल्यं न्यायसिद्धमित्युपपद्यते[7] । अत एवागमानु-दात्तत्वप्रयोजकः सीयुडागम एव, न त्विडागम इति भाष्ये दर्शितम् । एवं [8]च 'लवितव्यम्' इत्यादौ इडागमस्य शेषनिघातेनैवानुदात्तत्व-

---

1. सति घ. नास्ति ।
2. शेषनिघातेनानुदात्त इति वाच्यम् घ.
   शेषनिघातेन । शेषनिघात... ग. ङ.
3. हि ङ. छ. नास्ति ।
4. इडुदात्तत्वाभाव- च.
5. पदे यत् ङ.
6. तदा घ.
7. इत्यपि उपपद्यते ङ. छ.
8. च ग. नास्ति ।

सिद्धेरागमाविद्यमानत्वमेव यासुडुदात्तवचनेन ज्ञाप्यते । न चैवं शेषनिघातोऽपि आगमस्य न स्यात्, अविद्यमानवत्त्वादिति वाच्यम् ; प्रत्ययाद्युदात्तत्वे कार्य एव तस्याविद्यमानत्वात्, शेषनिघातं प्रति तदभावादिति वदन्ति ॥

आगमानुदात्तत्वेऽपि 'ततो देवा अभवन्', 'य एषां पशव आसन्', 'चत्वार ऋत्विजः', 'अनड्वाहमग्नीधे' इत्यादौ अडाटोः आमागमस्य च[1] नानुदात्तत्वम् ; 'लुङ्लङ्लृङ्क्ष्वडुदात्तः', 'आडजादीनाम्', 'चतुरनडुहोरामुदात्तः' इति च सूत्रैस्तस्य उदात्तविधेः[2] । एवं मूट्मुटोरप्यागमयोर्नानुदात्तत्वम् ; 'जेर्मूट् चोदात्तः', 'डित्खनेर्मुट् स चोदात्तः' इत्युणादौ तयोरुदात्तयोर्विधानात् । जिधातोः क्तप्रत्ययः स्यात्, तस्य मूडागमः धातोश्च दीर्घः इत्याद्यसूत्रार्थः । 'जीमूतस्येव' । खनेरजलौ प्रत्ययौ स्तः, [3]तौ डिद्वद्भवतः[4], खनेर्मुडागमश्चेति द्वितीयस्यार्थः । 'मुखमुत्तरवेदिः' । श्नम्प्रत्ययस्यापि नागमानुदात्तत्वम् ; परत्वाद्धातुस्वरेण बाधात् । 'पूर्वार्द्धेनानड्वान् भुनक्ति' । लुनातेः 'माङि लुङ्' इति लुङि 'मा हि लावीत्' इत्यादौ 'आदिः सिचोऽन्यतरस्याम्' इत्याद्युदात्तत्वाभावपक्षे 'इट ईटि' इति सिज्लोपेऽपि प्रत्ययलक्षणेन सिच इडागमस्य 'चितः' इत्यन्तोदात्तत्वं[5] भवति ; अनचकस्य सिचश्चित्त्वसामर्थ्यादागमानुदात्तत्वबाधात् । एतच्च 'च्लेः सिच्' इत्यत्र भाष्यकैयटयोः स्पष्टम् । तदेवमागमानुदात्तत्वमपि न प्रत्ययसंज्ञासन्नियोगेनाद्युदात्तत्वविधेः फलमिति[6] ॥

अत्राहुः—'गोपायति' इत्यादौ धातुस्वरसिद्धिरत्र प्रत्ययाद्युदात्तत्वकरणफलम् । 'ञ्नित्यादिर्नित्यम्' 'प्रत्ययस्य च' इत्युक्तौ धातुस्वरं परत्वाद्बाधित्वा अत्र प्रत्ययस्वरः स्यात् । अत्र प्रत्ययाद्युदात्तत्वविधौ तु प्रत्ययोत्पत्तिसमय[7] एव तदाद्युदात्तत्वे प्रसक्ते[8] सतिशिष्टत्वात्

1. वचनादुदात्तत्वम् घ.
2. तदुदात्तत्वविधेः ग. घ.
3. तौ च ग. घ.
4. भवतः घ. नास्ति।
5. इत्युदात्तत्वं ग. घ. ङ.
6. इति चेत्। अत्राहुः घ. छ.
7. -काले घ.
8. -प्रवृत्तेः ग. घ.

परत्वाच्च 'गोपायति' इत्यादौ धातुस्वरः सिध्यतीति । ननु प्रत्ययोत्पत्तिसमय[1] एव प्रत्ययाद्युदात्तत्वविधौ 'द्वादशाहीनस्य' इत्यादौ अहीनादिपदमन्तोदात्तं स्यात् ; 'अह्नः खः क्रतौ' इति विहितस्य[2] खप्रत्ययस्य ईनादेशात् प्रागेव प्रत्ययाद्युदात्तत्वप्रवृत्तेः । एवं 'छन्दसि घस्[3]' 'ढश्छन्दसि' इत्यादिसूत्रविहितघसादि[4]प्रत्ययान्तानामपि अन्तोदात्तत्वं स्यात् । ततश्च 'अयं ते योनिर्ऋत्वियः', 'सभेयो युवा' इत्यादौ तेषां मध्योदात्तत्वश्रवणविरोध इति चेत्—न ; 'आयन्नादिषु उपदेशिवद्वचनं स्वरसिद्ध्यर्थम्' इति वार्त्तिकात् प्रत्ययाद्युदात्तत्वात् पूर्वमेव खादीनामीनाद्यादेशप्रवृत्तेः । वस्तुतो नेदं [5]वार्त्तिकमावश्यकम् ; 'अग्राद्यत्' 'घच्छौ च' इति घचश्चित्करणात् आयन्नादीनामुपदेशिवद्भावज्ञापनात् । अन्यथा प्रत्ययस्वरेणैव प्रागुक्तरीत्या 'अग्रियम्' इत्यादिघजन्तस्यान्तोदात्तप्रवृत्तौ[6] किं चित्त्वेन ? एवं 'झोऽन्तः' 'अदभ्यस्तात्' 'आत्मनेपदेष्वनतः' इति सूत्रविहितः अन्तादेशोऽदादेशश्च प्रत्ययाद्युदात्तत्वात् प्रागेव प्रवर्तते[7] आयन्नादिवत्[8] । ततः प्रत्ययाद्युदात्तत्वम् । तेन तयोरादेशयोरादिरुदात्तः । 'अन्नमदन्ति' । 'यथा बन्धान्मुमुचाना उत्क्रोदं कुर्वते' । यद्यपि 'परिभाषेयं प्रत्ययलिङ्गा, यः प्रत्ययः स आद्युदात्तो[9] भवति' इति परिभाषापक्षोऽपि वृत्तौ दर्शितः, तथापि सन्दर्भसौकर्यादधिकारपक्ष एवाश्रितः ।

## (वा) अन्तिकस्य तसि कादिलोप आद्युदात्तत्वं च ।

कादिलोपः—ककारादेः शब्दस्य लोपः—ककाराकारयोरित्यर्थः । 'अन्तितो न दूरात्' । 'अपादाने चाहीयरुहोः' इति तसिः । प्रत्ययस्वरापवाद आद्युदात्तत्वविधिः । 'छन्दस्येवेदं वचनमिष्यते' इति हरदत्तमिश्राः[10] ॥

---

1. -काले घ.
2. विहितस्य ग. घ. नास्ति ।
3. घः घ.
4. -घढादि- घ.
5. वार्त्तिकम् घ. नास्ति ।
6. -उदात्तसिद्धौ ग. -उदात्तत्वसिद्धौ घ.
7. प्रवर्तते । आयन्नादिवत् घ. नास्ति ।
8. आयन्नादित्वात् ग.
9. आदिरुदात्त इति परिभाषा- क. ख. ङ. च. छ.
10. -मिश्राः ग. घ. ङ. छ. नास्ति ।

## [२३] ॥ अनुदात्तौ सुप्पितौ ॥ (3—1—4)

प्रत्ययस्वरापवादः । सुबिति प्रत्याहारः, न तु सप्तमीबहुवचनस्येदं ग्रहणम्[1] ; पित्त्वादेव तदनुदात्तत्वस्य सिद्धत्वात्[2] । सुपः पकारेण च प्रत्याहारः, न कपः ; टाप्तयब्रादीनां पित्त्वसामर्थ्यात् । 'श्रेष्ठतमाय कर्मणे' । 'भवत्यात्माना' । अत्र तमप्-शप्-तिपः पित्त्वात् अनुदात्ताः ॥

स्यादेतत्—'लसार्वधातुकमनुदात्तमह्न्विङोः' इत्यस्यानन्तरम्[3] 'सुप्पितौ च' इति सूत्र्यताम् । एवं सति अनुदात्तग्रहणं न कर्तव्यमिति लाघवम्, प्रकरणं चाभिन्नं भवति । न चैवं करणे प्रत्ययग्रहणपरिभाषया सुप्पिदन्तस्यानुदात्तत्वं स्यात्, [4]इह करणे तु सुप्पिदुत्पत्तिसमय एव तयोरनुदात्तत्वप्रवृत्तेस्तदा तयोरनुत्पन्नत्वेन तदन्तविध्यादिस्व[5]कार्यानिमित्तत्वाभावान्न दोष इति वाच्यम् ; धातोः प्रातिपदिकस्य चान्तोदात्तत्वविधि[6]सामर्थ्यात्तत्र 'सुप्पितौ च' इति करणेऽपि[7] तदन्तविध्यभावात् । धातुप्रातिपदिकस्व[8]रयोर्हि[9] तत्र श्रवणम्, यत्र[10] ताभ्यां विहितः प्रत्ययोऽनुदात्तः । इतरत्र सातिशिष्टत्वात् प्रत्ययस्वरेण तत्स्व[11]रबाधात् । यदि च प्रत्ययान्तस्यानुदात्तत्वं स्यात् तदा[12] निर्विषयं धातुप्रातिपदिकान्तोदात्तत्वं स्यात् [13]इति भाष्यवार्त्तिकयोः स्थितम् । तथा च वार्त्तिकम्—'प्रकृतिस्वरविधानसामर्थ्यात्[14] प्रत्ययस्वराभावः' इति । प्रत्ययस्वराभावः—सुप्पिदन्तस्यानुदात्तत्वाभावः । अत्र कैयटादयः—'आस्ते' 'शेते' इत्यादौ

---

1. इदं ग्रहणं घ. नास्ति ।
2. सिद्धेः घ.
3. लसार्वधातुकमित्यनन्तरं घ.
4. इह तु करणे ग. घ.
5. -स्वरकार्य- ग. ख.
6. -विधि- ग. घ. नास्ति ।
7. अपि क. नास्ति ।
8. -स्वर- घ. नास्ति ।
9. हि क. नास्ति ।
10. यत्र क. नास्ति ।
11. -स्वर- क. नास्ति ।
12. तदा ख. ग. घ. ङ. ज. नास्ति ।
13. इति घ. नास्ति ।
14. प्रकृतिस्वरस्य विधानसामर्थ्यात् क. ग.

'तास्यनुदात्तेत्' इति लसार्वधातुकमात्रस्य[1] अनुदात्तत्वे सति धातुस्वरः[2] सावकाशः । प्रातिपदिकान्तोदात्तत्वमपि 'अग्निमान्' 'वायुमान्' 'अग्नीनाम्' इत्यादौ 'ह्रस्वनुड्भ्यां मतुप्' 'नामन्यतरस्याम्' इति स्वरसिद्ध्यर्थं स्यात् । तत्र हि 'अन्तोदात्तात्' इति वर्तते । एवं प्रकृतिस्वरविधानस्य सामर्थ्याभावात् 'सुप्पितौ च' इति तत्र करणे तदन्तस्यानुदात्तत्वं स्यादेवेति अत्रैवानुदात्तत्वं विधातव्यम् । भाष्यादिकं तु चिन्त्यम्—इति ॥

## [२४] ॥ व्रजयजोर्भावे क्यप् ॥ (—3—3—98)

अत्र 'मन्त्रे वृषेष' इति सूत्रात् 'उदात्तः' [3]इत्यनुवर्तते । तेन पित्स्वरबाधः । 'प्रव्रज्या' । 'वचिस्वपि' इति संप्रसारणम् । 'इज्या' । पित्करणं तूत्तरत्र तुगर्थम् ॥

## [२५] ॥ संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः ॥ (3—3—99)

'क्यबुदात्तः' इत्यनुवर्तते । 'समज्या' । 'निषद्या' । 'निपत्या' । 'मन्या' । 'विद्या वै धिषणा' । 'सोमो भूत्वा सुत्यामेति' । 'शय्या' । 'अयङ् यि क्ङिति' । 'भृत्या' । 'इत्या' ॥

## (वा) ॥ अनिटः पितः पक्षे उपसंख्यानम् ॥

अनिटः सिचः परस्य पित उदात्तत्वं वा वाच्यम्[4] इत्यर्थः । 'मा हि कार्षम्' । 'तिङन्तमिदं पक्षे आद्युदात्तम्[5], पक्षे त्वन्तो-

---

1. -मात्रानुदात्तत्वे ख.
2. धातुस्वरस्यावकाशः ग. घ. ङ.
3. इति वर्तते घ.
4. वक्तव्यं क.
5. आद्युदात्तत्वं घ.

दात्तम् । अन्यथा धातुस्वरेण नित्यमाद्युदात्तं[1] स्यात्' इति कैयटादयः । अनिट इति किम् ? 'मा हि लाविषम्' । 'आदिः सिचोऽन्यतरस्याम्' इति पक्षे आद्युदात्तमिदं तिङन्तम् । पक्षे सिचः स्वरेण मध्योदात्तम् ॥

## [२६] ॥ सावेकाचस्तृतीयादिर्विभक्तिः ॥ (6—1—168)

'सौ' इति सप्तमीबहुवचनं गृह्यते न प्रथमैकवचनम्, व्याख्यानात् इत्याहुः । यच्छब्दरूपं सावेकाच् ततः परा तृतीयादिः विभक्तिरुदात्ता भवति । 'इषे त्वोर्जे त्वा' । इष—इच्छायाम् ऊर्ज—बलप्राणनयोः' । कर्मणि[2] करणे च संपदादित्वात् क्विप् 'इष्यत इति इट्—अन्नम्, बलप्राणनहेतुत्वादूर्क्—रसः' इति वेदभाष्ये । ततो ङेप्रत्ययः । एवम् 'वाचा निरृतिम्', दोषावस्तार्धिया', 'श्रियै गत्वा', 'दिशि मासाः' [3]इत्युदाहार्यम् । अत्र 'सौ' इत्यनुक्तौ एकाचः परा विभक्तिरित्यर्थः स्यात् । तथा च 'राज्ञः' इत्यादावल्लोपे कृते भवत्येकाचः परा विभक्तिरित्यतिप्रसङ्गः । 'राजसु राजयाति' इति तु न प्रत्युदाहरणम् ; विभक्तेरेकाचः परत्वाभावात् । यदि च एकाचो विहिता विभक्तिरिति विहितविशेषणमाश्रीयेत, तदा 'सौ' इति व्यर्थमित्याहुः । एकाचः किम् ? 'राजसु' । तृतीयादिः किम् ? 'वाचं देवाः' । विभक्तिः किम् ? वाक्करा । 'सौ' इति प्रथमैकवचनग्रहणे 'त्वया' 'त्वयि' इत्यत्र अतिप्रसङ्गः ; 'त्वम्' इति प्रथमैकवचने युष्मच्छब्दस्यैकाच्त्वात् । 'युष्मासु' इत्यत्र [4]सप्तमीबहुवचनेऽनेकाच्त्वात्तद्ग्रहणे न दोषः' इति वृत्तिकारः । अत्र हरदत्तः—[5]भवदुक्तविधया 'त्वया' इत्यादौ विभक्त्युदात्तत्वप्रसक्तिः ।

---

1. आद्युदात्तत्वं क. छ. ज.
2. कर्मणि कर्तरि च ग. ङ. कर्मणि कर्तरि करणे च छ.
3. इत्याद्युदाहार्याः ग. ङ.
4. सप्तमी- घ. नास्ति ।
5. भवता उक्त- क. भवत् ग. नास्ति ।

'न गोश्वन्साववर्ण' इति निषेधात्तु न भविष्यति ; शेषे लोपे कृते[1] युष्मच्छब्दस्य साववर्णान्तत्वात् । तदिह प्रथमैकवचनग्रहणे को दोष इति चिन्त्यम्—इति । एतेन 'त्वया॑ स॒ह द्रवि॑णम्', 'ए॒षा सा त्वयि॑' इति यत् [2]स्वरमञ्जर्यां सप्तमीबहुवचनग्रहणप्रत्युदाहरणम्, तदपि निरस्तम् । ननु [3]प्रथमैकवचनग्रहणे यातेर्लटः शतरि 'याद्भ्याम्' इत्यादौ विभक्त्युदात्तत्वं न स्यात् ; [4]प्रथमैकवचने परतो[5] यदेकाच्छब्दरूपं[6] 'यान्' इति तस्मादत्र[7] विभक्तेः परत्वाभावात् । [8]सप्तमीबहुवचनग्रहणे तु न दोषः । 'यात्सु' इत्यत्र [9]यदेकाच्[10] तस्मादेव 'याद्भ्याम्' इत्यादौ[11] विभक्तेः परत्वात् । न चैवं [12]सप्तमी-बहुवचनग्रहणेऽपि 'धिया' 'श्रिया' इत्यादौ विभक्त्युदात्तत्वं न स्यात्, 'धीषु' 'श्रीषु, इत्यत्र [13]सप्तमीबहुवचने यदेकाच्छब्दरूपम् ईकारान्तं तस्मादत्र विभक्तेः परत्वाभावादिति वाच्यम् ; प्रकृति-ग्रहणे स्थानिवत्त्वेन विकृतिग्रहणादिष्टसिद्धेः । [14]'धीषु' इत्यादौयत् ईकारान्तं तद्धि 'धिया' इत्यादौ[15] यकारान्तस्य प्रकृतिः । न चैवमनेनैव न्यायेन [16]प्रथमैकवचनग्रहणेऽपि 'याद्भ्याम्' इत्यादौ न दोष इति वाच्यम् ; यतोऽत्र [17]प्रथमैकवचने यद्रूपं न तत् [18]तृतीयादिविभक्तिपरकस्य प्रकृतिः । तदेवं [19]प्रथमैकवचनग्रहणे 'याद्भ्याम्' इत्यत्र दोषस्य भाष्यकैयटयोर्दर्शितत्वात् कथं 'प्रथमैकवचनग्रहणे को दोष इति

---

1. लोपेऽत्रत्ययुष्मच्छब्दस्य ग. घ.
2. स्वर...ग्रहण- क. ख. नास्ति ।
3. प्रथम- घ. नास्ति ।
4. प्रथम- घ. नास्ति ।
5. परतः क. ख. नास्ति ।
6. शब्दस्वरूपं घ.
7. अत्र घ. नास्ति ।
8. सप्तमी- घ. नास्ति ।
9. य एकाच् घ.
10. एकाच् ङ. नास्ति ।
11. इत्यादिषु घ.
12. सप्तमी- घ. नास्ति ।
13. सप्तमी- घ. नास्ति ।
14. धीषु श्रीषु इत्यत्र यदेकाच् घ.
15. धिया श्रिया इत्यादौ ग. घ.
16. प्रथम- घ. नास्ति ।
17. प्रथम- घ. नास्ति ।
18. तृतीयादि- घ. नास्ति ।
19. प्रथम- घ. नास्ति ।

चेन्त्यम्' इति हरदत्तेनोक्तमिति चेत्—अत्र केचित्—'सौ परतः यदेकाच्छन्दरूपं तस्मात् परा विभक्तिरुदात्ता' इत्याश्रित्य प्रथमैकवचनग्रहणे भाष्यादौ अयं दोषो दर्शितः। हरदत्तस्तु 'सौ' इति प्रत्ययेन प्रकृतिराक्षिप्यते, तेन सौ यत् प्रातिपदिकं यस्मात् प्रातिपदिकात् सुर्विहितः तद्यदि कदाचित् 'सावेकाच् तस्मात् परा तृतीयादिरुदात्ता इति [2]सूत्रार्थ इति मत्वा प्रथमैकवचनग्रहणेऽपि न दोष इत्याह। एवं हि सूत्रार्थे 'याद्भ्याम्' इत्यादावपि सिद्धमिष्टम्। न चैवं भाष्यविरोधः; फलभेदाभावात् इत्याशयात्। अमुमेव सूत्रार्थमभिप्रेत्य हरदत्तेन 'आभ्याम्', 'तदस्मै नैव[3]', 'तदस्य प्रियम्', इत्यादौ अन्वादेशे 'सावेकाचः' इति विभक्त्युदात्तत्वम् 'ऊडिदम्' इत्यत्राशङ्कितम्। भाष्याद्यभिप्रेतसूत्रार्थे 'आभ्याम्' इत्यादौ विभक्त्युदात्तत्व[4]प्रसक्त्यभावात्। 'एषु' इति सप्तमीबहुवचने यदेजन्तं[5] रूपम् 'आभ्याम्' इत्यादौ विभक्तेः तस्मात् परत्वाभावात्। मनोरमायामपि हरदत्ताभिप्रेतसूत्रार्थ एवाश्रितः[6], 'आभ्याम्' इत्यादौ 'सावेकाचः' इति स्वरस्य तत्राप्याशङ्क्य परिहारात्। एवं च सिद्धान्तकौमुदीमनोरमयोः प्रकृतसूत्रे 'सौ' इति सप्तमीबहुवचनस्य ग्रहणं किं फलमभिप्रेत्य स्वीकृतमिति न विद्मः। हरदत्तमते तत्फलाभावस्य दर्शितत्वात्। यत्तु[7] कैयटेनोक्तम्—"प्रथमैकवचनग्रहणे अन्वादेशे 'एभ्यः' 'एभिः' इत्यत्रायं स्वरो न स्यात्, 'अयम्[8]' इति प्रथमैकवचनेऽनेकाच्त्वात्। न च 'ऊडिदम्' इति सूत्रेणात्र विभक्त्युदात्तत्वसिद्धिः; तत्र 'अन्तोदात्तात्' इत्यधिकारात्। [9]इदमोऽन्वादेशेऽशोऽनुदात्तस्य[10] विधानेन अत्रान्तोदात्तत्वाभावात्। तस्मात् 'एभिः' इत्यादौ विभक्त्युदात्तत्वसिद्धिः सप्तमीबहुवचनग्रहणफलमित्यन्ये" इति, तदपि 'ऊडिदम्' इति सूत्रे तात्पर्यगत्या हरदत्तेन दूषितम्।

---

1. सौ क. नास्ति।
2. सूत्र- घ. नास्ति।
3. अत्र '-स्मै नव्यम्' इत्येव पाठः सर्वेषूपलभ्यते।
4. -उदात्तप्रसक्ति- घ.।
5. एजन्तं ख. घ. ग.
6. अनुसृतः ग. घ. ङ.
7. तु घ. नास्ति।
8. अयम् घ. नास्ति।
9. इदमः घ. नास्ति।
10. इत्यशोऽनुदात्तस्य ग.

तद्यथा—'ऊडिदम्' इत्यत्र 'अन्तोदात्तात्' इत्यनुवर्तते। तच्च इदमोऽन्वादेशे विभक्त्युदात्तत्वाभावाय। न चैवमपि 'सावेकाचः' इति[1] प्रसङ्गः ; अन्तोदात्तानुवृत्तिसामर्थ्यात्तेनाप्यभावात्। अन्यथा तद्वैफल्यात्। अत एव 'प्रेणा[2] तदेषाम्' इत्यादौ सर्वानुदात्तं पदमधीयत इति। मनोरमायां तु—प्रकृतसूत्रे उत्तरसूत्रात् 'अन्तोदात्तात्' इति [3]पदमपकृष्यते। तेनाशादेशे कृतेऽन्तोदात्तत्वाभावात् इदमोऽन्वादेशे नानेनोदात्तत्वम्—इत्युक्तम्[4]। कैयटस्य तु अयमाशयः—'ऊडिदम्' इत्यत्रान्तोदात्तानुवृत्तिसामर्थ्यात् 'एभिः' इत्यादौ 'सावेकाचः' इत्यपि न विभक्त्युदात्तत्वमित्ययुक्तम् ; 'आभ्याम्' इत्यादावन्वादेशे विभक्त्युदात्तत्ववारणेन तदनुवृत्तेश्चरितार्थत्वात्। न चात्रापि 'सावेकाचः' इति प्रसङ्गः ; 'सुः प्रथमैकवचनम्' इति मते प्रसक्त्यभावात्। 'सप्तमीबहुवचनम्[5]' इति पक्षेऽपि 'एषु' इत्यत्र सप्तमीबहुवचने यदेजन्तं रूपम् 'आभ्याम्' इत्यादौ विभक्तेः तस्मात् परत्वाभावात्। हरदत्ताद्यभिप्रेतसूत्रार्थे यद्यप्यत्रापि 'सावेकाचः' [6]इत्यस्ति प्रसक्तिः, तथापि नायं भाष्यसम्मत इति प्रकृतसूत्रे 'ऊडिदम्' इति सूत्रे च भाष्ये स्पष्टम्। एवं च 'अन्तोदात्तात्' इत्यनुवृत्तेः 'आभ्याम्' इत्यादौ चरितार्थत्वात् 'एभिः' इत्यादौ विभक्त्युदात्तत्वं प्रकृतसूत्रेण[7] निर्बाधम्। तच्च सप्तमीबहुवचनग्रहणफलम्। न च 'अन्तोदात्तात्' इत्यपकर्षादत्र प्रकृतसूत्राप्रवृत्तिः ; अपकर्षे मानाभावात्। न [8]च 'आभ्याम्' इत्यादौ 'सावेकाचः' इति मा भूदित्यपकर्षः ; भाष्याभिमतसूत्रार्थे तत्र तदप्रसक्तेरुक्तत्वात्। नापि 'एभिः' इत्यादौ मा भूदिति ; तत्र 'सावेकाचः' इति विभक्त्युदात्तत्वस्येष्टत्वात्। 'सौ' इति सप्तमीबहुवचनग्रहणम्, यच्छब्दस्वरूपं[9] सावेकाच् इत्यादि च सूत्रार्थ इति भाष्य-

---

1. इत्यनेन क. ग.
2. प्रेणां तदेषाम् क. ख.
3. पदम् घ. नास्ति।
4. इत्युक्तम् घ.
5. -वचनं सुबिति मते बहुवचने घ.
6. इत्यस्यापि प्राप्तिः। तथापि तत्र 'अन्तोदात्तात्' इत्यनुवृत्तेः उदात्तत्वस्य प्राप्त्यभावात्। 'ऊडिदम्' इत्यत्र च भाष्ये घ. इत्यस्याप्रसक्तिः ङ.
7. प्रकृतसूत्रेण जायमानं सप्तमीबहुवचन- घ.
8. वा छ.
9. -रूपः घ.

सिद्धान्तानुसारादेवमुन्नयात् । 'प्रेणा तदेषाम्', 'तदेभ्योऽब्रवीत्' इत्यादौ सर्वानुदात्तत्वं तु व्यत्ययात्—इति । एवं च हरदत्ताद्यभिमतस्य सूत्रार्थस्य भाष्याद्यभिमतस्य च फलभेदोऽपि[1] विस्पष्टः, आद्ये 'एभिः' इत्यादौ विभक्त्युदात्तत्वाभावात्, इतरत्र च तद्भावादिति ॥

## [२७] ॥ अन्तोदात्तादुत्तरपदादन्यतरस्यामनित्यसमासे ॥ (6—1—169)

[2]नित्याधिकारविहितसमासादन्यत्र समासे यदुत्तरपदमन्तोदात्तमेकाच् ततः परा तृतीयादिविभक्तिर्वोदात्ता । 'सह वाचा मयोभुवा' । भावयतीति भूः, भवतेरन्तर्भावितण्यर्थात् क्विप् । मयसां भूः मयोभूः । समासस्वरः । [3]ततस्तृतीयैकवचनम् । 'सत्यवाचे भरे मतिम्' । 'सत्यवाचे [4]प्रभरेम' । 'सत्यवाचे[5]' इति कर्मधारयः । समासस्वरः वैकल्पिकत्वादत्र न । अन्तोदात्तात् किम् ? 'अवाचा' । नञ्तत्पुरुषे अव्ययपूर्वपदप्रकृतिस्वरः । 'उत्तरपदात्' इत्यनुक्तौ अनुवर्तमानमेकाच्पदं अनित्यसमासस्यैव विशेषणं स्यात् । [6]ततश्च 'शुन ऊर्क्, श्वोर्क्, श्वोर्जा' इत्यादावेव स्यात्, न तु 'परमवाचा' इत्यादौ ; अनित्यसमासस्य एकाच्त्वाभावात् । ततश्च[7] एकाच्त्वमुत्तरपदविशेषणं यथा स्यात् इत्युत्तरपदग्रहणम् । अनित्यसमास इति किम् ? 'अग्निचित आपो भवन्ति' । 'अग्नौ चेः' इति क्विप् । 'उपपदमतिङ्' इति नित्याधिकारविहितः समासः । कृदुत्तरपदप्रकृतिस्वरः । यस्तु विग्रहाभावान्नित्यसमासः[8] तत्रायं स्वरो भवत्येव ; नित्याधिकारविहितसमासस्यैव पर्युदासात् । 'अवाचा सुवाचा ब्राह्मणेन' । 'बहुव्रीहौ नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् ॥

---

1. अपि ख. नास्ति ।
2. नित्याधिकारसमासात् क. ख.
3. तत्र क.
4. भरेम क. ख.
5. सत्यवाक् क.
6. ततश्च घ. नास्ति ।
7. च घ. नास्ति ।
8. अनित्यसमासः क.

## [२८] ॥ 'ऊडिदंपदाद्यप्पुम्रैद्युभ्यः' ॥ (6—1—171)

एतेभ्योऽसर्वनामस्थानविभक्तिरुदात्ता भवति । [1]'पष्ठं वहति पष्ठवाट् । 'छन्दसि सहः' 'वहश्च' इति ण्विः । पष्ठौहः । पष्ठौहा । 'वाह ऊठ्' । 'एत्येधत्यूठ्सु' इति वृद्धिः । 'ऊठि उपधाग्रहणम्' । उपधाभूत ऊठ् ग्राह्यः ; नान्त्य इत्यर्थः । पञ्चमीनिर्देशादन्त्यस्यैव ग्रहणे प्राप्ते वचनम् । तेनेह न , 'अक्षद्युवः' 'अक्षद्युवा' । अक्षैर्दीव्यतीति क्विप् । 'च्छ्वोश्शूठ्' इत्यन्त्यस्योठ् । 'अस्मै वै लोकाय' 'आभ्यामेव' 'अस्माल्लोकात्' इत्यादि । पदादयः 'पद्दन्' इति सूत्रे निर्दिष्टा इह गृह्यन्ते । तत्रापि 'निश' पर्यन्ता एव ; 'एकाचः' इत्यनुवृत्तस्य पदादिविशेषणत्वात् । इतरेषां चानेकाच्त्वात् । 'चतुरः पदः प्रतिदधत्' । 'पद्भ्यां द्वे सवने' । 'पत्सु जुहोति' । 'या दतो धावते' । 'दद्भ्यः स्वाहा' । 'नसोः प्राणः' । 'चतुरो मासो दीक्षितः' । 'मासि पितृभ्यः' । 'अन्तर्हृदा मनसा' । '[2]हृदे त्वा' । 'निशि' । निशः परेषां तु विभक्तिः अनुदात्तैव[3] । 'ग्रीवायां बद्धो अपिकक्ष आसनि' । दोषभ्यां स्वाहा' । कथं तर्हि 'असृव रक्षांसि' [4]'उद्नो दत्त', 'यक्ना रुद्रम्' इत्यादौ निशः परेषामपि विभक्त्युदात्तत्वम् ? अल्लोपे उदात्तनिवृत्तिस्वरेणेत्यवेहि । [5]अथ तेषामादेशानामन्तोदात्तत्वे मानाभावेन उदात्तनिवृत्त्यभावे कथमुदात्तनिवृत्तिस्वर इति चेत्—न ; ये तत्रान्तोदात्ता उदकादयः स्थानिनः तदादेशानामान्तरतम्येन अन्तोदात्तत्वात् । ये तु आस्यादयः शब्दा नान्तोदात्ताः तदादेशानामपि 'पद्दन्' सूत्रे अन्तोदात्तत्वनिपातनाश्रयणात् । तदाश्रयणे च प्रकृतसूत्रस्थभाष्यमेव मानम् । अत एव 'आसनि[6]' इत्यादौ मध्योदात्ततोपपत्तिः । अन्यथा 'आस्य'

---

1. प्रष्ठम्, प्रष्ठवाट्, प्रष्ठौहः घ.
2. हृदे...निशः घ. नास्ति ।
3. उदात्तैव क. ख.
4. 'उद्नो...उदात्तत्वम्' इत्यस्य स्थाने 'उदक्नोऽनुदात्तस्य च यत्रोदात्तलोपः इति सूत्रेण इति घ.
5. नन्वादेशानां घ.
6. आसन् क. ख.

शब्दस्य ण्यत्प्रत्ययान्ततया अन्तस्वरितत्वेन तदादेशस्यापि तथात्वापत्तेः । 'उदकम्' इत्युणादिसूत्रे अन्तोदात्त उदकशब्दो निपातितः । 'शकेरृतिन्' इति निदन्त आद्युदात्तः शकृच्छब्दः । 'दमेर्डोस्' । 'दोः' । 'अप्' । 'अपोऽश्नाति' । 'अद्भिर्हवींषि' । 'अपां पेरुरसि' । 'पुंसे पुत्राय' । पुंसि प्रिये प्रिया' । 'सुपथा राये अस्मान्' । 'रायस्पोषेण' । 'यद्वो देवा अतिपादयानि' इति मन्त्रे 'अरायो अस्मान्' इत्यत्र 'ऊडिदम्' इति विभक्त्युदात्तत्वं तदन्तादपि भवति इति शसुदात्तः' इति वेदभाष्यकृतः । 'दिवे त्वा' । 'दिवस्परि' । 'दिवि सोमः' । पदादीनां 'सावेकाचः[1]' इति सिद्धे शसः परिग्रहार्थमिह ग्रहणम् ॥

अत्रेदमवधेयम्—भाष्यमते 'आभ्याम्' इत्यादौ 'सावेकाचः' इत्यस्य अप्रवृत्तेः तदर्थमत्र[2] इदंशब्दग्रहणम् । हरदत्तादिमते तु '[3]न गोश्वन्' इति निषेधबाधनार्थम्, 'सावेकाचः' इति सिद्धे 'अन्तोदात्तादेव इदमः' इति नियमार्थं वा । तेनान्वादेशे न भवति । यदि तु अशोऽनुदात्त[4]-विधानसामर्थ्यादेव न विभक्त्युदात्तत्वमन्वादेशे इत्युच्येत, तदा इदमो ग्रहणं चिन्त्यप्रयोजनम् । शसादिपरिग्रहार्थं तु न भवति ; 'इमान्' '[5]इमाः' इत्यादौ पुंसि स्त्रियां च एकादेशस्वरेणेष्टसिद्धेः । नपुंसके शसि 'शि सर्वनामस्थानम्' इति सर्वनामस्थानसंज्ञाविधानात् । एकाच इत्यनुवृत्तेस्तत्रेदम एकाच्त्वाभावाच्च । अत एव 'अनेन' 'अनयोः' इत्यत्र न विभक्त्युदात्तत्वम् ; इदम एकाच्त्वाभावात् । तथा च प्रयोगः— 'यदनेन हविषाशास्ते' 'अनयोरवैनम्' इत्यादि । न चात्र 'सावेकाचः' इति प्रसङ्गः ; रूपभेदेन भाष्यमते तदप्रसक्तेः[6] । हरदत्तादिमते तु कथमुदाहृतस्थले 'सावेकाचः' इति स्वराभाव इति चिन्त्यम् ।

---

1. सावेकाच् घ.
2. अत्र घ. नास्ति ।
3. न गोश्वन्...-बाधनार्थं घ. न ... नास्ति
4. अनुदात्त- घ. नास्ति ।
5. इमाः क. ख. नास्ति ।
6. तदप्रवृत्तेः क.

यत् प्रातिपदिकं सावेकाच् [1]तस्मात् तृतीयादावपि एकाच इति तत्सूत्रार्थाश्रयणं[2] तु निष्प्रमाणकम् । तस्मात् भाष्याभिमत एव तत्सूत्रार्थो रमणीय इति ॥

इदं च विभक्त्युदात्तत्वम् '[3]प्राग्दिशो विभक्तिः' इति [4]यस्य विभक्तिसंज्ञा तस्यापि भवति ; सर्वनामस्थानभिन्नविभक्तित्वाविशेषात् । तेन 'इतः प्रथमं जज्ञे' 'तृतीयस्यामितो दिवि' इत्यादौ 'इतः' इत्यस्यान्तोदात्तत्वं सिद्धम् । अन्यथा तस्य 'पञ्चम्यास्तसिल्' इति तसिलन्ततया लित्स्वरः स्यात् । 'इदम इश्' इति प्रकृतेरिशादेशः । न च मध्येऽपवादन्यायेन 'अनुदात्तौ सुप्पितौ' इत्यस्यैवायमपवादः, लित्स्वरस्तु परत्वादत्र स्यादिति वाच्यम् ; लित्स्वराप्रवृत्तौ अन्तोदात्तत्वाभावेन प्रकृतसूत्राप्रवृत्तेः । सतिशिष्टत्वेन [5]लित्स्वरानन्तरं प्रवर्तमानस्यास्य प्रबलत्वादिति । 'अन्तोदात्तात्' इत्यनुवृत्त्या इदमोऽन्वादेशे नायं स्वरः ; 'इदमोऽन्वादेशेऽशनुदात्तः' इति [6]तस्य तत्रानुदात्तविधानात् । 'तदेभ्योऽब्रवीत्' 'तदस्य प्रियम्' [7]इत्यादि । 'सावेकाचः' इत्यनेनापि यथा नात्र विभक्त्युदात्तत्वं तथा प्रागेवोक्तम् ॥

## [२९] ॥ शतुरनुमो नद्यजादी ॥ (6—1—173)

अनुम् यः शतृप्रत्ययः तदन्तात्[8] परा नदी अजाद्यसर्वनामस्थानविभक्तिश्च[9] उदात्ता भवति[10] । '[11]इन्द्रो वो यतीः' । 'उशतीरिव' । 'शृण्वतीन मिथुनी' । 'पुनती' । 'शृण्वते स्वाहा' । 'उद्गृह्णते स्वाहा' । 'प्राणते स्वाहा' । स्वप्स्यते स्वाहा' । 'जागरिष्यते' । 'इण्' गतौ, 'वश' कान्तौ । लटः शत्रादेशः । 'अदिप्रभृतिभ्यः'

1. इति ख. अधिकम् ।
2. सूत्रार्थश्रवणं घ.
3. प्राग्दिशो विभक्तिसंज्ञाकस्यापि घ.
4. यस्यापि छ.
5. लित्स्वराप्रवृत्तेः मानस्य घ.
6. अशस्य घ.
7. इत्यादिषु सर्वानुदात्तत्वं तु व्यत्ययादिति बोध्यम् । तथा घ.
8. अन्तोदात्तात् घ. अधिकम् ।
9. च घ. नास्ति ।
10. स्यात् घ.
11. इन्द्रो वो यतीः घ. नास्ति ।

इति शपो लुक् । शतुरुगित्वान्ङीप् । इणो यण् । 'ग्रहिज्यावयि' इति वष्टेः संप्रसारणम् । एवम् [1]इतरत्रापि प्रक्रिया ऊह्या । सर्वत्र प्रत्ययस्वरेण शत्रन्तमन्तोदात्तम् । 'शृण्वतीः' इत्यादावपि 'अन्यत्र विकरणेभ्यः' इति [2]वचनाद्विकरणस्वराभावे शतृस्वरेण शत्रन्तमन्तोदात्तमेव । 'प्राणते' [3]इत्यादावपि कृत्स्वरेण तथैव । 'स्वप्स्यते' इत्यादौ अदुपदेशाल्लसार्वधातुकस्य शतुरनुदात्तत्वे एकादेशस्वरेण शत्रन्तमन्तोदात्तम् । न चैकादेशस्वरस्यासमन्नसिद्धत्वम्[4] ; परिभाषाप्रकरण एव तदसिद्धत्वाभावस्य दर्शितत्वात् । अनुम इति किम् ? 'वक्ष्यन्तीव' । अन्तोदात्तात् किम् ? 'बिभ्रती जराम्' । 'मयि दधता' । 'जाग्रते स्वाहा' । 'अभ्यस्तानामादिः' इत्यादिरुदात्तः । अजादिरिति किम् ? 'स्वपद्भ्यः' । ननु' 'यस्यैवं विदुषः' इत्यादौ कथं विभक्त्युदात्तत्वाभावः ? 'विदेः शतुर्वसुः' इति वस्वादेशस्य स्थानिवत्त्वेन[5] शतृग्रहणेन ग्रहणात् प्राप्तिरिति चेत्—उच्यते ; 'स्वरे च वस्वादेशः' इति स्थानिवत्सूत्रस्थवार्त्तिकेन[6] अत्र स्थानिवद्भावः प्रतिषिद्धः । भाष्यकारैस्तु परिहृतम्—'अनुमः' इति नायं नुमागमवतः प्रतिषेधः, किन्तु उम्प्रत्याहारवतः । उमिति[7] च प्रत्याहारः 'तनादिकृञ्भ्य उः' इत्युकारप्रभृति 'इदितो नुम् धातोः' [8]इत्यानुमो मकारात्[9] । तन्मध्ये च वसुरपि प्रविष्ट इति सिद्धोऽनुम इत्येव वस्वन्तस्यापि प्रतिषेधः[10] । न चैवं श्नाप्रत्ययस्यापि [11]तत्प्रत्याहारप्रवेशात् 'मुष्णतां पतये' इत्यादौ तद्वतोऽपि प्रतिषेधप्रसङ्गः ; उम्वान् यः शता तदन्तान्नेति उमा शतुर्विशेषणात् । न चेह श्नाप्रत्ययः शतुः कृतः, येन तस्य तद्वत्त्वं स्यात् ।

---

1. उत्तरत्र क.
2. नियमात् क.
3. इत्याद्यपि घ.
4. -स्वरस्यासिद्धत्वम् क.
5. स्थानिवद्भावेन क.
6. -सूत्रवार्त्तिकेन घ.
7. इति च क. नास्ति ।
8. इति नुमः घ.
9. मकारात्....प्रतिषेधः ङ. नास्ति ।
10. निषेधः घ.
11. तत् घ. नास्ति ।

आगमग्रहणेऽपि '[1]मुञ्चन्' इत्यादेः 'शे मुचादीनाम्' इति नुमुक्त शत्रन्तस्य निषेधाभावाय तथैवाश्रयणीयत्वादिति ॥

## [वा] ॥ बृहन्महतोरुपसङ्ख्यानम् ॥

'विश्वरूपा बृहती' । 'सार्ववीद्बृहती' । 'बृहता साम्ना' । 'महतीमेव तद्देवताम्' । 'महतां गर्गराणाम्' । 'वर्तमाने [2]पृषन्महद्बृहच्छतृवच्च' इति निपातनात् अतिप्रत्ययान्तौ बृहन्महच्छब्दौ । तत्र शतृवद्भावादेव ङीबादिवत् स्वरेऽपि सिद्धे नियमार्थं वचनम्—बृहन्महद्भ्यामेव नद्यजादिविभक्त्योरुदात्तत्वं न पृषदादिभ्यः—इति । तेन 'पृषती स्थूलपृषती' । 'जगती छन्दसाम्' इत्यादौ पृषतीजगत्योर्ङीबुदात्तत्वाभावसिद्धिः[3] । न च बृहन्महतोर्गौरादित्वान्ङीपि स्वरसिद्धेस्तत एवोक्तनियमसम्भवाच्च वचनवैफल्यम् ; उक्तवचनेनेष्टसिद्धेः तयोः[4] गौरादिपाठस्यैव विफलत्वात् । न च विनिगमनाविरहः ; 'अतिमहती' 'अतिबृहती' इत्यादौ ङीप उदात्तत्वार्थं [5]वार्त्तिकावश्यकत्वात् । 'अनुपसर्जनात्' इत्यधिकारेणात्र गौरादिङीषोऽभावात् । न च तदन्तविध्यभावात् 'अतिमहती' इत्यादौ कथमयं स्वर इति वाच्यम् ; तदन्तेऽपि नद्यजादिविभक्त्योर्बृहन्महद्भ्यां[6] परत्वानपायात् [7]इति कैयटादयः । सर्वप्रसिद्धवार्त्तिकादेवेष्टसिद्धौ गौरादिषु केषाञ्चित् बृहन्महच्छब्दपाठकल्पनमनर्थकमित्याशयः । इदं तु विचारणीयम्—'पृषती' 'जगती' इत्यादौ ङीबुदात्तत्वाभावेऽपि कथमाद्युदात्तत्वम्[8] ? [9]अतिप्रत्ययान्तयोः पृषज्जगच्छब्दयोः [10]बृहन्महच्छब्दयोरिव

---

1. मुञ्चती क.
2. पृषन्बृहन्महत्- घ.
3. ...ावः सिद्धः ङ. छ.
4. ... क.
5. ...स्य आवश्यकत्वात् ख.
   ...ङ.
6. -महत्परत्व- घ.
7. भवतीति घ.
8. आद्युदात्तता घ.
9. अतिप्रत्ययान्तयोः घ. नास्ति ।
10. बृहन्महच्छब्दयोः घ. नास्ति ।

अन्तोदात्तत्वौचित्यात् । दृश्यते हि तयोरन्तोदात्तत्वम् 'असौ बृहत्' 'बृहन्तं मामकरत्' 'बृहद्भिः सवितः' [1]'मा नो महान्तम्' 'महद्भ्यः क्षुल्लकेभ्यश्च' इत्यादौ । पृषज्जगतोस्त्वाद्युदात्तता दृश्यते 'पृषदश्वा मरुतः'[2] 'पुरुषं जगत्' 'अस्य जगतः' 'जगत्युदपतत्' इत्यादौ । न च अनयोराद्युदात्तत्वनिपातनाश्रयणं युक्तम् ; तर्हि अन्तोदात्तत्वाभावादेव अत्र शतृस्वराप्रसक्तौ वार्त्तिकस्य नियमार्थत्वोपवर्णनविरोधादिति । केचित्तु पृषज्जगच्छब्दावप्यन्तोदात्तावेव । वेदे तु व्यत्ययात् तयोराद्युदात्तत्वमिति न कश्चिद्विरोध इत्याहुः ॥

## [३०] ॥ ह्रस्वनुड्भ्यां मतुप् ॥ (6—1—176)

अन्तोदात्ताद्ध्रस्वान्तान्नुटश्च परो मतुबुदात्तो भवति । 'अग्निवत्युपदधाति' । 'अग्निवानसानि' । 'छन्दसीरः' इति मतुपो मस्य वत्वम् । अग्निशब्दो निप्रत्ययान्तोऽन्तोदात्त इत्युक्तम् । 'वायुमती श्वेतवती' । 'कृपावाजि' इत्युण्प्रत्ययान्तो वायुशब्दः । श्वेतशब्दस्य घृतादित्वादन्तोदात्तत्वेऽपि 'श्वेतवती' इत्यत्र न मतुबुदात्तत्वम् ; 'न गोश्वन्त्साववर्ण' इति निषेधादिति वक्ष्यते । 'पितृमानहम्' । 'पितृमन्तम्' । 'नप्तृनेष्टृ' इत्युणादिसूत्रे पितृशब्दस्तृजन्तो निपातितः । 'शीर्षण्वान्मेध्यो भवति' । 'अक्षण्वते स्वाहा' । 'अस्थन्वते स्वाहा'[3] । 'शीर्षन् छन्दसि'[4] । 'अनो नुट्' इति मतुपो नुट् । पूर्वनकारस्य 'न लोपः' इति नलोपः । [5]अस्थ्यक्ष्यादिशब्दान्मतुप् । 'अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः', 'छन्दस्यपि दृश्यते' इत्यनङ् । इतरत् पूर्ववत् । अन्तोदात्तात् किम् ? 'वसुमान् यज्ञः' । 'ब्रह्मण्वन्तो देवा आसन्' । 'सामन्वन्तं करोति' । वसुशब्द[6] आद्युदात्तः ; 'धान्ये नित्'

---

1. 'मा नो...इत्यादौ' घ. नास्ति ।
2. इदमुदाहरणं घ. नास्ति ।
3. इदमुदाहरणं ख. नास्ति ।
4. शीर्षश्छ- घ.
5. अस्थि- क. घ. नास्ति ।
6. वसुशब्दस्तु क.

इत्यधिकारे "श्रृस्वृष्णिहितृप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च'[1] इति वसेरुप्रत्यये तस्य निष्पत्तेः । ब्रह्मन्सामन्शब्दौ 'मनिन् सर्वधातुभ्यः' इति मनिन्नन्तावाद्युदात्तौ । ह्रस्वान्तादिति किम् ? 'गोमाँऽअग्ने' इति स्वरमञ्जर्याम् । तच्चिन्त्यम् ; 'न गोश्वन्' इति निषेधेनापि अत्र इष्टसिद्धेः । न च विभक्तिस्वरस्यैव[2] अयं निषेध इति भ्रमितव्यम् ; षाष्ठस्वरमात्रस्य[3] अयं निषेध इति आकारात् । अत एव 'श्वेतवती' इत्यादौ मतुबुदात्तत्वाभावः । एतच्च तत्रैव वक्ष्यते । तस्मात् 'विभूमतीम्' 'प्रभूमतीम्' 'परिभूमतीम्' 'लक्ष्मीवान्' इत्यादिकं[4] ह्रस्वग्रहणप्रत्युदाहरणम् ॥

स्यादेतत्—'मरुत्वाँऽ इन्द्र' 'मरुत्वन्तं वृषभम्' इत्यादौ कथं मतुबुदात्तत्वाभावः ? 'स्वरविधौ व्यञ्जनमविद्यमानवत्' इति तकारस्य अविद्यमानवत्त्वेन[5] ह्रस्वात् परत्वात् । 'मृग्रोरुतिः' इति उतिप्रत्ययान्तत्वेन अन्तोदात्तत्वाच्च मरुच्छब्दस्येति । अत्र समाधानं परिभाषाप्रकरण एव दर्शितम्—'हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवत्' इति परिभाषेति मते नात्र वकारस्य अविद्यमानवत्त्वम्[6] ; तस्य स्वरप्राप्त्यभावात् । 'स्वरविधौ' इति पक्षेऽपि अत्रानित्यत्वान्न तत्परिभाषाप्रवृत्तिः वचनबलाद्वेति ॥

यत्तु कैश्चिदुक्तम्—'अक्षण्वते' इत्यादौ नलोपे कृते ह्रस्वान्तात् परत्वादेव मतुबुदात्तत्वसिद्धेः नुड्ग्रहणं व्यर्थं सदत्र 'स्वरविधौ व्यञ्जनमविद्यमानवत्' इत्यस्य अप्रवृत्तिं ज्ञापयति इति 'मरुत्वान्' इत्यादिसिद्धिः । न च नुटा व्यवधानात् तद्ग्रहणम् ; मतुबवयवस्य तस्य तदव्यवधायकत्वात् । तस्मात् 'नलोपः सुप्स्वर' इति नलोपस्य असिद्धत्वान्नकारेण व्यवधानात् ह्रस्वान्तादिति न सिध्यतीति नुड्ग्रहणं क्रियते । यदि चात्र 'स्वरविधौ व्यञ्जनमविद्यमानवत्' इति प्रवर्तेत तदा नलोपस्य

---

1. 'ग्रसिस्निहि' इति वसेः घ.
2. एव क. नास्ति ।
3. -मात्रस्यैव ख.
4. इत्यादि घ.
5. अविद्यमानत्वेन घ.
6. अविद्यमानत्वम् घ.

असिद्धत्वेऽपि 'स्वरविधौ' इति परिभाषया नकारस्य अविद्यमानवद्भावेन[1] '[2]ह्रस्वात्' इत्येव स्वरः[3] सिद्ध इति नुड्ग्रहणमनर्थकम् । तत् क्रियमाणमत्रोक्तपरिभाषा न प्रवर्तेत इत्यत्र लिङ्गम्—इति । नैतत् सारम् ; यदि 'नलोपः सुप्स्वर' इति नलोपस्य असिद्धत्वविषयेऽपि अविद्यमानवत्परिभाषा प्रवर्तेत तदा तस्य असिद्धत्वविधानमनर्थकं स्यात् । तस्मान्नलोपविषये अविद्यमानवत्परिभाषा [4]न प्रवर्तेत इति अवश्यकर्तव्यं[5] नुड्ग्रहणं कथमत्र [6]उक्तपरिभाषाया अप्रवृत्तिं ज्ञापयेदिति । तस्मात् पूर्वोक्तमेवात्र[7] समाधानम् ॥

## ॥ मतुबुदात्तत्वे रेग्रहणम् ॥

इति वार्त्तिकम् । रेशब्दात् परो मतुबुदात्त इति वाच्यमित्यर्थः । 'रेवतीर्नः सधमादः' । रयिशब्दान्मतुपि 'रयेर्मतौ बहुलम्' इति सम्प्रसारणे पूर्वरूपे गुणे[8] च रेवत् । अत्र [9]ह्रस्वात् परत्वाभावाद्वचनम् । 'उगितश्च' इति ङीपि रेवती । 'रेवाँ इद्रेवतः' । '[10]आरेशब्दाच्च' इति वार्त्तिकपाठो वृत्तावपपाठ इति हरदत्तः ॥

## [वा] ॥ त्रेश्च प्रतिषेधः ॥

'त्रिवत्या परिदधाति' । 'छन्दसीरः' इति मतुपो वत्वम् ॥

## [३१] ॥ नामन्यतरस्याम् ॥ (6—1—177)

ह्रस्वग्रहणमनुवर्तते मतुबिति च । तच्च सप्तम्या[11] विपरिणम्यते । मतुपि यद्ध्रस्वान्तं दृष्टमन्तोदात्तं तस्मात् परो नामुदात्तो वा[12] भवति । 'सप्तानां गिरीणाम्' । 'ऋतूनां प्रीणामि' । 'पितृणामिदमहम्' । 'धाता

1. अविद्यमानवत्त्वेन क.
2. ह्रस्वान्तात् घ.
3. मतुबुदात्तः घ.
4. न घ. नास्ति ।
5. अवश्यं कर्तव्यं घ.
6. उक्त- क. घ. नास्ति ।
7. अत्र क. नास्ति ।
8. 'आद्गुणः' इति गुणे क.
9. ह्रस्वान्तात् घ.
10. अरेशब्दात् घ.
11. सप्तम्यन्तं क. ङ.
12. वा क. ङ. नास्ति ।

धातृणाम्' । ह्रस्वात् किम् ? 'देवसेनानाम्' । 'कुमारीणाम्' । मतुपि यद्ध्रस्वान्तमिति व्याख्यानात् 'गिरीणाम्' इत्यादावपि भवति । ह्रस्वान्तात् परो नामिति व्याख्याने तु परत्वान्नित्यत्वाच्च 'नामि' इति दीर्घे कृते ह्रस्वात् परत्वाभावान्न स्यात् । न च वचनबलात् भूतपूर्वगत्याश्रयणम् ; 'तिसृणाम्' 'पितृणाम्' '[1]नृणाम्' इत्यादौ तस्य चरितार्थत्वात् । अत्र हि 'न तिसृचतसृ' 'छन्दस्युभयथा' इति दीर्घो निषिद्धः । 'छन्दस्युभयथा' इत्यत्र तिसृचतसृपदं नानुवर्तत इति हरदत्तः । तेन 'धातृणाम्' इत्यादावपि निषेधसिद्धिः । न चैवम् 'मतौ बह्वचोऽनजिरादीनाम्' [2]इति 'शरादीनां च[3]' इति येषां मतौ दीर्घो विहितः तेषां नाम उदात्तत्वं न स्यात्, मतुपि ह्रस्वान्तत्वाभावादिति वाच्यम् ; मतुबुत्पत्तिकाले यद्ध्रस्वान्तमिति व्याख्यानादिति दिक् । अन्तोदात्तात् किम् ? 'वसूनां त्वाधीतेन' । सनुड्ग्रहणात् 'धेन्वामेव पयः' इत्यत्र न । 'धेट इच्च' इति नुप्रत्ययान्तो धेनुशब्दः । 'ङिति ह्रस्वश्च', इति [4]नदीसंज्ञापक्षे 'ङेराम्नद्याम्नीभ्यः' इत्याम् । 'आण् नद्याः' इति तस्य आडागमनरत्वान्नुटं[5] बाधत इति नुडभावः । अत्र 'उदात्तयणो हल्पूर्वात्' इति नित्यं विभक्त्युदात्तत्वम् । अन्यतरस्यांग्रहणादिह न, 'देवानां वै' 'लोकानामाप्त्यै' ॥

## [३२] ॥ ङ्याश्छन्दसि बहुलम् ॥ (6—1—178)

ङ्यन्ताद्बहुलं नामुदात्तो भवति छन्दसि । 'बह्वीनां पिता' 'अभिभञ्जतीनाम्' । बहुलग्रहणादिह न, 'जयन्तीनां मरुतः'

---

1. नृणाम् क. नास्ति । नास्ति ।
2. इति क. घ. नास्ति ।
3. च' इति येषां क. घ.
4. नदी- घ. नास्ति ।
5. नुटा घ.

'नदीनां सर्वासाम्' । 'अन्यतरस्याम्' इत्यनुवृत्त्यैव इष्टसिद्धौ बहुलग्रहणस्य चिन्त्यं फलम् । 'श्रीणामुदारः' इत्यत्र ङ्यन्तत्वाभावेऽपि 'सावेकाचः' इति नामुदात्तं[1] बोध्यम् ॥

## [३३] ॥ षट्त्रिचतुर्भ्यो हलादिः ॥ (6—1—179)

षट्संज्ञकेभ्यस्त्रिचतुर्भ्यां च परा हलाद्यसर्वनामस्थानविभक्तिरुदात्ता भवति । 'ष्णान्ता षट्' । 'षड्भिर्दीक्षयति' । 'षड्भ्यः स्वाहा' । 'षण्णाम्' 'पञ्चानां त्वा दिशाम्' । 'सप्तानाम्' । 'त्रिभिः पवयति' । 'त्रिभ्यः स्वाहा' । 'त्रयाणां त्रयाणाम्' । 'यस्त्रिषु' । 'चतुर्णाम्' । 'अन्तोदात्तात्' इति नेहानुवर्तते । तेन[2] 'पञ्चानाम्' 'चतुर्णाम्' इत्यत्राप्येष स्वरः । तदनुवृत्तौ तु न स्यात्, 'त्रः संख्यायाः' इति फिट्सूत्रेण चतुरादीनामाद्युदात्तत्वात् । व्युत्पत्तिपक्षेऽपि 'चतेरुरन्' इति उरन्प्रत्ययान्तत्वेन 'पचेर्नुम् च' 'नुदंशोर्गुणश्च' इति कनिन्नन्तत्वेन च नित्स्वरेण तेषामाद्युदात्तत्वैव । न च वचनस्यानवकाशः ; सप्ताष्टन्शब्दयोः कनिन्नन्तत्वेऽपि [3]घृतादित्वादन्तोदात्तत्वेन 'सप्तानाम्' इत्यादौ चरितार्थत्वात् । हलादिरिति[4] किम् ? 'चतस्रो धेनूर्दद्यात्' । स्थानिवद्भावेन चतुर्शब्दत्वात् 'चतस्रः' इत्यत्र प्रसङ्गः । 'चतुरः शसि' इति यथा नात्रान्तोदात्तत्वं तथा तत्रैव सूत्रे वक्ष्यामः । 'चतस्रो दिशः' इत्यादिकं तु [5]न हलादिग्रहणप्रत्युदाहरणम् ; असर्वनामस्थानपदेनैव तद्व्यावृत्तिलाभात् ॥

## [३४] ॥ झल्युपोत्तमम् ॥ (6—1—180)

'सौवर्यः सप्तम्यस्तदन्तसप्तम्यः' इत्युक्तम् । षट्त्रिचतुर्भ्यो या झलादिविभक्तिस्तदन्ते पदे उपोत्तममुदात्तं भवति । पूर्वापवादः ।

---

1. उदात्तत्वं घ. ङ.
2. तेन 'चतुर्णाम्' 'पञ्चानाम्' घ.
3. तामित्यात् घ.
4. इति घ. नास्ति ।
5. न क. नास्ति ।

'पञ्चभिः पवयति' 'सप्तभ्यः स्वाहा' 'एकादशभ्यः स्वाहा' 'द्वादशभ्यः स्वाहा' इत्यादि । 'तिसृभिरस्तुवत' । 'चतसृभिः सम्भरति' । स्थानिवद्भावात्[1] अत्र स्वरः । 'चतुर्भिरभ्रिम्[2]' । झलीति[3] किम् ? 'पञ्चानां त्वा' । उपोत्तममिति[4] किम् ? 'षड्भिः' । 'त्रिभिः' । त्र्यादीनामन्त्यमुत्तमम् । [5]तत्समीपमुपोत्तमम् । न चात्र तदस्तीति स्वराभावः । यत्तूक्तम् 'झलि परतः षट्त्रिचतुर्णामुपोत्तमाभावात् सामर्थ्यादत्र तदन्तस्य कार्यित्वम्' इति[6], तत् 'सामर्थ्यादप्यत्र तदन्तस्य कार्यित्वं लभ्यते' इत्येवम्परम्[7] ; 'सौवर्यः सप्तम्यः' इति परिभाषयापि[8] तल्लाभसंभवात् । तत्रापि त्रिशब्दानुवृत्तेरेव सामर्थ्यम् ; इतरयोरनुवृत्तेः 'एकादशभ्यः' 'चतसृभिः' इत्यादौ स्वरलम्भकत्वेन चरितार्थत्वात् ॥

## [३५] ॥ विभाषा भाषायाम् ॥ (6—1—181)

'झल्युपोत्तमम्' इत्येव[9] । 'पञ्चभ्यः' इत्यादि । अन्त्योपोत्तमे विकल्पेनोदात्ते । अत्रेदं चिन्त्यम्—'भाषायाम्' इति मास्तु । 'झल्युपोत्तमं विभाषा' इत्येकसूत्रमेवास्तु[10] । न चैवं छन्दस्यपि 'झल्युपोत्तमम्' इत्यस्य[11] विकल्पप्रसङ्गः ; व्यवस्थितविभाषाश्रयणात् इष्टसिद्धेः । 'दृष्टानुविधिश्छन्दसि' इत्यभिधानात् । 'चतृषु चतृषु मासेषु' 'चतृषु पत्सु जुहोति' इत्यादौ छन्दस्यपि तद्विकल्पदर्शनाच्च इति ॥

---

1. स्थानिवत्त्वात् घ.
2. अन्त्रिम् घ.
3. इति घ. नास्ति ।
4. इति घ. नास्ति ।
5. तस्य समीपं घ.
6. इति...कार्यित्वं ख. नास्ति ।
7. एवम्परतया ज्ञ.
8. लभ्यत इति घ. अधिकम् ।
9. एतत् घ.
10. एकमेव सूत्रमस्तु घ.
11. इति तस्य घ.

## [३६] ॥ अष्टनो दीर्घात् ॥ (6—1—172)

दीर्घान्तादष्टन्शब्दात् परा असर्वनामस्थानविभक्तिरुदात्ता भवति । 'अष्टाभिर्विकर्षति' । 'अष्टाभ्यः स्वाहा' । 'अष्टन आ विभक्तौ' इत्याकारः । 'झल्युपोत्तमम्' इत्यस्य अपवादः । ननु दीर्घग्रहणं व्यर्थम् ; आत्वविधौ विकलपाभावेन तस्य नित्यत्वेन व्यावर्त्याभावात् । सत्यम् ; अत एव दीर्घग्रहणेन तस्य अनित्यत्वं ज्ञाप्यते । तेन 'अष्टसु' इत्यादि[1] दीर्घग्रहणव्यावर्त्यम्[2] । ननु 'अष्टाभ्यः' इत्यादौ लब्धावकाशमष्टनः स्वरम् 'अष्टसु' इत्यादौ परत्वात् 'झल्युपोत्तमम्' इति स्वरो बाधिष्यते । न च 'अष्टाभ्यः' इत्यादावपि 'झल्युपोत्तमम्' इति स्वरप्रसङ्गः ; येनोपोत्तमस्वरस्यायमपवादः स्यात् । आत्वे कृते नान्तत्वाभावेन[3] 'अष्टाभ्यः' इत्यादौ षट्संज्ञाविरहे उपोत्तमस्वरस्य तत्रानवकाशात् । 'झल्युपोत्तमम्' इत्यत्र 'षट्त्रिचतुर्भ्यः' इत्यनुवृत्तेः । ततश्च 'अष्टसु' इत्यत्र परत्वादुपोत्तमस्वरो भविष्यतीति व्यर्थं दीर्घग्रहणमिति चेत्—उच्यते ; अत एव दीर्घग्रहणात् कृताकारस्याप्यष्टनः षट्संज्ञा ज्ञाप्यते । एवं च येन नाप्राप्तिन्यायेन उपोत्तमस्वरस्यायमपवादः सन् 'अष्टसु' इत्यादावपि कृताकार इव उपोत्तमस्वरं बाधेत यदि दीर्घग्रहणं न क्रियते[4] । न च 'यदष्टावुपदधाति' इत्यादिरस्यावकाशः, उपोत्तमस्वरस्तु झलादित्वाभावान्नात्र प्रवर्तत इति वाच्यम् ; घृतादित्वेन अष्टन्शब्दस्य अन्तोदात्ततया एकादेशस्वरेणैवात्र इष्टसिद्धेः । तस्मात् 'अष्टसु' इत्यादावप्ययं[5] स्वरः उपोत्तमस्वरं मा बाधिष्टेति दीर्घग्रहणम् । कृताकारस्याप्यष्टनः षट्संज्ञाज्ञापनस्य[6] 'अष्टानाम्' इत्यत्र 'षट्चतुर्भ्यश्च' इति नुडागमः फलम् । तथा च वार्त्तिकम् 'अष्टनो दीर्घग्रहणं षट्संज्ञाज्ञापकमाकारान्तस्य नुडर्थम्' इति ॥

---

1. इत्यादौ क.
2. दीर्घव्यावर्त्यं घ.
3. लब्धवकाशं.......नान्तत्वाभावेन घ. नास्ति ।
4. क्रियेत घ.
5. इत्यादावयं घ.
6. -ज्ञापकस्य क.

## [३७] ॥ न गोश्वन्साववर्णराडङ्क्रुङ्कृद्भ्यः ॥
(6—1—182)

गवादिभ्यो यदुक्तं तन्न भवति । अनन्तरस्य निषेध्यस्य तत्र[1] अभावात् षाष्ठस्वरस्य सर्वस्यायं प्रतिषेध इत्याहुः । 'गवेऽश्वाय' । 'शङ्गवे' । 'सावेकाचः' इति विभक्तिस्वरोऽत्र प्राप्तः । यत्त्विह वृत्तौ "'सुगुना' 'सुगुभ्याम्' इत्यादौ 'बहुव्रीहौ नञ्सुभ्याम्' इत्यन्तोदात्तत्वे 'अन्तोदात्तादुत्तरपदात्' इति प्राप्तः स्वरः स्थानिवद्भावेन[2] गोशब्दात् परत्वमाश्रित्य निषिध्यते" इत्युक्तम्, तच्चिन्त्यम् ; 'गोः पूर्वणित्त्वात्वस्वरेषु' इति स्थानिवत्सूत्रवार्त्तिके तद्भाष्ये च [3]स्वरविषये गोशब्दादेशस्य स्थानिवत्त्वनिषेधात् । 'शुनश्चतुरक्षस्य' । 'परमशुनः' । उक्तसूत्राभ्यामेव सर्वत्र प्राप्तिरवगन्तव्या । सौ प्रथमैकवचने यदवर्णान्तं [4]तस्माद्यथा— 'ताभिर्नोऽविता भव' । 'याभिः सूर्यो ददृशे' । राडिति राजतिः क्विबन्तो गृह्यते । 'राजे' । 'परमराजे' । अञ्चतिः [5]क्विन्नन्तो गृह्यते । 'सनकारस्य ग्रहणं यत्रास्य नलोपाभावः तत्रैव निषेधो यथा स्यात् । पूजायां च नलोपाभावः । 'नाञ्चेः पूजायाम्' इति निषेधात्' इति वृत्त्यादौ । यत्तु 'चौ' इति सूत्रे भाष्यकैयटयोः—अञ्चतिर्धातुरेव[6] गृह्यते न तु प्रतिषिद्धनलोपः—इति स्थितम्, तत् [7]प्रौढिवादेनेति तदाशयः । 'प्राञ्चा' । 'प्राङ्भ्याम्' । नलोपविषये तु न प्रतिषेधः, 'प्राचा' । क्रुङ्डिति क्रुञ्च गतिकौटिल्याल्पीभावयोः—इति धातुः [8]क्विन्नन्तो गृह्यते । 'ऋत्विग्दधृक्' इत्यादिना क्विन् । तत्र 'क्रुञ्चाम्' इति निपातनान्नलोपाभावः । 'क्रुञ्चा' । 'क्रुञ्चे' । करोतेः, कृती छेदने इत्यस्माद्वा क्विपि कृत् । 'कृता' । 'कृते' । 'परमकृता' । षाष्ठस्वरमात्रस्यायं निषेध इत्युक्तम् । तेन 'घृतवन्तं जुषन्ताम्' 'सुपुत्रिणं

---

1. अत्र घ.
2. स्थानिवत्त्वेन घ.
3. वृत्तिविषये घ.
4. तस्मात्तद्यथा घ.
5. क्विबन्तः क.
6. अञ्चतिरिह घ.
7. प्रौढ- घ.
8. क्विबन्तः घ.

वीरवन्तम्' इत्यादौ 'ह्रस्वनुड्भ्याम्' इति[1] मतुबुदात्तस्यापि 'सावर्ण' इति निषेधः सिध्यति। यद्यप्येवं 'कुमारी' इत्यादौ उदात्तनिवृत्तिस्वरस्यापि 'सावर्ण' इति निषेधः प्रसज्येत[2], न चेष्टापत्तिः ; उदात्त-निवृत्तिस्वरस्य अत्र भाष्ये दर्शितत्वात्, 'प्रतीक्षायै कुमारीम्' इत्यादौ तथा अध्ययनाच्च, तथापि 'स नेष्यते' इति हरदत्तः। 'अनुदात्तस्य च यत्रोदात्तलोपः[3]' इति सूत्रव्यतिरिक्तानामिह अनुवर्तनेन तेषामेव अयं निषेध इति व्याख्यानात्। '[4]अनुदात्तस्य' इत्यंशस्य तत्र सूत्रे भाष्ये प्रत्याख्यातस्य पुनर्विधानार्थत्वाद्वा न दोष इति केचित्। यत्तु 'गवादिभ्यस्तृतीयादिविभक्तेरुदात्तत्वं न' इति स्वरमञ्जर्यां सूत्रं विवृतम्, तत् आकरविरोधादुपेक्ष्यम्। 'सावर्ण' इत्यत्र 'सौ' इति प्रथमैकवचनं गृह्यत इत्युक्तम्। तेन 'वीरवन्तम्' इत्यादौ मतुबुदात्तत्व[5]निषेधसिद्धिः। सप्तमीबहुवचनग्रहणे तु तत्र वीरादीनामवर्णान्तत्वाभावान्न स्यात्। यत्त्वत्र भाष्ये "यत्तदोरुपसङ्ख्यानं कर्तव्यम्। अन्यथा प्रथमैकवचन-ग्रहणेऽपि पुंसि नपुंसके च 'तेन' इत्यादौ 'तया' इत्यादौ[6] स्त्रियां च 'सावर्ण' इति निषेधो न स्यात्, नपुंसके यत्तदोः सावर्णान्त-त्वाभावात्। इतरत्र तथात्वेऽपि भिन्नरूपाभ्यामेव ताभ्यां तृतीयादिविभक्तेः परत्वात्" इत्युक्तम्, तत् 'सावेकाचः' इत्यत्रेव अत्रापि सावर्णान्तं यच्छब्दरूपं ततः परस्य स्वरनिषेध इति सूत्रार्थमाश्रित्य। यदि च [7]तत्रत्यहरदत्तादिमतरीत्या 'यत् प्रातिपदिकं सावर्णान्तं कदाचित् ततः परस्य निषेधः' इत्याश्रीयेत तदा विनैवोपसङ्ख्यानमिष्टसिद्धिरिति[8]। अत एव हरदत्तादिभिरिदमुपसङ्ख्यानं नादृतम्। कैयटस्तु—'तेन' इत्यादौ निषेधो न स्यादिति भाष्यं चिन्त्यम् ; अत्र स्वरप्रापकाभावात्। 'सावेकाचः' इति हि प्राप्तिः

---

1. इति घ. नास्ति।
2. प्रसज्यते घ. ङ.
3. यत्रोदात्तः घ.
4. अनुदात्तस्य च क.
5. -उदात्तनिषेध- घ.
6. 'तया' इत्यादौ ख. नास्ति।
7. तत्र हरदत्त- घ.
8. सिद्धेः। अत घ.

वक्तव्या । सा च न सम्भवति ; सौ सुपि यदेदन्तं रूपं तेष्वितित तस्मादत्र विभक्तेः परत्वाभावात्, त्यदाद्यत्वे तच्छब्दस्य अकारान्तत्वात्, [1]ततः प्राक् दकारान्तत्वात् । न च इनादेशे आद्गुणे च एकादेशस्य पूर्वं प्रति अन्तवद्भावान्न रूपभेदः[2] ; 'उभयत आश्रयणे नान्तादिवत्' इत्युक्तेरिति[3] । तदाह—

'तेनेति यदुपन्यस्तं प्राप्तस्तत्र कथं स्वरः ।
एकारान्तं यदेकाच् सौ तस्मादत्र परा न टा[4] ॥

न चाद्गुणे कृते प्राप्तिर्निषेधादुभयाश्रये ।
विधावन्तादिवत्त्वस्य चिन्त्यं तस्मादिदं बुधैः ॥' इति ॥

अत्र भाष्यरत्नावलीकृतः—'टा ङसि' इत्यत्र भाष्ये इनादेशं प्रत्याख्याय नादेशस्य 'आङि चापः' इत्यत्र 'आङि च' इति योगविभागेन एत्वस्य च व्यवस्थापनात् गुणादिप्रसक्तेरेव अत्र अभावात् कैयटग्रन्थ एवायं चिन्त्य इत्याहुः । यत्त्विह श्वन्ग्रहणं 'शुनः' इत्यादौ न विभक्तिस्वरनिषेधाय ; 'सावर्ण' इत्येव तत्सिद्धेः । न च 'नलोपः सुप्स्वर' इति नलोपस्य असिद्धत्वान्नान्तः सौ श्वन्शब्दः, न त्ववर्णान्त इति वाच्यम् ; स्वरनिषेधविधित्वेन अस्य स्वरविधित्वाभावात् । तस्मात् 'स्वरनिषेधेऽप्यत्र नलोपोऽसिद्धः' इति ज्ञापनाय श्वन्ग्रहणम् । तत्फलं तु नृशब्दात् सप्तम्येकवचने 'नरि' इत्यत्र 'सावेकाचः' इति विभक्त्युदात्तत्वम् 'पितृमान्' इत्यादौ 'ह्रस्वनुड्भ्याम्' इति मतुबुदात्तत्वं च । अन्यथा नृपितृशब्दयोः साववर्णान्तत्वादुभयनिषेधः स्यादिति हरदत्तेनोक्तम्, तत् 'साववर्णान्तं यत् प्रातिपदिकम्' इति स्वाभिमतसूत्रार्थानुसारात् । भाष्यमते तु रूपभेदेन 'शुनः' इत्यादौ 'साववर्ण' इति निषेधासिद्ध्या श्वन्ग्रहणस्य आवश्यकत्वादिति दिक् ॥

---

1. इदं वाक्यं क. नास्ति ।
2. अन्तवद्भावाद्रूपाभेदः घ. ङ.
3. उक्तेः । अत आह क.
4. स्वरो न सः क. ख.

## [३८] ॥ दिवो झल् ॥ (6—1—183)

'षट्त्रिचतुर्भ्यो हलादिः' इत्यत आदिग्रहणमनुवर्तते[1] । दिवः परा विभक्तिरुदात्ता न भवति यस्या[2] आदिर्झल् भवतीत्यर्थः । 'झलि' इति सप्तमीनिर्देशाभावेन 'यस्मिन् विधिः' इति[3] तदादिविध्यलाभात्[4] आदिग्रहणमनुवर्त्य एवं[5] व्याख्यातम् । न च झल्मात्रविभक्त्यभावात् तदादिविभक्तिलाभः ; तदन्तविधिना ङसादेर्झ[6]लन्तविभक्तेर्निषेध-सम्भवात् । ततश्च 'दिवस्परि' इत्यादौ विभक्तिस्वरो न स्यात् । 'सावेकाचः' इति 'ऊडिदम्' इति च प्राप्तस्य अयं निषेधः । '[7]प्रत्यस्य वह द्युभिः' । '[8]त्वमग्ने द्युभिः' । झलीति[9] किम् ? 'दिवि सोम आसीत्' । नन्वेवं 'दिवोऽजादिविभक्तिरुदात्ता' इति पर्यवसन्नम् । एवं सति 'अष्टनो दीर्घात्' इत्यनन्तरं 'दिवोऽजादिः' 'शतुरनुमो नदी च' इति सूत्र्यताम् । 'ऊडिदम्' इत्यत्र द्युग्रहणं प्रकृतसूत्रं च न कर्तव्यम् इति लाघवं स्यादिति । एवमपि 'नृ चान्यतरस्याम्' इति उत्तरार्थं झल्ग्रहणमत्र कर्तव्यम् । 'नदी च' इति चकारश्च कर्तव्य इति नास्ति लाघवमिति हरदत्तः । [10]यत्तु अत्र मनोरमायामुक्तम्—उत्तरार्थं झल्ग्रहणं न कर्तव्यम् । न चैवं नृशब्दात् अजादिविभक्तेरपि स्वरनिषेधः स्यात् इति वाच्यम् ; इष्टत्वात् । दृश्यते च 'य एक इन्नर्यपाँसि[11]' इत्यत्र 'नरि' इत्यस्य विभक्त्युदात्तत्वाभावः । आद्युदात्ताध्ययनात् । अत एव पूर्वसूत्रे हरदत्तोक्तं 'नरि' इत्यस्य अन्तोदात्तत्वमपि चिन्त्यम् । एवं च लाघवात् पूर्वोक्तविधयैव सूत्रप्रणयनमस्तु—इति । [12]तत्र "हरदत्तोक्तं

---

1. अनुवर्तत आदिग्रहणम् घ.
   आदिग्रहणमिहानुवर्तते ख.
2. यस्यादिः क. ख.
3. विधिस्तदादाविति क.
4. -विध्यभावात् घ.
5. एव घ.
6. झलन्त- घ. नास्ति ।
7. प्रत्ययस्य घ.
8. इदं वाक्यं क. नास्ति ।
9. इति घ. नास्ति ।
10. यत्तु घ. नास्ति ।
11. अपाँसु क.
12. तत्र घ. नास्ति ।

'नरि' इत्यस्य अन्तोदात्तत्वं चिन्त्यम्" इति तावन्मन्दम् ; 'नृ चान्यतरस्याम्' इति निषेधस्य वैकल्पिकत्वेन [1]'तन्मतेऽपि 'नरि' इत्यस्य पाक्षिकमन्तोदात्तत्वमस्तीति[2] तदादाय तद्वचनोपपत्तेः । अपि च 'झल्' इत्यस्य उत्तरत्र अननुवृत्तिकल्पनं भाष्यविरुद्धम् ; 'नामन्यतरस्याम्' इति [3]सूत्रभाष्ये 'नरि' इत्यत्र स्वरनिषेधाय "[4]झल्' इत्यनुवृत्तेर्भगवतैव कण्ठरवेण अभिधानात् । 'अन्तोदात्तादुत्तरपदादन्यतरस्याम्[5]' इत्यादावेव 'नृ च' इति सूत्रयितव्ये 'दिवो झल्' 'नृ चान्यतरस्याम्' इति सूत्रयन् सूत्रकृदपि अत्र [6]झलपदानुवृत्तिं सूचयति । उदाहृतवैदिकप्रयोगश्च व्यत्ययेन साधनीयः । भाषायां नृशब्दादजादिविभक्तेर्नित्यमुदात्तत्वार्थमुत्तरत्र झलपदानुवृत्तिरिति भाष्याशयः । भाषायामपि स्वरनियमस्य प्रागेव दर्शितत्वात् । किञ्चिद्वैदिकप्रयोगदर्शनेन सूत्र[7]विशेषणप्रत्याख्यानप्रवृत्तौ सर्व[8]व्याकरणव्याकुलीभावप्रसङ्गाच्च । तस्मादत्र हरदत्तोक्तमेव समञ्जसम् ॥

## [३९] ॥ नृ चान्यतरस्याम् ॥ (6—1—184)

नृशब्दात् परा झलादिविभक्तिर्नोदात्ता वा [9]स्यात् । 'त्वं नृभिर्नृपते' । 'नृभ्यो यथा गवे' । सूत्रे 'नृ च' इत्यत्र पञ्चम्या [10]लुग्बोध्यः ॥

## [४०] ॥ अन्तोऽवत्याः ॥ (6—1—220)

इह असन्देहार्थं 'वत्या अन्तः' इति वक्तव्ये 'अन्तोऽवत्याः' इति वचनात् अकारप्रश्लेषो निश्चीयते । अवतीशब्दान्तस्य[11] अन्तः

---

1. त्वन्मतेऽपि घ. ङ. छ.
2. इति घ. नास्ति ।
3. सूत्रे भाष्ये क.
4. झलीत्य- क.
5. अन्यतरस्याम् घ. नास्ति ।
6. झलनुवृत्तिं घ.
7. -प्रणयन- ङ.
8. -व्याकरण- घ. ङ. छ. नास्ति ।
9. स्यात् घ. नास्ति ।
10. अलुक् घ.
11. -शब्दस्य घ.

-उदात्तः स्त्रियां संज्ञायाम् । "अजिरवती'[1] । ङीपः पित्त्वादनुदात्तत्व-मत्र प्राप्तम् । 'अश्वावती॰ सोमवतीम्' । अथ 'वत्या अन्तः' इत्येवोच्यताम्, किमकारप्रश्लेषेण ? एवं च अनेनैव सिद्धे 'ईवत्याः' इत्युत्तरसूत्रमपि न कर्तव्यमिति चेत्—उच्यते; 'राजवती' इत्यत्र मा भूदित्यकारप्रश्लेषः । न च नलोपे सति अवतीशब्दान्त एव अयमिति [2]तद्दोषतादवस्थ्यम् ; 'नलोपः सुप्स्वर' इति स्वरविधौ नलोपस्य असिद्धत्वेन अन्वतीशब्दान्तोऽयमिति दोषाभावात् । उदाहरणे 'संज्ञायाम्' इति मतुपो वत्वं तु आश्रयात् सिद्धम् ॥

## [४१] ॥ ईवत्याः ॥ (6—1—221)

ईवतीशब्दान्तस्य अन्त उदात्तः संज्ञायाम्[3] । 'अहीवती' । 'शरादीनां च' इति दीर्घः । 'संज्ञायाम्' इति मतुपो वत्वम् । योगविभागश्चिन्त्यप्रयोजनः ॥

॥ इति सुप्स्वराः[4] ॥

---

1. अजिरावती त्र.
2. तत् व. नास्ति ।
3. स्त्रियां घ. अधिकम् ।
4. सुप्पित्स्वराः ङ. छ. ज.

## ॥ अथ तिङ्स्वरप्रकरणम् ॥

## [४२] ॥ तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः ॥ (6—1—186)

ङिदिति कर्मधारयः । ङ् चासौ इच्च ङित् । उपदिश्यत इत्युपदेशः । ङिदतौ च तौ उपदेशौ च ङिददुपदेशौ[1] । एवं इत्संज्ञकङकारेण अता च उपदेशो विशेषित इति तदन्तविधौ उपदेशदशायां य इत्संज्ञकङकारान्तः, यश्च अकारान्त इत्यर्थः पर्यवस्यति । तासिश्च अनुदात्तेच्च ङिददुपदेशौ च इति समाहारद्वन्द्वः । एतेभ्यः परं लसार्वधातुकमनुदात्तम्, ह्नुङ् अपनयने, इङ् अध्ययने, इति आभ्यां परं वर्जयित्वा । प्रत्ययस्वरापवादः । 'श्वो यज्ञे प्रयोक्तासे' । युजेर्लुट् । थास् । 'थासः से' । 'स्यतासी लृलुटोः' । 'तासस्त्योः' इति सलोपः । 'न लुट्' इति तिङ्निघातप्रतिषेधः । लसार्वधातुकानुदात्तत्वे तासिस्वरः । 'तिङि चोदात्तवति' इति गतिनिघातः । अनुदात्तेत् —'यद्वस्ते तद्दक्षिणा' 'आस्त इव ह्रीयम्' । वस आच्छादने, आस उपवेशने । अदादी अनुदात्तौ[2] । ङित्—शेते, सूते । 'शयानाय स्वाहा' । शीङो लटः शानजादेशः । अदुपदेशः—'अथो यद्वेदश्च वेदिश्च भवतः' । 'बाधमाना रायः' । 'वृश्चतश्च' । आद्ययोः शब्रूपः अदुपदेशः । इतरत्र तौदादिकः शः । तास्यादिभ्यः किम् ? 'य एवमग्निं चिनुते' । न च 'सार्वधातुकमपित्' इति श्नुप्रत्ययस्य ङित्त्वातिदेशात्[3] दोषतादवस्थ्यम् ; ङिदित्यस्य उपदेशविशेषणत्वेन इत्संज्ञकङकारान्तादिति व्याख्यानात् । अत्र [4]तास्यदुपदेशग्रहणं लिङ्गम् 'अन्यत्र विकरणेभ्यः' इत्यर्थस्येत्युक्तम् । तेन 'चिनुते' इत्यत्र सतिशिष्टस्यापि विकरणस्य स्वरो न इत्यन्तोदात्ततैव । उपदेशावस्थायामदन्त इत्युक्तेः

---

1. च ङिददुपदेशौ घ. नास्ति ।
2. अनुदात्तेतौ ङ. छ. ज.
3. ङित्त्वान्ङिदुपदेशात् घ.
4. तास्यद्ग्रहणं ङ.

हन्तेस्तसि थसि च 'हतः' हथः' इत्यत्र न भवति ; हन्तेरुपदेशेऽदन्तत्वाभावात् । 'अनुदात्तोपदेशवनति' इत्यादिना अनुनासिकलोपानन्तरमेव अस्य अदन्तत्वात् । 'हथो अप्रति' 'ये यजामहे' इत्यादौ च 'अतो दीर्घो यञि' इति सत्यपि शपो दीर्घे भवति लसार्वधातुकानुदात्तत्वम् ; उपदेशे शपोऽदन्तत्वात् । न च शपः पकारान्तत्वेन अदुपदेशाभावः[1] ; अनुबन्धानेकान्तत्वपक्षे तदभावात् । तदेकान्तत्वपक्षेऽपि 'उदीचां माङः' इति मेङः कृताकारस्य निर्देशाल्लिङ्गात् कार्येष्वनुबन्धानां [2]प्रतिबन्धकत्वाभावात् । अदिति तपरकरणं किम् ? 'पाहि यज्ञम्' । लेति किम् ? 'जुषाणो अग्निः' । 'आहुतिं जुषाणः' । जुषी प्रीतिसेवनयोः । अनुदात्तेत् । ताच्छील्ये चानश् । 'बाहुलकाच्छस्य लुक्' इति वेदभाष्यम् । अत्र 'चितः' इत्यन्तोदात्तत्वम् । न च चित्स्वरोऽस्य[3] अनुदात्तस्य बाधको भविष्यतीति लग्रहणं मास्त्विति वाच्यम् ; परत्वादस्यैव चित्स्वरबाधकत्वात् । अत एव शानजन्ते 'बाधमाना[4] रायः' इत्यादौ चित्स्वरात् परत्वादिदमनुदात्तत्वं दृश्यते । न चात्र 'आने मुक्' इति मुका व्यवधानात् कथं [5]अदुपदेशाच्छपः परत्वं शानच इति वाच्यम् ; स्वरविधौ [6]व्यञ्जनाविद्यमानवत्त्वात् । 'हल्स्वरप्राप्तौ' इति पक्षेऽपि 'आने मुक्' इत्यनेन अङ्गस्य योऽकारः तस्य मुग्विधानात् अदुपदेशग्रहणेन तदागमस्यापि ग्रहणात् अव्यवधानात् । न चैवमपि[7] 'बाधमाना' इत्यत्र परत्वादिदमनुदात्तत्वं[8] इत्ययुक्तम्, 'अदुपदेशात्' इति पञ्चमीनिर्देशात् 'आदेः परस्य' इति शानच[9] आदेरनुदात्तत्वम्, 'चितः' [10]इत्यन्तस्योदात्तत्वम्, इत्युभयोः [11]समावेशेन विप्रतिषेधाभावात् इति वाच्यम् ; 'स्वरविधौ सङ्घातः कार्यी' इति परिभाषया 'आदेः परस्य' इत्यादेरत्राप्रवृत्तेरुक्तत्वात् । सार्वधातुकमिति[12] किम् ? 'मघवन् मन्दिषीमहि' ।

---

1. अनदुपदेशत्वम् घ.
2. अप्रतिबन्धकत्वानुमानात् घ. ङ. छ. ज.
3. चित्स्वरो ह्यनुदात्तस्य क.
4. 'बाधमानो रायः घ.
5. उपदेशात् क.
6. व्यञ्जनस्याविद्यमानत्वात् क.
7. अपि घ. नास्ति ।
8. -त्वं घ. नास्ति ।
9. शानजादेः घ.
10. इत्यन्तोदात्तत्वं घ.
11. संभवेन घ. ङ. छ.
12. इति घ. नास्ति ।

मन्दतेराशिषि लिङ् । सीयुडागमस्य अनुदात्तत्वात् प्रत्ययस्वरेण मकाराकार उदात्तः[1] । 'लिङाशिषि' इत्यार्धधातुकसंज्ञा । व्यत्ययान्निघाताभावः । अह्विङोः किम् ? 'अधीयन्तोऽवेक्षन्ते' । 'इयानः कृष्णो दशभिः' इति स्वरमञ्जर्याम् । ननु 'अधीयन्तः' इत्यत्र 'इङ्धार्योः शत्रकृच्छ्रिणि' इति शता । स च न लादेशः 'पूङ्यजोः शानन्' इत्यादौ लट इति निवृत्तमिति वृत्त्यादौ अभिधानात् । 'इयानः' इत्यपि[2] इणश्छान्दसे शानचि, ताच्छील्ये वा चानशि छान्दसे इयङादेशे च रूपम् । न त्विङः ; '[3]अयमारुणकेतुकोऽग्निरादित्यरूपेण दशभिः सहस्रैः करैः सञ्चरन्' इति वेदभाष्यात् इङो गत्यर्थत्वायोगात्, अध्युपसर्गव्यभिचारायोगाच्चेति कथञ्चिदं प्रत्युदाहरणमिति । अत्र तद्व्याख्यातारः—'अधीयन्तोऽवेक्षन्ते' इत्यत्र वेदभाष्ये 'अधीयन्तः पठन्तः' इति विवरणदर्शनेन इङश्छान्दसो लटः शत्रादेश एवायम् । न तु 'इङ्धार्योः' इति शता । अकृच्छ्रत्वादेस्तत्राप्रदर्शनात्[4] । 'इयानः' इत्यपि इङ एव रूपम् । धातूनामनेकार्थत्वात् गत्यर्थता । अध्युपसर्गव्यभिचारश्च छान्दस इति । वस्तुतः—'ह्नुते' 'अरण्येऽधीयीत' इत्यादिकमेव निर्बाधं[5] प्रत्युदाहरणम् । अत्र तिङ्निघाताभावः छान्दसः । 'अधीयीतैव स्वाध्यायम्' इत्यत्र तु व्यत्ययात् लसार्वधातुकानुदात्तत्वम् । 'यद्चोऽधीते' इत्यत्र 'निपातैर्यद्यदि' इति निषेधाभावश्च । इह 'मा हि धुक्षाताम्' इत्यत्र अदुपदेशाल्लसार्वधातुकानुदात्तत्वमाशङ्क्य अपवादविषयपरिहारेण उत्सर्गप्रवृत्तेः प्रथममत्र लसार्वधातुकस्य प्रत्ययाद्युदात्तत्वं न प्रवर्तते । तत्र परत्वात् 'क्सस्याचि' इति लोपः । तत उदात्तनिवृत्तिस्वरात् परत्वात् लसार्वधातुकानुदात्तत्वम् । पुनःप्रसङ्गविज्ञानादुदात्तनिवृत्तिस्वरः । न च अनुदात्ते परतः उदात्तलोपाभावात् कथमुदात्तनिवृत्तिस्वर इति वाच्यम् ; प्रत्ययाद्युदात्तत्वस्य प्रागप्रवृत्त्या अविद्यमानोदात्ते परतः उदात्तलोपात् । अविद्यमानोदात्तस्यैव तत्र सूत्रे अनुदात्तशब्दार्थत्वात् इति परिहृतम्

1. अनुदात्तः घ.
2. 'इयान्' इत्यादावपि क.
3. अयमारुणकेतुकमग्निम् घ.
4. तत्रादर्शनात् क.
5. निर्बाधप्रत्युदाहरणम् क.

आकरे । दुहेर्माङि लुङ् । आताम् । 'शल इगुपधात्[1]' इति क्सः । हिशब्दो निघाताभावाय । माङ्योगादडभावः । न च 'अद्धि त्वं देव' 'अत्ता हवींषि' इत्यादौ अदुपदेशात् लसार्वधातुकानुदात्तत्वं शङ्क्यम् । 'अदिप्रभृतिभ्यः' इति शपो लुप्तत्वात् अल्विधित्वेन स्थानिवत्त्वाभावात् वर्णाश्रयत्वेन प्रत्ययलक्षणाभावात् अनुदात्तङिद्ग्रहणाल्लिङ्गाच्चेति ॥

स्यादेतत्—'भवन्ति इत्यादौ शप्शत्रकारयोरन्तरङ्गत्वात् एकादेशे अतो[2] गुणे व्यपवर्गाभावात् कथम् 'अदुपदेशात्' इत्यनुदात्तत्वम्? न च अन्तादिवद्भावः, उभयत [3]आश्रयणे तदयोगात् । न च भूतपूर्वगत्या अदुपदेशात् परत्वम् ; 'तस्मात् स्वपन्तं प्राणाः' इत्यादौ लुग्विकरणेऽपि प्रसङ्गादिति ॥

अत्र स्वरमञ्जरीकारः—अदुपदेशाल्लसार्वधातुकस्य स्थाने योऽयमेकादेशः तस्य स्वरः । लुग्विकरणे एकादेशाभावान्न दोषः[4]—इति । कथमयं परिहारत्वेन [5]हृदयमारूढ इति न विद्मः ; इदानीमपि स्वरप्रवृत्तिसमये लसार्वधातुकस्य तत्सम्बन्धिन एकादेशस्य वा अदुपदेशात् परत्वानुपपादनात् । भूतपूर्वगतौ च उक्तदोषात् । न च भूतपूर्वगत्या अदुपदेशात्[6] लसार्वधातुकस्य य एकादेशस्तस्य स्वर [7]इति कल्पनं युक्तम् ; 'पचतः' इत्यादौ एकादेशाभावात् । न च तत्र लसार्वधातुकस्य च स्वरः ; सूत्रस्य नानार्थत्वापत्तेः । 'पचतः' इत्यादौ मुख्ये सम्भवति भूतपूर्वगत्ययोगाच्चेति ॥

केचित्तु—'अतो गुणे' इति पररूपमपि [8]अपदान्ताकारत्वादिकमपेक्षत इति नान्तरङ्गम् । ततश्च परत्वादनुदात्तत्वम् । (न च पररूपस्य नित्यत्वम् ; स्वरभिन्नस्य प्राप्त्या तस्यापि अनित्यत्वात् । कृतेऽनुदात्तत्वे अनुदात्तस्य पररूपम्, अकृते त्वतथा-

1. इगुपधादनिटः क्सः क.
2. ततः घ.
3. आश्रये घ.
4. स्वरः घ.
5. हृदयारूढः क.
6. अदुपदेशात् परस्य क.
7. इत्यपि ङ.
8. अपदान्तत्वाकारान्तत्वादिकं न.

भूतस्येति स्वरभिन्नस्य प्राप्तिः । एवं च परत्वात् प्रथमं लसार्वधातुका-मुदात्तत्वे ततः पररूपम् इति इष्टसिद्धिः[1]—इत्याहुः ॥

अन्ये त्वाहुः—'नेन्द्रस्य परस्य' इति लिङ्गात् क्वचिदन्तरङ्गन्यायो नाश्रीयते। इन्द्रशब्दे हि द्वावचौ । तत्र एकः 'यस्येति'लोपेनापहृतः । अपरस्तु अन्तरङ्गेणैकादेशेन। एवम् अनच्क [2]इन्द्रशब्दः सम्पन्नः । तत्र कः प्रसङ्गः 'आग्नेन्द्रः' इत्यादौ उत्तरपदे[3] वृद्धेः । ततश्च 'नेन्द्रस्य परस्य' इति प्रतिषेधोऽनर्थकः । स च क्रियमाणः क्वचित् अन्तरङ्गन्यायानाश्रयणे[4] लिङ्गम् । यद्यपि 'अन्तादिवच्च' इत्यत्र[5] आकारे 'बहिरङ्गमपि पूर्वोत्तरपदयोस्तावत् कार्यं भवतीत्यत्र अयं निषेधो लिङ्गम्' इत्युक्तम्, तथापि लक्ष्यानुरोधात्[6] क्वचिदन्तरङ्ग-न्यायानाश्रयणे लिङ्गत्वोपवर्णनात् इष्टसिद्धिरिति ॥

## (वा) ॥ विदीन्धिखिदिभ्यश्च [7]लसार्वधातुकप्रतिषेधा-ल्लिङि सिद्धम् ॥

'अनुदात्तस्य च यत्र' इति सूत्रस्थमिदं वार्त्तिकम् । [8]विद विचारणे, ञि इन्धी दीप्तौ, खिद दैन्ये, एषां लसार्वधातुकानुदात्तत्वं लिङि नेति वक्तव्यमित्यर्थः । अनुदात्तेत्त्वात् प्राप्तिः । 'विन्दीत' 'इन्धीत' 'खिन्दीत' इत्यादि । अनुदात्तत्वे प्रतिषिद्धे प्रत्ययस्वरेण तशब्द उदात्तः । सीयुट आगमत्वादनुदात्तः । शेषनिघातेन शिष्ट-मनुदात्तम् । न च 'श्नसोरल्लोपः' इत्यकारलोपे सीयुट उदात्तनिवृत्ति-स्वरप्रसङ्गः ; शेषनिघातेन अनुदात्तस्यैव श्नमोऽकारस्य लोपात् । वार्त्तिकानारम्भे तु लसार्वधातुकस्य अनुदात्तत्वे[9] धातुस्वरेण [10]श्नमोऽकारस्य

1. इष्टसिद्धिमाहुः घ. ङ.
2. इन्द्रः सम्पन्नः क. घ.
3. उत्तरपदवृद्धेः क.
4. -श्रये घ.
5. अत्र घ. नास्ति ।
6. लक्ष्यानुसारात् घ.
7. लसार्वधातुकानुदात्तत्वं लिङि नेति सिद्धम् घ.
8. विचारणे क्षिन्तिः घ.
9. लसार्वधातुकानुदात्तत्वे घ.
10. श्नमकारस्य क.

उदात्तस्य लोपात् उदात्तनिवृत्तिस्वरेण सीयुडुदात्तः स्यात् । अत्र भाष्यम्—लिङिवनेन नार्थः । अविशेषेण विदीन्धिखिदिभ्यो लसार्वधातुकानुदात्तत्वं नेत्येव । इदमपि सिद्धं भवति 'विन्दाते'— इति । एवं च 'विन्दाते' इत्यत्रापि प्रत्ययस्वरेण अकार उदात्त इति सिद्धम् ॥

## [४३] ॥ अनुदात्तस्य च यत्रोदात्तलोपः ॥ (6—1—161)

यस्मिन्ननुदात्ते परत[1] उदात्तो लुप्यते तस्य अनुदात्तस्य उदात्तो भवति । 'दे॒वीं वाच॑मजनयन्त' । 'सा नो॑ दे॒वी सु॒हवा॒ शर्म॑ यच्छतु' । पचादौ 'देवट्' इति पाठात् देवशब्दः 'दिवु [2]क्रीडादौ' इति धातोः पचाद्यजन्तः प्रत्ययस्वरेण अन्तोदात्तः । ततः 'टिड्ढ' इति ङीप् पित्त्वादनुदात्तः । तत्र [3]परतः "यस्येति च' [4]इति इकार उदात्तो लुप्त इति ङीबुदात्तः । 'भुञ्ज॒क्त ए॑नमे॒तौ' । भुजेर्लटस्तसादेशः । 'तास्यनुदात्तेत्' इति [5]तस्य लसार्वधातुकानुदात्तत्वम् । 'रुधादिभ्यः श्नम्' । तस्य प्रत्ययस्वरेणोदात्तत्वम् । यद्युच्येत प्रत्ययस्वरं बाधित्वा परत्वात् 'यासुट् परस्मैपदेषु' इत्यत्र ज्ञापितमागमानुदात्तत्वमेव श्नमो युक्तमिति, तर्हि ततोऽपि परत्वाद्धातुस्वरेण तस्योदात्तत्वं बोध्यम् ; तन्मध्यपतितस्य तद्ग्रहणेन ग्रहणात् श्नम्वतोऽपि धातुत्वात् । "श्नसोरल्लोपः' इति तस्य अनुदात्ते परे[6] श्नमकारस्य लोप इति तस उदात्तत्वम् । "प॒थो वा ए॒ते' । 'पतेस्थ च' इति इनिप्रत्ययान्तः पथिन्शब्दः प्रत्ययस्वरेण अन्तोदात्तः । ततो विभक्तिरनुदात्ता । 'भस्य टेर्लोपः' इति तत्र परतष्टिलोप इति विभक्तिरुदात्ता । एवम् 'पू॒ष्णो रे॒वती॑' 'उ॒क्ष्णः प्रौक्ष॑त्' 'मू॒र्ध्नो विश्व॑स्य' इत्यादौ 'अल्लोपोऽनः' इत्यकारलोपे विभक्तिरुदात्ता ॥

---

1. परतः क. नास्ति ।
2. क्रीडायां क.
3. परे घ.
4. इति क. नास्ति ।
5. तस्य ख. नास्ति ।
6. परतः अकारस्य घ.

अथ पूषन्नादीनाम् 'श्वन्नुक्षन्पूषन्प्लीहन्क्लेदन्स्नेहन्मूर्धन्मज्जन्-विश्वप्सन्परिज्मन्मातरिश्वन्मघवन्' इत्युणादौ कनिन्नन्ततया [2]निपातनान्नित्स्वरेण आद्युदात्तत्वादुदात्तनिवृत्त्यभावे कथमत्र उदात्तनिवृत्तिस्वर इति चेत्—अत्र केचित्—उक्षन्नादयोऽत्र सूत्रेऽन्तोदात्ता निपात्यन्ते —इति । अन्ये तु—लाघवात् [3]कनिन्प्रत्ययान्ततयैव[4] निपातनाश्रयणात् प्रत्ययस्वरेण अन्तोदात्तत्वमित्याहुः । मातरिश्वशब्दे तु रिशब्द[5] उदात्तो निपात्यत इति मतद्वयेऽप्याश्रयणीयम् । तेन 'मातरिश्वनो घर्मोऽसि' इत्यादौ रिशब्दस्य उदात्तत्वं सिद्धमिति बोध्यम् । अनुदात्तस्येति[6] किम् ? प्रासङ्गं वहति प्रासङ्ग्यः । प्राङ्पूर्वात् सजतेः कर्मणि[7] घञि प्रासङ्गः । थाथादिस्वरेण अयमन्तोदात्तः । ततश्च 'तद्वहति' इति यत् । तित्स्वरितः । अत्र[8] स्वरिते परतः[9] 'यस्येति च' इत्युदात्तो लुप्त इति स्वरितस्य नोदात्तत्वम् । इदं च फलं भाष्ये प्रत्याख्यातम् । तथा हि—'तित्स्वरितः' इति स्वरिते सति शेषनिघातेन शिष्टमनुदात्तम् । ततश्च अनुदात्तस्यैव [10]अत्र लोपः । यद्यपि शेषनिघातात् परत्वात् 'यस्येति'लोपो युक्तः, तथापि [11]अपवादविषयपरिहारेण उत्सर्गप्रवृत्तिरिति शेषनिघातविषये थाथादिस्वराप्रवृत्तेः उदात्तलोपाभावादेव अत्राप्रसङ्ग इति । अनेनैव न्यायेन 'नमो दुन्दुभ्याय' 'अवट्याभ्यः स्वाहा' इत्यादिकमपि न प्रत्युदाहर्तव्यम् । दुन्दुभ्यवटशब्दौ फिट्स्वरेण अन्तोदात्तौ । तथा च प्रयोगः—'केतुमद्दुन्दुभिः' 'निष्कृताहावमवटम्' इति । ताभ्यां 'भवे छन्दसि' इति यत् । तित्स्वरितः । यत्तु वृत्तिकृतोक्तम्—'अनुदात्तग्रहणमादेरनुदात्तस्य उदात्तार्थम् । अन्यथा 'अन्तः' इत्यधिकारात् अन्तस्य स्यात्' इति । अयमत्राशयः—यत्रेति निमित्तसप्तमी ।

---

1. -मज्जन्नर्यमन्विश्वप्- घ.
2. निपातनात् घ. नास्ति ।
3. कनिप्रत्यय- घ.
4. एव क. नास्ति ।
5. रिशब्दो निपातितोदात्तः घ.
6. इति घ. नास्ति ।
7. घञि कर्मणि घ.
8. तत्र क.
9. परे घ.
10. यस्येति घ.
11. अपवादविशेष- क.

तथा च 'दे॒वीं वाच॑म्' इत्यादौ अनुदात्तस्यैव निमित्तत्वेऽपि 'किय॑द्वो दास्यामः' 'इय॑न्तं गृह्णाति' इत्यादौ अनुदात्तवतः प्रत्ययस्यैव उदात्तलोपनिमित्तत्वमिति तदनुसारात्—यस्मिन् प्रत्यये उदात्तलोपः तत्सम्बन्धिनोऽनुदात्तस्य उदात्तत्वम्—इति सूत्रार्थ आश्रयणीयः। एवं च अनुदात्तग्रहणाभावे 'अन्तः' इत्यधिकारात् 'किय॑त्' इत्यादौ उदात्तलोपनिमित्तप्रत्ययान्तस्य उदात्तत्वं स्यात्। आदेरनुदात्तस्य यथा स्यात् इत्यनुदात्तग्रहणमिति। निमित्तत्वानादरेण यस्मिन् परत उदात्तलोप इत्याश्रयणात् इष्टसिद्धेः 'अनुदात्तस्य' इति व्यर्थमिति [1]तु भाष्याशयः। इदं परिमाणमस्य इयत्। किं परिमाणमस्य कियत्। 'किमिदम्भ्यां वो घः' इति वतुब्वस्य घः। इयादेशः। 'इदंकिमोरीश्की'। 'यस्येति च' इतीकारलोपे उदात्तनिवृत्तिस्वरेण 'किय॑त्' इत्याद्युदात्तम्[2]। यत्रेति[3] किम्? 'यम॑प्नवानो॒ भृग॑वः'। भृगोरपत्यानि भृगवः। 'ऋष्यन्धकवृष्णिकुरुभ्यश्च' इत्यण उदात्तस्य 'अत्रिभृगुकुत्स' इति बह्वर्थविवक्षायां प्रागेव सुबुत्पत्तेर्लुगिति जसो नोदात्तत्वम्। 'प्रथिम्रदिभ्रस्जां सम्प्रसारणं [4]सलोपश्च' इति कुप्रत्ययान्तोऽपि[5] भृगुशब्द आद्युदात्तः, व्यत्ययात्। उदात्तलोप इति किम्? 'क॒ल्पय॑न्तं॒ दैवी॒र्विशः'। 'देवाद्यञञौ' इत्यञन्तात् ञित्स्वरेण आद्युदात्ताद्दैवशब्दात् 'टिड्ढ' इति ङीपि अनुदात्तलोपः इति न ङीबुदात्तः। एवम् 'राज्ञा॒ सोमे॑न' इत्याद्यपि[6] व्यावर्त्यम्। राजन्-शब्दः 'कनिन्युवृषितक्षिराजि' इति कनिन्नन्त आद्युदात्तः॥

[7]अथ श्वन्शब्दात् कनिन्नन्तत्वेन आद्युदात्ताद्भसंज्ञानिमित्ते शसादौ प्रत्यये 'श्वयुवमघोनाम्' इति संप्रसारणे शु + अन् इति स्थिते 'संप्रसारणाच्च' इति पूर्वरूपं बाधित्वा परत्वात् 'अल्लोपोऽनः' इत्यकारलोपे उदात्त निवृत्तिस्वरः स्यात्। ततश्च 'शु॒नश्चतु॒रक्षस्य

1. तु क. ङ. नास्ति।
2. आद्युदात्तः घ.
3. इति घ. नास्ति।
4. -स क. नास्ति।
5. अपि घ. नास्ति।
6. इत्यत्रापि व्यावर्त्यः घ.
7. अथ घ. नास्ति।

प्रहन्ति' 'शुनाश्चित्सुवीरिणः' इत्यादौ विभक्त्युदात्तत्वप्रसङ्गः । न च 'न गोश्वन्साववर्ण[1]' इति निषेधात् 'शुनी' इत्यस्य अन्तोदात्तार्थं[2] गौरादिषु शुनीशब्दपाठाल्लिङ्गाद्वा नोदात्तनिवृत्तिस्वरः शुन्यवतरतीति वाच्यम् ; एवमपि 'शुनः' इत्यादौ आद्युदात्तत्वस्य दुर्लभत्वात् । अल्लोपे सति एकादेशस्वराभावात् । ततश्च सर्वानुदात्तं पदं स्यादिति ॥

अत्राहुः—'अल्लोपोऽनः' इत्यकारलोपस्य नात्र प्रसङ्गः ; 'असिद्धवदत्राभात्' इति संप्रसारणस्य असिद्धत्वेन 'न संयोगाद्वमन्तात्' इति निषेधात् । असिद्धवत्सूत्रप्रत्याख्यानेऽपि परादपि अल्लोपात् पूर्वमन्तरङ्गत्वात् संप्रसारणपूर्वरूपं भविष्यति । न च 'वार्णादाङ्गं बलीयः' इत्यल्लोपस्य प्राबल्यम् ; व्याश्रयत्वात् । अल्लोपस्य हि[3] विभक्तिर्निमित्तम् । पूर्वरूपस्य तु श्वन्शब्दाकारः । 'कारकः' इत्यादावेव समानाश्रयस्थले तत्परिभाषाप्रवृत्तेः । तस्मात् सम्प्रसारणपूर्वरूपे एकादेशस्वरेण 'शुनः' इत्यादेः सिद्धमाद्युदात्तत्वम् । अत्र 'द्वयं वा अस्मिन्' इत्यादौ 'द्वित्रिभ्यां तयस्यायज्वा' इत्ययचि तयप्स्थानिकत्वेन अनुदात्ते परतः[4] 'यस्येति च' इति द्विशब्देकारनिवृत्तावपि नोदात्तनिवृत्तिस्वरः । किं तु[5] अयचश्चित्त्वाच्चित्स्वरेण अन्तोदात्तत्वमेवेति ध्येयम् ॥

## [४४] ॥ चौ ॥ (6—1—122)

लुप्तनकाराकारेऽञ्चतौ परे पूर्वस्य अन्त उदात्तः । 'प्रतीचः प्रतियन्ति' । 'प्रतीचं एव' । 'अधराचश्च' । 'प्रतीची दिक्' । 'समीची नामासि' । 'प्र वः सत्राचा मनसा' । 'विश्वाची च घृताची च' । अञ्चेः सुप्युपपदे 'ऋत्विक्' इत्यादिना क्विनि, 'अनिदिताम्' इति नलोपे,

---

1. 'न गोश्वन्सौ' क.
2. अन्तोदात्तत्वार्थं घ.
3. हि घ. नास्ति ।
4. परे क.
5. किन्तु घ. नास्ति ।

'वेरपृक्तस्य'[1] इति क्विनो लोपे, 'उपपदमतिङ्' इति समासे च 'प्रत्यक्' इत्यादि रूपम्। तस्माद्भसंज्ञानिमित्ते सुपि 'उगितश्च' इति ङीपि च परतः कृदुत्तरपदप्रकृतिस्वरेण उदात्तस्य अञ्चत्यकारस्य 'अचः' इति सूत्रेण लोपे उदात्तनिवृत्तिस्वरः प्राप्त इति तदपवादोऽयम्। 'समीचः' इत्यादौ 'समः समि' इति सम्यादेशः। [2]सर्वत्र 'चौ' इति पूर्वपदस्य दीर्घः। यत्तु 'देवद्रीचीं नयथ' इति सिद्धान्तकौमुद्यामुदाहृतम्, तच्चिन्त्यम्; उदात्तनिवृत्तिस्वरापवादश्चुस्वर[3] इति हि सर्वसिद्धम्। न च इह उदात्तनिवृत्तिस्वरप्रसक्तिः[4]; 'अद्रिसध्र्योरन्तोदात्तवचनं कृत्स्वरनिवृत्त्यर्थम्' इति षाष्ठवार्त्तिकात् अत्र कृत्स्वराभावेन उदात्तनिवृत्त्यभावात्। अत एव हि 'यद्रियङ् वायुर्वाति' इत्यादौ न कृत्स्वरः॥

स्यादेतत्—'ये पराचः'. 'पराचीं वाचा' 'पराचोऽतिपादात्' "अवाचः' इत्यादौ कथमयं[5] चुस्वराभाव इति। उच्यते; 'अनिगन्तोऽञ्चतावप्रत्यये' 'न्यधी च' इति यदिदमनिगन्तस्य गतेर्न्यध्योश्च अञ्चतावप्रत्ययान्ते परे[6] प्रकृतिस्वरविधायकं योगद्वयम्, तद्विषये चुस्वरो वार्त्तिककृता प्रतिषिद्धः। तेन नात्र चुस्वरः, किं तु [7]उत्तरसूत्राभ्यां पूर्वपदप्रकृतिस्वर एव। 'नीचा' 'अधीचा' इत्यादि 'न्यधी च' इति सूत्रोदाहरणम्। यत्तु स्वरमञ्जर्यां तद्विवरेण च—'पराचः' इत्यादौ चुस्वरात् परत्वादनिगन्तप्रकृतिस्वर इत्युक्तम्, तच्चिन्त्यम्; भसंज्ञामपेक्ष्य प्रवर्तमानस्य चुस्वरस्य तन्निरपेक्षप्रवृत्तिमदनिगन्तस्वरापेक्षया सतिशिष्टत्वेन प्रबलत्वात्। पराद्यपेक्षया सतिशिष्टप्राबल्यस्य उक्तत्वात्। अत एव अनिगन्तसूत्रे वार्त्तिककृतः 'चोरनिगन्तोऽञ्चतावप्रत्यये' इति वार्त्तिकेन चुस्वरापेक्षया अनिगन्तस्वरः परत्वाद्भवतीत्युक्त्वा 'न वा चुस्वरस्य पूर्वपदप्रकृतिस्वर-

---

1. वेरपृक्तलोपे घ.
2. तस्य घ.
3. -स्वरापवादश्च स्वरः घ.
4. -स्वरप्रसक्तिः ङ. नास्ति।
5. अयम् घ. नास्ति।
6. परतः क.
7. उदात्त (उदाहृत) सूत्राभ्यां घ.

भाविनि प्रतिषेधात्[1], इतरथा हि सर्वापवादप्रसङ्गः' इति वार्त्तिकान्तरेण अत्र चुस्वराभावाय वचनमेव[2] आश्रितवन्तः । न चैष विप्रतिषेधेनापि सिध्यति; किंतु उक्तनिषेधादेव । अन्यथा चुस्वरस्य सर्वबाधकत्व-प्रसङ्गः ; सतिशिष्टत्वादित्याशयः । 'विषूची प्रहरति' 'विषूच एव' इत्यादौ न चुस्वरः, किं तु दासीभारादित्वात् पूर्वपदप्रकृतिस्वर इति स्वरमञ्जर्याम् । व्यत्ययादिति तु वेदभाष्ये ॥

अत्र वार्त्तिकम्—

## ॥ चोरतद्धित इति वक्तव्यम्[3] ॥

तद्धिते परतः[4] चुस्वरो नेति वक्तव्यमित्यर्थः । अन्यथा यथा 'प्रतीचः' इत्यादौ उदात्तनिवृत्तिस्वरमयं बाधते, एवं दधीचोऽयं 'दाधीचः' इत्यत्र प्रत्ययस्वरमपि बाधेत । [5]ननु च दध्यङ्शब्दात् षष्ठ्येकवचने ङसि तदानीमेव तदपेक्षया 'अचः' इत्यकारलोपे चुस्वरः प्रवृत्तः । ततः परं तद्धितो-त्पत्तौ प्रत्ययस्वर इति सतिशिष्टं कथमत्र प्रत्ययस्वरं चुस्वरो बाधेतेति चेत्—न ; 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधते लुङ्-निमित्तकश्च' इति प्रातिपदिकत्वसम्पादनद्वारा ङसो लुको निमित्तं तद्धितः अण्प्रत्ययः अन्तरङ्गमपि 'अचः' इति लोपं बाधित्वा पूर्वं भवति । ततः 'सुपो धातु[6]' इति ङसो लुकि तद्धितापेक्षयैव 'अचः' इति लोप इति चुस्वर एव अत्र सतिशिष्टत्वात् प्रत्ययस्वरं बाधित्वा स्यादिति वार्त्तिकमारब्धमिति कैयटादयः ॥

## [४५] ॥ अञ्चेश्छन्दस्यसर्वनामस्थानम् ॥ (6—1—170)

अञ्चेः परा असर्वनामस्थानविभक्तिरुदात्ता भवति छन्दसि । चुस्वरस्य अयमपवाद इत्याहुः । 'इन्द्रो दधीचो अस्थभिः'

1. भाविनिषेधात् घ.
2. एव घ. नास्ति ।
3. वाच्यम् घ.
4. परे घ.
5. ननु छन्दसि अङ्शब्दात् क.
6. धातुप्रातिपदिकयोः क.

'नीचा तं धक्षि' । 'दधीचः' इति षष्ठ्यन्तम् । पूर्ववत् अत्र प्रक्रियोह्या । 'नीचा न्यग्भूतं धक्षि, न्यक्शब्दाद्व्यत्ययेन तृतीया' इति 'वेदभाष्यम्[1] । यद्यपि 'समीचं [2]एव' इत्यादावपि चुस्वरापवादेन अनेन विभक्त्युदात्तत्वेन भवितव्यम्, तथापि व्यत्ययाच्चुस्वर एवेति वेदभाष्ये । 'अन्तोदात्तादुत्तरपदात्' इति पूर्वसूत्रात् अन्यतरस्याङ्-ग्रहणमनुवर्त्य व्यवस्थितविभाषाश्रयणात् इत्यपरे । 'तृतीयादिः' इत्यनुवृत्तौ असर्वनामस्थानग्रहणं शस्परिग्रहाय । न चैवम् 'शसादिः' इत्येवोच्यतामिति वाच्यम् ; नपुंसके शसि अतिप्रसङ्गात् तत्रैव सुटि [3]अव्याप्तिप्रसङ्गाच्च । असर्वनामस्थानग्रहणे तु न दोषः ; तत्र शसि 'जश्शसोः शिः[4]' 'शि सर्वनामस्थानम्' इति सर्वनामस्थानसंज्ञाविधानात्, 'सुडनपुंसकस्य' इति निषेधाच्च । इदं च अञ्चेरसर्वनामस्थानोदात्तत्वं नलोपविषय एव ; 'नाञ्चेः पूजायाम्' इति नलोपाभावविषये 'न गोश्वन्' इति सूत्रेण तन्निषेधादिति ध्येयम् ॥

## [४६] ॥ ञ्नित्यादिर्नित्यम् ॥ (6—1—197)

ञकारे[5] इकार उच्चारणार्थः ; 'सुट् तिथोः' इतिवत् । 'सौवर्यः सप्तम्यस्तदन्तसप्तम्यः' इत्युक्तम् । ञिदन्ते निदन्ते च नित्यमादिरुदात्तो भवति । 'औदुम्बरो यूपः' । उदुम्बरशब्दात् 'अनुदात्तादेश्च' इति विकारे अञ् । 'औद्दालकिः' । 'अत इञ्' । उद्दालकशब्दो बाह्वादिर्वा । 'द्विभाग इन्द्रस्तृतीये विष्णुः' । 'पुरणाद्भागे तीयादन्' इति अन्प्रत्ययान्तोऽत्र[6] तृतीयशब्दः । 'होताध्वर्युः' । तृन्नन्तो होतृशब्दः । प्रत्ययस्वरापवादो योगः ॥

---

1. वेद- क. नास्ति ।
2. एव घ. नास्ति ।
3. अतिव्याप्ति- घ. छ.
4. शिं प्रति घ.
5. ञकारे क. नास्ति ।
6. अत्र क. नास्ति ।

## [४७] ॥ संज्ञायामुपमानम् ॥ (6—1—204)

उपमानवाची शब्द आद्युदात्तो भवति संज्ञायाम् । चञ्चेव चञ्चा । 'इवे प्रतिकृतौ' इति कनो '[1]लुम्मनुष्ये' इति लुप् । तृणमयः पुरुषश्चञ्चा । 'रौद्रेणानीकेन' । 'अयस्स्थूणावुदितौ' । रौद्रगुण[2] इव क्रूरो रौद्रः । अयस्स्थूणसदृशौ अयस्स्थूणौ बाहू । संज्ञायामुत्पन्नस्य कनः 'देवपथादिभ्यश्च' इति लुबिति वेदभाष्ये ॥

ननु सर्वत्रात्र प्रत्ययलक्षणेन नित्दन्तत्वसम्भवात् पूर्वसूत्रेणैव स्वरसिद्धिः । न च 'न लुमताङ्गस्य' इति प्रत्ययलक्षणनिषेधः[3] ; 'अङ्गस्य' इत्यङ्गाधिकारप्रतिनिर्देशपक्षे तदभावात् । आङ्गमनाङ्गं वा वस्तुतो यत् अङ्गस्य कार्यं तत्प्रतिषेधपक्षेऽपि नित्प्रत्ययान्तस्यैवेदं कार्यम्, न त्वङ्गस्य, इति निषेधाप्रसङ्गात् । अत एव '[4]पञ्च' 'सप्त' इत्यादौ प्रत्ययलक्षणेन सुबन्तत्वमाश्रित्य पदसंज्ञाप्रवृत्तिः ; पदसंज्ञायाश्च [5]प्रत्ययान्तकार्यत्वादिति चेत्—सत्यम् ; 'अनङ्गकार्येऽपि स्वरविधौ प्रत्ययलक्षणं न भवति' इति ज्ञापनार्थं सूत्रम् । फलं च गर्गादियञि[6] विदाद्यञि च 'यञञोश्च' इति बहुषु लुकि 'गर्गाः' 'बिदाः' इत्यादौ प्रत्ययलक्षणेन ञित्स्वराभावः । 'इतश्चानिञः' इति ढकः 'अत्रिभृगु' इति लुकि[7] 'अत्रयः' इत्यत्र 'कितः' इत्यन्तोदात्तत्वाभावश्च । 'अदेस्त्रिनिश्च' इति चकारात् त्रिप्प्रत्ययान्त आद्युदात्तोऽप्यत्रिशब्दः । 'अत्रिरददात्' । इदं च ज्ञापकमनुबन्धाश्रयस्वरविषयम् । तेन 'सर्वस्तोमः' इत्यत्र सत्यपि सुब्लुकि 'सर्वस्य सुपि' इति स्वरः प्रत्ययलक्षणेन भवति । तथा[8] 'देवं बर्हिः शत-

---

1. 'लुङ्मनुष्ये' क.
2. -गणः घ. छ. ज.
3. -प्रतिषेधः घ.
4. पञ्च......भवतीति घ. नास्ति ।
5. सुप्प्रत्ययान्त- ख.
6. -यञो बिदाद्यञश्च घ.
7. 'यस्कादिभ्योगोत्रे' इति लुकि क. ख. ग. घ. च. छ. ज.
8. तथा घ. नास्ति ।

र्वल्शम्' इत्यत्र देवबर्हिश्शब्दे 'आमन्त्रितस्य च' इत्याद्युदात्तत्वं भवति। तथा दाञो लुङि[1] 'मा हि दाताम्' इत्यत्र 'गातिस्थाघुपाभूभ्यः[2]' इति सिचो लुकि 'आदिः सिचोऽन्यतरस्याम्' इति स्वरो भवति। एतेषामनुबन्धानाश्रयत्वात्। न चैवं पन्थाः प्रियो यस्य पथिप्रियो मथिप्रिय इत्यादौ 'पथिमथोः सर्वनामस्थाने' इत्याद्युदात्तत्वं[3] प्रत्ययलक्षणेन प्रसज्येत, अनुबन्धानाश्रयत्वादस्य[4] इति वाच्यम्; तन्निवृत्तये वचनस्यैव कर्तव्यत्वादिति [5]भाष्यकृतः। वृत्तौ तु—'क्वचित् [6]स्वरविधौ प्रत्ययलक्षणं न' इति ज्ञापनात् सर्वेष्टसिद्धिरित्युक्तम्॥

## [४८] ॥ सर्वस्य सुपि ॥ (6—1—191)

आदिरुदात्तः[7]। 'सर्वनिघृष्वरिष्वलष्वपट्[8]वशिवप्रह्वेष्वा अतन्त्रे' इति उणादौ वन्प्रत्ययान्तः सर्वशब्दो निपातितः। स च अत्रैव सूत्रे सर्वादिगणे वा अन्तोदात्तो निपात्यते, सर्वस्य विकारः सार्व इत्यत्र 'अनुदात्तादेश्च' इत्यञ् यथा स्यादिति। अतः पुनरिदमाद्युदात्तत्वविधानम्। 'सर्वस्याप्त्यै'। 'सर्वस्मै'। 'सर्वस्तोमः' इत्यादौ प्रत्ययलक्षणेनाप्ययं स्वर इत्युक्तम्। न चात्र समासान्तोदात्तेन बाधः; 'बहुव्रीहौ प्रकृत्या' इति पूर्वपदप्रकृतिस्वरस्यैव अभ्यनुज्ञानात्[9]। 'सर्वायुः', 'सर्वतनुं पुनामि' इत्यादौ व्यत्ययात्

---

1. 'सिचो लुकि' घ.
2. -भूभ्यः घ. नास्ति।
3. इत्युदात्तप्रत्यय- घ.
4. अस्य घ. नास्ति।
5. वार्त्तिककृतः क.
6. स्वरविधौ क. नास्ति।
7. आद्युदात्तः क.
8. -शिव- क. नास्ति। -पट्व- ख.
9. कर्तव्यत्वादित्यभ्यनुज्ञानात ख.

पूर्वपदान्तोदात्तत्वम् । 'सर्वायुः[1] सर्वतनुम्' इत्यादौ असुपि 'प्रकृतिस्वरः—इति वदन् स्वरमञ्जरीकारस्तूपेक्ष्यः ; प्रत्ययलक्षणेन सुप्परत्वात् । सुपि किम् ? 'सर्वतरः' 'सर्वतमः' इति वृत्तौ । इदं च प्रत्युदाहरणं प्रातिपदिकाद्[2] [3]तद्धितोत्पत्त्याश्रयणेनेति बोध्यम् । 'घकालतनेषु' इति सप्तम्यलुग्विधानाल्लिङ्गात् सुबन्तादेव तरबादि-तद्धितोत्पत्तिरिति पक्षे 'सर्वस्तोमः' इत्यादाविव प्रत्ययलक्षणेन अत्रापि[4] सुप्परत्वात् कथमिदं प्रत्युदाहरणमिति चिन्त्यम् ॥

## (वा) ॥ सर्वस्वरो नाकच्कस्येति वक्तव्यम् ॥

सर्वकः । तन्मध्यपतितस्य तद्ग्रहणेन ग्रहणात् आद्युदात्तत्वप्राप्तौ वचनम् ॥

## [४९] ॥ कर्षात्वतो घञोऽन्त उदात्तः ॥ (6–1–159)

कर्षेति शबन्तस्य अनुकरणम्, न घञन्तस्य । आत्— आकारोऽस्यास्तीति आत्वान् । 'तसौ मत्वर्थे' इति भत्वाज्जश्त्वं न । ततः समाहारद्वन्द्वः । कृष विलेखने इति शविकरणात् आकारवतश्च [5]धातोर्यो घञ् तदन्तस्य अन्त उदात्तः । ञित्स्वरापवादः । 'कर्षः' । 'एष ते रुद्र भागः' । 'मनुः पुत्रेभ्यो दायं व्यभजत्' । 'कृषात्वतः' इति वक्तव्ये शबन्तानुकरणं तुदादेः कृषतेर्घञि 'कर्षः'

---

1. 'सर्वस्तोमः' इत्यादौ प्रत्ययलक्षणेन पूर्वपदप्रकृतिस्वर इत्युक्त्वा सर्वायुः....स्वरमञ्जरी-कारस्तु पूर्वापरविरुद्धभाषित्वा-दुपेक्ष्यः छ.
2. प्राकृत- ङ.
3. तद्धिताश्रयणेनेति घ.
4. सुपि सुबन्तत्वादन्त उदात्तः ॥ छ.
5. धातोः घ. नास्ति ।

इत्यस्य आद्युदात्तार्थम् । आत्वत इति किम् ? 'मोदः प्रमोदः' । मतुनिर्देशाभावे आकारान्ताद्धातोर्यो[1] घञित्यर्थः स्यात् । ततश्च 'भागः' इत्यादौ न स्यात्, 'दायः' इत्यादावेव तु स्यात् ; दायः आकारान्तत्वात् । न च 'परत्वान्नित्यत्वाच्च[2] 'आतो युक् चिण्कृतोः' इति युकि [3]कृते अत्रापि न आकारान्ततेति वाच्यम् ; एवमपि विहितविशेषणाश्रयणेन आकारान्ताद्विहितत्वात् 'दायः' इत्यादावेव स्यात् । तस्माद्भागादावपि यथा स्यादिति मतुब्निर्देशः—इति प्राञ्चः । अन्ये तु—स्वरविधौ व्यञ्जनस्य अविद्यमानवद्भावादाकारान्तात् परस्य घञ इत्याश्रयणे 'भागः' 'दायः' इत्यादौ सर्वत्र सिद्धमिष्टम् । तस्मादस्याः परिभाषाया अनित्यत्वज्ञापनार्थोऽयं मतुब्निर्देशः । तेन 'मरुत्वान्' इत्यत्र 'ह्रस्वनुड्भ्याम्' इति न मतुबुदात्तत्वम् । अत एव 'स्वरविधौ व्यञ्जनस्य अविद्यमानवत्त्वमनित्यम्' इति 'अमे चावर्णम्' इति सूत्रे हरदत्त इत्याहुः । अन्ये तु—विभावयिषतेर्घञि 'विभावयिषः' इत्यादौ अन्तोदात्तार्थं मतुब्निर्देश इति नेदमुक्तपरिभाषानित्यत्वे लिङ्गमित्याहुः । अन्तग्रहणफलं तु 'स्वरविधौ सङ्घातः कार्यी' इत्यत्रैव दर्शितम् । 'कामो दाता' 'द्यौः पादः' इत्यादौ कामादिशब्दानां घञन्तत्वेऽपि नानेन अन्तोदात्तत्वम्, वृषादिषु पाठात् । एतेन 'भागः' इत्यादौ अयं स्वरो न स्यात्, 'अत उपधायाः' इति लक्षणनिर्वृत्तत्वादाकारवत्त्वस्य । 'दायः' इत्यत्रैव स्यादिति निरस्तम् ; वृषादिषु कामादिश[4]ब्दपाठाल्लिङ्गात् लक्षणप्रतिपदोक्तपरिभाषाया अत्र अप्रवृत्तेरिति ॥

## [५०] ॥ त्यागरागहासकुहश्व[5]थक्रथानाम् ॥ (6—1—216)

एषामादिरुदात्तो वा[6] भवति । अत्र आद्यास्त्रयो घञन्ताः । तत्र पूर्वसूत्रेण नित्यमन्तोदात्तत्वं प्राप्तम् । इतरे पचाद्यजन्ताः ।

---

1. यः ङ. नास्ति
2. परत्वात् घ. नास्ति ।
3. कृते घ. नास्ति ।
4. -शब्द- घ. नास्ति ।
5. -श्वठ- घ.
6. वा घ. नास्ति ।

अत्रापि प्रत्ययस्वरेण तथैव प्राप्तम् त्यजिरञ्ज्योर्घञि 'चजोः कुघिण्ण्यतोः' इति कुत्वम् । 'घञि च भावकरणयोः' इति रञ्जेर्नलोपः । 'अत उपधायाः' इति वृद्धिः । 'त्यागः' 'रागः' । 'स्वनहसोर्वा' इत्यबभावे घञ् । 'हासः' । कुह विस्मापने । [1]श्वथ सम्यगवभाषणे । क्रथ हिंसायाम् । चौरादिकाः । अचि 'कुहः' '[2]श्वथः' 'क्रथः' ॥

## [५१] ॥ उञ्छादीनां च ॥ (6—1—160)

एषामन्त उदात्तः । 'उञ्छः' 'म्लेच्छः' 'जञ्जः' 'कल्पः[3]' । घञन्ता एते । जञ्ज इत्यत्र 'चजोः' इति कुत्वं निपातनान्न भवति । 'व्यधः' 'जपः' 'वधः' । अबन्ता एते । अतः पित्त्वात् अनुदात्तत्वप्राप्तौ पाठः । 'व्यधजपोरनुपसर्गे[4]' 'हनश्च वधः' इत्यप्[5] । 'सत्यं ब्रवीमि वध इत्स तस्य' । 'वधाय दत्तं तमहम्' । युगशब्दोऽत्र पठ्यते । तत्र 'युनक्तेर्घञि यानाद्यङ्गे कृतद्वापरादौ च वाच्ये गुणाभावो निपात्यते । अन्यत्र योग इत्येव' इति वृत्तिकारः । 'योक्त्रं गृध्राभिर्युगमानतेन' । 'शं युगस्य [6]तृद्म' अन्यत्र आद्युदात्तमेव । 'योगेयोगे तवस्तरम्' । 'एष वा अग्नेर्योगः' ॥

अथाष्टौ[7] गणसूत्राणि—

गरो दूष्ये । दूष्यं विषम् । अत्र अभिधेये गरशब्दान्त उदात्तः । गॄ निगरणे । 'ॠदोरप्' । अन्यत्र धातुस्वरेण आद्युदात्त एव । 'नैनं गरो हिनस्ति' इत्यत्र गरशब्दे 'विभाषा छन्दसि' इत्यैकश्रुत्यम् ॥

---

1. श्वठ घ.
2. श्वठः घ.
3. जल्पः घ. ज.
4. अनुपसर्ग इति घ.
5. इति चाप् घ.
6. त्रद्मन क. ख. ग. घ. च. ज.
7. अष्टौ घ.

वेगवेदवेष्टचेष्टबन्धाः करणे । एते 'हलश्च' इति करणे घञन्ता अन्तोदात्ताः । विन्दाते विदन्ति वा अनेनेति वेदो दर्भमुष्टिविशेषो यागोपकरणम् । तस्य ह्युभयविधं करणत्वं श्रुतौ दर्शितम्—'वेदेन वै देवा असुराणां वित्तं वेद्यमविन्दन्त तद्वेदस्य वेदत्वम्' इति । 'वेदेन वेदिं विविदुः पृथिवीम्' इति च । 'वेदोऽसि वित्तिरसि'। 'यद्वेदः'। भावे घञन्तस्तु वेदशब्द आद्युदात्तः । आम्नायपर्यायो यो वेदशब्दः सोऽप्याद्युदात्त एव ; वृषादिषु 'वेद'[1] इति पाठात् । स च कर्तरि व्युत्पन्नः । वेदयतीति वेदः । तथा च प्रयोगः—'वेदा वा एते । अनन्ता वै वेदाः' । यत्तु 'त्रिः स्वाध्यायं वेदमधीयीत', 'वेदं विद्वांसम्' इत्यादौ आम्नायपर्यायस्यपि अन्तोदात्तत्वश्रवणं[2] तद्व्यत्ययात्[3] । करणसाधनो वायं वेदशब्दः ; आम्नायस्यैव वेदनकरणत्वेन[4] विवक्षितत्वात्[5] । ओ विजी भयचलनयोः । वेष्ट वेष्टने । आभ्यां घञि 'वेगः' । 'वेष्टः' । बन्ध संयमने । 'बन्धः' । 'यथा बन्धान्मुमुचानाः' । 'बन्धान्मुञ्चासि बद्धकम्' । 'बन्धात् [6]तृणात्मकात् बद्धकं मुञ्चासि' इति वेदभाष्यम् ॥

स्तुयुद्रुवां छन्दसि । यद्यपि केवलेभ्यः सोपपदेभ्यश्च क्विपि धातुस्वरेण कृत्स्वरेण च अन्तोदात्तत्वं सिद्धम्, तथापि केवलानां क्विबन्तानां प्रादिसमासे स्तौत्यादिकं प्रति गतित्वाभावात् कृत्स्वराभावे अव्ययपूर्वपदप्रकृतिस्वरः प्रसज्येतेति वचनम् । ष्टुञ् स्तुतौ । परिगता स्तुत् 'परिष्टुत्' । 'संपदादिक्विबन्तेन प्रादिसमासे 'पूर्वपदात्' इति षत्वम् इति हरदत्तः । अत्र हि 'यत्क्रियायुक्ताः प्रादयः' इति न्यायात् स्तौतिं प्रति न परेर्गतिसंज्ञा, किं तु [7]गतिं

1. 'वेदशब्द' घ.
2. अन्तोदात्तश्रुतिः ख.
3. सा व्यत्ययात् ख.
4. -साधनत्वेन ख.
5. विवक्षणात् ख.
6. ऋणात्मकात् ज.
7. गमिं घ.

'प्रति । एवमुत्तरत्रापि । यु मिश्रणे अमिश्रणे च । द्रु गतौ । 'संयुत्'[1] । 'परिद्रुत्' ॥

वर्तनिः स्तोत्रे । स्तोत्रं साम । तत्र वर्तनिशब्दोऽन्तोदात्तः । साम्नोऽन्यत्र मध्योदात्तः ; वृतेरनिप्रत्यये तस्य व्युत्पत्तेरित्याहुः । 'गायत्रस्य वर्तन्या' । 'प्रजापतेर्वर्तनिम्' इत्यादौ वेदभाष्ये मार्गार्थको वर्तनिशब्दो व्याख्यातः । अथाप्यन्तोदात्तत्वं दृश्यते ॥

श्वभ्रे दरः । दॄ विदारणे । 'ऋदोरप्' । 'दरः' । श्वभ्रादन्यत्र धातुस्वरेण अयमाद्युदात्तः ॥

साम्बतापौ भावगर्हायाम् । अन्तोदात्तौ । 'साम्बो भिक्षते' । अम्बया सह भिक्षणं गर्हितम् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरापवादः । 'तापो दस्यूनां धार्मिकेषु' । दस्युकर्तृकस्तापो गर्हितः । 'कर्षात्वतः' इति सिद्धे तापग्रहणं भावगर्हायामेवेति नियमार्थमित्याहुः । तेन अन्यत्र अयमाद्युदात्तः ॥

उत्तमशश्वत्तमौ सर्वत्र । अन्तोदात्तौ । 'सर्वत्र भावगर्हायामन्यत्र च । छन्दसि भाषायां च इत्यन्ये' इति हरदत्तः । तमबन्तावेतौ । अत्र[2] तमपः पित्त्वात् अनुदात्तत्वं प्राप्तम् । द्रव्यप्रकर्षात् 'किमे-त्तिङव्यय' इत्यामभावः । 'अहं भूयासमुत्तमः' । 'समानानामुत्तमश्लोको अस्तु' । 'गोः शश्वत्तमम्' ॥

भक्षमन्थभोगदेहाः । अन्तोदात्ताः । भक्ष अदने । चुरादिः । ततो घञि "यद्यपि णिजन्तत्वे 'एरच्' इति घञपवादेन अचा भवितव्यम्, तत्र च 'चितः' इत्येव सिद्धमन्तोदात्तत्वम्, तथापि 'एरजण्यन्तानाम्' इति वचनात् तदभावे घञेव अत्र" इति वृत्तौ ।

---

1. संयुक् ष. 2. तत्र ष.

'कर्मण्यण्' इत्यत्र 'भक्षयतेः कर्माणि एरच्' इति भाष्यमुपादाय 'एरजण्यन्तानाम्' इत्येतत्तु मुनित्रयस्य मते[1] नास्ति, 'कल्यादिभ्यः प्रतिषेधः' इत्येवास्ति—इति कैयटः। तन्मतेऽत्र भक्षग्रहणस्य चिन्त्यं फलम् ; एरजन्ततया इष्टसिद्धेः। 'अनित्यण्यन्ताश्चुरादयः' इति भक्षयतेर्घञ्विषये णिजभावे असत्येरचि घञि अन्तोदात्तार्थं तन्मतेऽप्यत्र भक्षग्रहणम्—इत्यन्ये। 'भक्षोऽस्यमृतभक्षः'। 'गावः सोमस्य प्रथमस्य भक्षः'। मन्थ विलोडने। घञ्। 'मन्थानेताब्रतो दध्यादोदनान् वा'। 'अभिवान्यायै दुग्धे मन्थम्'। भुजो कौटिल्ये। 'भोगः'। श्रुतौ तु 'छागोऽसि मम भोगाय भव' इत्यादौ भोगशब्द आद्युदात्तः पठ्यते। 'षोडशभिर्भोगैरसिनात्', 'वृत्रस्य भोगानप्यदहत्' इत्यादौ अन्तोदात्तः। व्यत्यय एवात्रेति केचित्। 'भुजो कौटिल्ये' इति धातोरेव अत्र मञ्जर्यां प्रदर्शनात् तत एव भोगशब्दोऽन्तोदात्तः। भुनक्तेस्तु आद्युदात्त इत्येव अत्र[3] शरणम्। 'भोगैः वृत्रस्य शरीरैकदेशैः' इति वेदभाष्यम्। दिह उपचये। 'देहः'। केचिदत्र शेषरेखलेखानपि पठन्ति। वृत्त्यादौ [4]तु नैव दृश्यते॥

## [५२] ॥ चतुरः शसि ॥ (6—1—167)

अनुकरणत्वेन अर्थपरत्वाभावात् 'चतुरः' इत्येकवचनम्। 'सौवर्यः सप्तम्यः' इत्येतत् अत्र नेत्युक्तम्। चतुर्शब्दस्य अन्त उदात्तः शसि परतः। 'चतेरुरन्' इति नित्प्रत्ययान्तत्वेन आद्युदात्तत्वं प्राप्तम्। 'चतुरो मासो दीक्षितः स्यात्'। 'चतुरो वा एतम्'। 'चतुरः पदः प्रतिदधत्'। शसीति किम्? 'चतुष्टय्य आपः'। 'संख्याया अवयवे तयप्'

---

1. मुनित्रयमते घ.
2. घञ् घ. नास्ति।
3. व्याख्यातमेवात्र ङ.
4. तु घ. नास्ति।

इति तयपः, ततः 'टिड्ढ' इति ङीपश्च पित्त्वेन अनुदात्तत्वात् अत्र चतुर्शब्दो निःस्वर एव । 'च॒त्वार॑ ऋ॒त्विजः' इति तु न प्रत्युदाहरणम् ; 'चतुरनडुहोरामुदात्तः' इत्यन्तोदात्तत्वस्यैव अत्र श्रवणात् । 'चत॑स्रो धे॒नूर्द॑द्यात्' इत्यत्र चतस्रादेशे स्थानिवद्भावेन अयं स्वरः स्यात् इति चेत्—कस्य स्यात् ? न तावत् अन्त्यस्य [1]ऋकारस्य ; परत्वात् 'अचि र ऋतः' इति रादेशेन तस्य अपहारात् । नापि तकाराकारस्य ; रादेशस्य पूर्वविधौ स्थानिवद्भावेन अचा व्यवधानात् शस्परत्वाभावात् । न च स्वरविधौ स्थानिवद्भावनिषेधः ; 'स्वरदीर्घयलोपेषु लोपाजादेश एव न स्थानिवत्' इति वचनादिति । एवं च उक्तदोषपरिहाराय 'त्रिचतुरोः स्त्रियाम्' इत्यत्र चतसर्याद्युदात्तनिपातनं नाश्रयणीयम् ; तेन विनापि दोषस्य परिहृतत्वादिति दिक् । यत्तु स्वरमञ्जर्याम्—'चत॑स्रो धे॒नूः' इत्यत्र 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' इति परिभाषया 'चतुरः शसि' इति स्वरप्रसङ्ग इत्याक्षिप्तम्, तत्र उक्तपरिभाषायाः कथं[2] प्रसङ्ग इति न विद्मः । इयं हि[3] परिभाषा वृत्त्यादौ इत्थं व्याख्याता —लिङ्गशब्देन लिङ्गाभिव्यक्तिहेतवष्टाबादयो गृह्यन्ते ; अभिधाने अभिधेयोपचारात् । तेन यत्र प्रातिपदिकं गृह्यते तत्र टाब्ङीबाद्यन्तस्यापि ग्रहणम् । तेन 'लोहितादिडाज्भ्यः' इति क्यष् लोहितशब्दादिव[4] लोहिनीशब्दादपि भवतीति । एवं सति चतुर्शब्दग्रहणे कथमुक्तपरिभाषया चतसृशब्दग्रहणम् ? न हि चतसृशब्दः टाबादिविशिष्टः । चतुर्शब्दे कथञ्चित् उक्तपरिभाषायाः प्रवृत्तिसंभवेऽपि 'विभक्तौ लिङ्गविशिष्टाग्रहणम्' इति निषेधो दुर्वारः । अत एव कैयटादिभिः स्थानिवद्भावेनैव चतसृशब्दे स्वरोऽयमाशङ्कित इति ॥

---

1. अकारस्य क.
2. कथमत्र घ.
3. हि घ. ङ. ज. नास्ति ।
4. -शब्दवत् घ.

## [५३] ॥ विभाषा वेण्विन्धानयोः ॥ (6—1—215)

अनयोरादिरुदात्तो वा स्यात् । 'वेणुर्वैणर्वा' । 'यद्वेणुः' । 'इन्धानास्त्वा शतं हिमाः' । 'वयं त्वेन्धानाः' । वेणुशब्दस्य नित्यमाद्युदात्तत्वं प्राप्तम् । स हि उणादौ 'स्थोणुः' इति वर्तमाने 'अजिवृरीभ्यो[1] नित्' इति णुप्रत्ययान्ततया व्युत्पादितः । इन्धानशब्दे तु [2]अप्राप्तमाद्युदात्तत्वं विधीयते । स हि ञि इन्धी दीप्तौ इत्यस्मात्ताच्छील्यादौ चानशि लटः शानचि वा निष्पन्नः । आद्ये चित्स्वरेण अन्तोदात्तः । इतरत्र शानचो लसार्वधातुकस्य अनुदात्तत्वे 'श्नसोरल्लोपः' इत्युदात्तस्य श्नमकारस्य लोपे उदात्तनिवृत्तिस्वरेण मध्योदात्तः प्राप्तः । वेणुरिव वेणुः । इवार्थकनः 'लुम्मनुष्ये' इति लुप् । अत्र पूर्वविप्रतिषेधात् 'संज्ञायामुपमानम्' इति नित्यमाद्युदात्तत्वम्, न त्वयं विकल्प इति आकरे । 'ऋत्विग्दधृक्' इति क्विन्विधौ दधृक्शब्दः अन्तोदात्तो निपात्यते नित्स्वरबाधाय[3] इति आकरे ॥

## [५४] ॥ मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः ॥ (3—3—96)

एते धातवः क्तिनमुत्पादयन्ति, क्तिन्नन्ताश्च ते अन्तोदात्ताः स्युः । क्तिनो नित्त्वात् उदात्तत्वे सिद्धे पुनरुदात्तविधिरन्तोदात्तार्थो विज्ञायते । 'स्त्रियां क्तिन्' इति क्तिनि सिद्धे अन्तोदात्तार्थ एवायमारम्भः । इषेस्तु इच्छेति निपातनात् अप्राप्तः क्तिन्नपि विधीयत इत्याहुः । वृषु सेचने । इषु इच्छायाम् । वृषुसाहचर्यात् उदितो ग्रहणम् । सूत्रे

1. -वृङ्भ्यां घ.
2. अप्राप्तम् घ. नास्ति ।
3. -बाधकत्वेन छ.

अकारो न विवक्षितः । मन ज्ञाने । मन अवबोधने । द्वयोर्ग्रहणम् । विदादीनामपि यथादर्शनं ग्रहणमिति हरदत्त । 'यूयं वृष्टिं वर्षयथ' । 'सृजा वृष्टिं दिवः' । मन्त्रग्रहणात् ब्राह्मणे आद्युदात्तमेव । 'वृष्टिमेवावरुन्धे' । यत्तु मन्त्रेऽपि 'वृष्टिं ये विश्वे मरुतो जुनन्ति', 'ततो नो वृष्टिमेरय' इत्यादौ आदेरुदात्तत्वदर्शनम्, तद्व्यत्ययात् । इष[1] । 'विश्वेदस्मै सुदिना सासदिष्टिः' । 'तदिष्टीनामिष्टित्वम्' इत्यादौ ब्राह्मणत्वान्नायं स्वरः । यजेर्वा इदं रूपम् । डु पचष् पाके । 'पचन् पक्तीः' । [2]'सत्यवाचे भरे मतिम्' । 'त्वया मत्या मरुतः सम्मिमिक्षुः' । 'मतिः कवीनाम्' इत्यत्र व्यत्ययः । 'मतिर्ह्येष कवीनाम्' इति ब्राह्मणम् । विद । 'वित्तिः' । 'वेदोऽसि वित्तिरसि', 'वित्तं च मे वित्तिश्च मे' इत्यत्र व्यत्ययः । भू सत्तायाम् । 'भूतिर्दध्ना' । 'आभूतिं भूतिम्' इत्यत्र व्यत्ययः । 'भूतिमेवोपैति' इत्यादि[3] तु न मन्त्रः । वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु । 'वीतयं ऋतँ सत्यम्' । 'अग्न आयाहि वीतये' । रा दाने[4] । 'स नो हविः प्रतिगृभ्णातु रातये' । 'रातिं भृगूणाम्' । वृषादिभ्यः [5]क्तिच्प्रत्यये विधातव्ये उदात्तवचनमुत्तरार्थम् । व्रजयजोर्भावे क्यप् उदात्तो यथा स्यात् । 'प्रमतिम्' इत्यादौ 'तादौ च निति' इति पूर्वपदप्रकृतिस्वरार्थं च । "पिबतेरपि मन्त्रे क्तिन्नुदात्तो दृश्यते 'त्वं सुतस्य पीतये' इत्यादौ" इति हरदत्तः । लोके तु एषामाद्युदात्तत्वैव । 'तितुत्र' इति वृषादेः क्तिन इडभावः ॥

---

1. इषेः घ. ङ.
2. मनः । स- ङ.
3. इत्यत्र घ.
4. इदं घ. नास्ति ।
5. क्तिचि विधातव्ये घ.

## [५५] ॥ ऊतियूतिजूतिसातिहेतिकीर्तयश्च ॥
(3—3—97)

'मन्त्रे' इति[1] नानुवर्तते । एते क्तिन्नन्ता अन्तोदात्ताः । अवतेः क्तिनि 'ज्वरत्वरस्रिव्यविमवामुपधायाश्च' इति अन्त्यस्य उपधायाश्च ऊठ् । 'ऊतयः सन्ति दाशुषे' । 'विष्णुं देवं वरुणमूतये भगम्' । यु मिश्रणे । जुः सौत्रः । अनयोः क्तिनि दीर्घो निपात्यते । 'यूतिः' 'जूतिः' । 'सातिः' इति[2] स्यतेः सनेर्वा निपातनम् । आद्ये 'द्यतिस्यति' इति इत्वाभावो निपातनात् । द्वितीये 'जनसनखनाम्' इत्यात्वम् । हन्तेर्हिनोतेर्वा 'हेतिः' इति निपातनम् । 'हेती रुद्रस्य' 'रुद्रस्य हेतिः' । 'कीर्तिरस्य पूर्वागच्छति' । कीर्तयतेः कीर्तिः । 'ण्यासश्रन्थ' इति युजपवादः क्तिन्निपात्यते । कालापास्तु युचमपीच्छन्ति कीर्तनेति हरदत्तः । 'हृपिषिरुहिवृतिविदिच्छिदिकीर्तिभ्यश्च' इत्युणादिसूत्रेण इन्नन्तोऽपि कीर्तिशब्दः । स त्वाद्युदात्तः । यत्तु—उदात्तनिवृत्तिस्वरेण सोऽपि[3] अन्तोदात्त इति स्वरमञ्जर्याम्, तच्चिन्त्यम् ; 'अच इः' इति इप्रत्ययेन सिद्धे इन्विधेर्नित्स्वरार्थत्वादिति ॥

## [५६] ॥ मनोरौ वा ॥ (4—1—38)

'ऐ च' 'उदात्तः' इति चानुवर्तते । मनुशब्दात् स्त्रियां ङीप्प्रत्ययो भवति औकारश्चान्तादेशः, स च आन्तर्यादनुदात्त इति कौस्तुभे । ऐकारश्चोदात्तः । वाग्रहणात् द्वावपि विकल्प्येते । तेन त्रैरूप्यं सिद्धम् । मनोः स्त्री मनायी, मनावी, मनुः । मनुशब्द

---

1. इति तु घ.
2. सातिस्तु स्यतेः घ.
3. सोऽपि घ. नास्ति ।

आद्युदात्तो नित्स्वरेण । उणादौ 'धान्ये नित्' इत्यधिकारे 'शृस्वृस्निहि' इति सूत्रेण[1] मनेरुप्रत्यये तद्व्युत्पत्तेः । अतो नित्स्वरबाधनार्थमिदमुदात्तत्वम्[2] ॥

## [ ५७ ] ॥ अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः ॥ (7—1—75)

एषामनङादेशः स्यात् तृतीयादावजादौ विभक्तौ, स चोदात्तः । ङित्त्वादन्तादेशः । 'असिसञ्जिभ्यां क्थिन्' इति क्थिन्प्रत्ययान्तौ अस्थिसक्थिशब्दौ । 'आदृगमहनजनः किकिनौ लिट् च' इति धाञः किन्प्रत्यये दधिशब्दः । [3]लिड्वद्भावाद्द्विर्वचनम् । कित्त्वात् 'आतो लोप इटि च' इत्यातो लोपः । 'अशेर्नित्' इति क्सिप्रत्ययान्तः अक्षिशब्दः । तदेतेषां नित्स्वरेण आद्युदात्तत्वे प्राप्ते अन्तोदात्तार्थोऽयमनङुदात्तविधिः । [4]प्रयुज्यन्ते च ते आद्युदात्ताः । 'अस्थ्येव तद्वेतसि दधाति' । 'अश्वस्य सक्थ्यावृहत्' । 'प्रजापतेरक्ष्यश्वयत्' । 'ऐन्द्रं दधि' इत्यादौ । 'दधँश्चरुम्' । 'यथाक्षन्नापन्नम्' । दध्यक्षिशब्दाभ्यां सप्तम्येकवचनम् । 'सुपां सुलुक्' इति तस्य लुक् । 'विभाषा ङिश्योः' इति 'अल्लोपोऽनः' इत्यस्य विकल्पात् अल्लोपाभावः । 'न ङिसंबुद्ध्योः' इति नलोपनिषेधः । 'अस्थ्नस्थ्ना' । 'दध्नातनक्ति' इत्यादौ अल्लोपे उदात्तनिवृत्तिस्वरेण विभक्तिरुदात्ता ॥

## [ ५८ ] ॥ छन्दस्यपि दृश्यते ॥ (7—1—76)

अस्थ्यादीनामनङादेश उदात्तः । दृशिग्रहणं सर्वोपाधिव्यभिचारार्थम् । तेन अनजादावपि विभक्तौ भवति ।

---

1. सूत्रेण घ. नास्ति ।
2. उदात्तवचनम् घ. छ. ज.
3. लिट् चेति लिड्वत्त्वेन द्वित्वम् घ.
4. प्रसज्यन्ते घ.

'इन्द्रो दधीचो अस्थभिः' । 'अस्थभ्यः स्वाहा' । अजादावपि क्वचिन्न भवति । 'यदक्ष्योः' । अतृतीयादावपि । 'अस्थानि शातया इति स यान्यस्थानि' । मतुप्यपि भवति । 'अस्थन्वते स्वाहा' । 'अक्षण्वते' । अत्र अनङ उदात्तत्वात् अन्तोदात्ताधिकारस्थम् 'ह्रस्वनुड्भ्याम्' इति मतुबुदात्तत्वं भवति । आद्युदात्तत्वे हि 'ब्रह्मण्वन्तः' इत्यादाविव तन्न स्यात् ॥

## [५९] ॥ ई च द्विवचने ॥ (7—1—77)

अस्थ्यादीनामीकारादेशो भवति छन्दसि द्विवचने परतः, स चोदात्तः । 'अक्षीभ्यां स्वाहा' । 'अक्षीभ्यां ते नासिकाभ्याम्' । 'द्वे सक्थ्यौ द्वौ बाहू' । सक्थिशब्दादौकारप्रत्यये ईकारेण 'इकोऽचि विभक्तौ' इति नुम् परत्वाद्बाध्यते । 'नपुंसकाच्च' इत्यौङः शीभावाभावो व्यत्ययात् । 'वा छन्दसि' इति पूर्वसवर्णदीर्घाभावे यणादेशः । 'उदात्तस्वरितयोः' इति औकारस्य स्वरितत्वम् ॥

॥ इति ञ्नित्स्वरप्रकरणम् ॥

---

## ॥ अथ चित्स्वरप्रकरणम् ॥

### [६०] ॥ चितः ॥ (6—1—163)

चकारः इत् यस्य तस्य अन्त उदात्तः । 'ई॒श्व॒रो वा ए॒षः' । 'स्था॒व॒रा गृ॑ह्णाति' । 'स्थेशभासपिसकसो वरच्' इति वरच्प्रत्ययान्तौ ईश्वरस्थावरशब्दौ । '[1]कुण्डिनाः' । कुण्डशब्दान्मत्वर्थीय इनिः । ततो नान्तत्वात् ङीपि मध्योदात्तः कुण्डिनीशब्दः । कुण्डिन्या अपत्यानि बहूनि कुण्डिनाः । गर्गादियञः 'आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच्' इति लुक्, प्रकृतेश्च कुण्डिनजादेशः । स च स्थानिवद्भावान्मध्योदात्तः प्राप्तः । 'च॒तुः संप॑द्यते' 'च॒तु॒र्भ्र्वाया॑म्' इत्यादौ चतुरशब्दः 'द्वित्रिचतुर्भ्यः सुच्' इति सुजन्तः । तत्र 'अवयवे कृतं लिङ्गमन्यार्थम्[2]' इति न्यायेन सुचोऽनच्कत्वेऽपि तदन्तस्य उदात्तत्वम् । एवम् 'कु॒र्वा॒णा चीर॑मा॒त्मनः' इत्यादि शानजाद्यन्तमप्यत्रोदाहार्यम् । 'अ॒द्यमा॑नाः पी॒यमा॑नाः' 'बाध॑माना रा॒यः' 'मिमा॑ना य॒ज्ञम्' इत्यादौ शानजन्तस्य न अन्तोदात्तत्वम्, किं तु परत्वात् 'ङिद्दुपदेशात्' इति लसार्वधातुकानुदात्तत्वमेवेत्युक्तम् । 'द्वयम्' 'त्रयम्' इत्यादौ 'द्वित्रिभ्यां तयस्यायज्वा' इत्ययचि 'यस्येति च' इति इकारलोपेऽपि नोदात्तनिवृत्तिस्वरः, किं तु अयचश्चित्त्वसामर्थ्यात् परत्वाद्वा अयमेव स्वर इत्युक्तम् । उभयशब्दस्य अयजन्तत्वेऽपि न चित्स्वरः ; 'उभादुदात्तो नित्यम्' इत्ययच्[3]प्रत्ययस्य आद्युदात्तत्वविधानात् । तेन मध्योदात्त उभयशब्दः । 'उ॒भय॑मे॒व संवृ॑ङ्क्ते' । 'दक्षिणादाच्' इत्यत्र चकारः 'अञ्चूत्तरपदाजाहियुक्ते' इत्यत्र विशेषणार्थः । तदभावे हि आङोऽपि तत्र ग्रहणं स्यात् । स्वरार्थस्तु न भवति ;

---

1. 'कुण्डिनाः' घ. नास्ति । 3. अयचः घ.
2. अचरितार्थं घ.

प्रत्ययस्वरेणैव इष्टसिद्धेः । तथा 'अव्यक्तानुकरणाद्व्यजवरार्धादनितौ डाच्' इत्युक्तडाचश्चकारोऽपि 'लोहितादिडाज्भ्यः' इत्यत्र विशेषणार्थ एवेति भाष्यम् । प्रत्ययस्वरेणैवेष्टसिद्धौ उभयत्र चित्त्वसामर्थ्यात् 'दक्षिणासि' 'पटपटासि' इत्यादौ 'स्वरितो वानुदात्ते पदादौ' इत्येकादेशस्य पक्षे स्वरितत्वं न भवतीति हरदत्तादयः । भाष्यविरुद्धत्वादिदमयुक्तमित्याहुः ॥

अत्र वार्त्तिकम्—

## चितः सप्रकृतेर्बह्वकजर्थम् ।

इति । चिदवयवकप्रकृतिप्रत्ययसमुदायस्य अन्त उदात्त इति वक्तव्यम [1]इति । अन्यथा 'बहुकृतम्' इत्यादौ 'विभाषा सुपो बहुच् पुरस्तात्तु' इति विहितस्य बहुच्प्रत्ययस्यैव[2] अन्त उदात्तः स्यात् । 'उच्चकैः[3]' 'नभन्तामन्यके[4] समे' 'इयं यका शकुन्तिका' इत्यादौ 'अव्ययसर्वनाम्नाम्' इत्यकच एव अन्त उदात्तः स्यात् । समुदायस्यैव अन्तोदात्तत्वमिष्यते इति । केचित्तु सूत्रस्यैव अयमर्थ इत्याचक्षते । तथा हि—'चितः' इत्यवयवावयविभावे षष्ठी, न कार्यिणि । तेन चिदवयवकसमुदायस्य अन्त उदात्त इत्यर्थः । एवं व्याख्याने[5] अकचश्चित्त्वं लिङ्गम् । अन्यथा तस्य एकाच्त्वेन तद्वैयर्थ्यादिति[6] ॥

## [६१] ॥ तद्धितस्य ॥ (6—1—164)

चित्तद्धितस्य अन्त उदात्तः । 'कौञ्जायनाः' । कुञ्जस्य गोत्रापत्यानि[7] कौञ्जायनाः । 'गोत्रे कुञ्जादिभ्यश्च्फञ्' इति

---

1. इति घ. नास्ति ।
2. बहुचश्चित्त्वात् घ.
3. तथा उच्चकैः घ. छ.
4. अन्यकेषां ङ. ज.
5. व्याख्याने चाकचः घ.
6. दिक् घ. अधिकम् ।
7. गोत्रापत्यम् घ.

चफञन्तात् 'व्रातच्फञोरस्त्रियाम्' इति स्वार्थे ञ्यः । तस्य 'ञ्यादयस्तद्राजाः' इति तद्राजसंज्ञकतया बह्वपत्यविवक्षायाम् 'तद्राजस्य बहुषु' इति लुकि 'कौञ्जायनाः' इति च्फञन्तं श्रूयते । नन्वत्र पूर्वेणैव सिद्ध्यत्यन्तोदात्तत्वम् । एवं च 'तद्धितस्य कितः' इत्येकमेव सूत्रमस्तु [1]इति चेत्—मैवम् ; परत्वात् ञित्स्वरप्रसङ्गात् । न च च्फञः चित्त्ववैफल्यम् ; 'व्रातच्फञोः' इत्यत्र विशेषणार्थत्वात् । ञित्त्वमपि [2]विशेषणार्थतया चरितार्थम् । ततश्च परत्वात् ञित्स्वरः स्यादिति तद्बाधनाय योगविभाग इति 'गोत्रे कुञ्जादिभ्यः' इत्यत्र भाष्ये स्थितम् । प्रत्ययस्वरापवादश्चित्स्वरः ॥

॥ इति चित्स्वरप्रकरणम् ॥

---

॥ अथ कित्स्वरप्रकरणम् ॥

## [ ६२ ] ॥ कितः ॥ (6—1—165)

कित्तद्धितान्तस्य अन्त उदात्तः । 'छन्दांसि सौपर्णेयाः' । 'काद्रवेयो मन्त्रमपश्यत्' । सुपर्णीकद्रूशब्दाभ्याम् 'स्त्रीभ्यो ढक्' इति ढक् । 'उदङ्कः शौल्बायनः' । 'नडादिभ्यः फक्' । प्रत्ययस्वरापवादः । अन्यथा आयन्नादिषु 'उपदेशिवद्वचनं स्वरसिद्ध्यर्थम्' इत्युक्तेः 'सभेयः' इत्यादिढप्रत्ययान्त इव[3] एकारादीनामुदात्तत्वं स्यात् ॥

॥ इति कित्स्वरप्रकरणम् ॥

---

1. इति चेत् घ. ङ. छ. नास्ति ।
2. वृद्धया घ.
3. इव क. ख. नास्ति ।

। अथ तित्स्वरप्रकरणम् ॥

## [ ६३ ] ॥ तित्स्वरितः ॥ (6—1—185)

'अन्तः' इत्यनुवर्तते । तिदिति लुप्तषष्ठीकं [1]पदम् । तकारः इत् यस्य तस्य अन्तः स्वरितः । प्रत्ययस्वरापवादः । 'कार्यं यजुः' । 'ऋहलोर्ण्यत्' । 'क्व स्थ' । 'क्व वः सङ्गयः' । 'किमोऽत्' इत्यत्प्रत्ययः । तस्मिन् परतः[2] 'क्वाति' इति किमः क्वादेशः । 'चिकीर्ष्यम्' । 'अचो यत्' । अन्तग्रहणानुवृत्तेः तव्यतोऽन्त्यस्य स्वरितत्वम् । 'कर्तव्यं यजुः' । 'अलोऽन्त्यस्य' इति स्वरविधौ न प्रवर्तते ; 'स्वरविधौ सङ्घातः कार्यी' इति परिभाषयेत्युक्तम् ॥

स्यादेतत्—'स्तीर्णं बर्हिः', 'द्युभिरक्तुभिः', 'धातुः प्रजायाम्' इत्यत्र 'ऋत इद्धातोः' 'दिव उत्' 'ऋत उत्' इति विहितस्य उकारादेः स्वरितत्वप्रसङ्ग इति । अत्र वार्तिककृतः—'तितः प्रत्ययस्य' इति वक्तव्यम्—इति । अत्र भाष्यम्—'ऋत उत्' इत्यादौ दकार एव चर्त्वभूतो निर्दिश्यत इति तित्स्वाभावः ; इत्संज्ञायां चर्त्वस्य असिद्धत्वात् । न चैवम् 'तपरस्तत्कालस्य' इत्यस्य अप्रवृत्तौ 'किरति' इत्यादौ आन्तरतम्यादीकार एव[3] स्यादिति वाच्यम् ; भाव्यमानत्वेन सवर्णाग्रहणात् । न चैवम् 'अदसोऽसेर्दादु दो मः' इत्यत्रापि उकारस्य भाव्यमानत्वेन सवर्णाग्राहकत्वे 'अमूभ्याम्' इत्यादौ आन्तरतम्यादूकारो न स्यादिति वाच्यम् ; 'दिव उत्' [4]इत्यादिज्ञापकात् क्वचिद्भाव्यमानस्यापि सवर्णग्राहकत्वात् । न चेदानीं तत्रापि दकारनिर्देश इत्युक्तेर्न तत् ज्ञापकं स्यात् इति

---

1. पदम् घ. नास्ति ।
2. परतः घ नास्ति ।
3. एव ऋतः घ.
4. इति ज्ञापकात् घ.

वाच्यम् ; 'तपरस्तत्कालस्य' इत्यत्र दकारस्यापि चर्त्वभूतस्य निर्देशेन तस्य ज्ञापकत्वसिद्धेरिति । नन्वेवम् 'ऋदोरप्' इत्यत्र उकारस्य दात् परत्वात् तत्कालग्रहणप्रसङ्गः ; तादपि परः तपर इत्याश्रयणात् इति चेत्—न ; [1]उच्चारणार्थत्वात् । किमर्थं चायं यत्नो भाष्ये समाश्रितः । 'ऋत इत्' इति इकारादेस्तित्त्वेऽपि 'प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणम्' इति परिभाषया [2]तत्र तितः प्रत्ययस्यैव[3] ग्रहणात् इष्टसिद्धेरिति । अत्र कैयटः—'ऋदोरप्' इत्यत्र दकार उच्चारणार्थतया निर्दिश्यत इति नाद्यो दोषः । जश्त्वेन तु तत्र दकारश्रवणम् । 'प्रत्ययाप्रत्यययोः' इति परिभाषा तु भाष्यवार्त्तिककाराभ्यां[4] न क्वचिदप्याश्रितेति । हरदत्तोऽपि उक्तं भाष्यं कैयटं च उपन्यस्य 'प्रत्ययाप्रत्यययोः' इति परिभाषायाः भाष्यवार्त्तिकयोरिहादर्शनात् अयं यत्नो महानाश्रितोऽस्माभिः[5] इत्याह । यद्यपि 'अङ्गस्य' इति सूत्रप्रत्याख्यानावसरे भाष्य एव इयं परिभाषा उपन्यस्ता, तथापि 'निरुतम्' 'दुरुतम्' इत्यादौ 'हलः' इति संप्रसारणदीर्घव्यावृत्त्यर्थम् 'अङ्गस्य' इति सूत्रस्य आवश्यकत्वे व्यर्थेयं परिभाषेति [6]कैयटहरदत्तयोराशयमाहुः । ननु 'ऋत इद्धातोः' इति [7]श्रुतस्य इकारस्य तित्त्वम्, न तु प्रत्यायितस्य[8] 'स्तीर्णम्' इत्यादौ प्रयोगे श्रुतस्य आदेशस्य ; प्रत्यायक एव व्यवस्थितस्य वर्णस्य इत्संज्ञाप्रवृत्तेः । एवं च अतिप्रसङ्गाभावात् दकारनिर्देशाश्रयणं व्यर्थम् इति चेत्—न[9] ; संज्ञाधर्मेण तित्त्वेन संज्ञिनोऽपि व्यपदेशात् । अन्यथा 'चिकीर्ष्यम्' इत्यादौ यदन्तेऽप्येवं तित्स्वरो न स्यात् ; तुल्यन्यायत्वात् । न च तत्कालग्रहणार्थतया 'ऋत उत्[10]' इत्यादौ

---

1. उच्चारणार्थत्वात् घ. नास्ति ।
2. अत्र घ. ।
3. एव घ. नास्ति ।
4. -वार्त्तिकाभ्याम् घ.
5. अस्माभिः ज. नास्ति ।
6. भाष्यकैयटयोः
7. श्रुतस्यैव घ.
8. तत्प्रत्यायितस्य
9. न घ. नास्ति ।
10. इत्' ङ.

तकारस्य चारितार्थ्यम् ; 'आक्षिकः' इत्यादौ 'ककारानुबन्धानामनेकप्रयोजनदर्शनात् उभयार्थसंभवादिति कैयटः ॥

अत्र 'एओङ्'सूत्रे 'अणुदित्'सूत्रे च कौस्तुभेऽभिहितम्—संज्ञाधर्मेण तत्रैव संज्ञी व्यपदिश्यते, यत्र संज्ञायां तस्य अचारितार्थ्यम्। यथा ङमुटष्टित्वेन ङकारादयष्टितो व्यपदिश्यन्ते। यथा वा यतः तित्त्वेन 'चिकीर्ष्यम्' इत्यादौ यकारादयस्तितः। 'ऋत उत्' 'उदोष्ठ्यपूर्वस्य' इत्यादौ तु तत्कालावधारणेन संज्ञायामेव चरितार्थस्तकारानुबन्ध इति कथं संज्ञाधर्मेण संज्ञिव्यपदेशः ? अत एव 'वैयाकरणः' 'पचस्व' इत्यत्र ऐजागमस्य शपश्च न चित्स्वरः ; 'न य्वाभ्याम्' इति सूत्रे 'अचः परस्य द्वे' इत्यत्र च ऐजचोश्चकारस्य प्रत्याहारे उपक्षयात्। अन्यथा ऐजादिसंज्ञाधर्मेण संज्ञिनोऽपि चित्त्वादत्र चित्स्वरः स्यात्। 'आक्षिकः' इत्यादौ तु युक्तमनुबन्धानामनेकप्रयोजनदर्शनम् ; प्रयोजनानां युगपदुपस्थितेर्विनिगमनाविरहात्। अत्र तु स्वरसतः प्रवृत्तेन तत्कालावधारणेन कृतार्थस्तकारः[2] सामर्थ्यकल्प्यं[3] चित्स्वरं कथं कल्पयेत्[4] ? एवं च अत्र तित्स्वरशङ्काविरहात् 'दिव उत्' इत्यादौ दकारो निर्दिश्यत इति भाष्यादिकमभ्युपगम्यवाद इति ॥

अत्राहुराचार्याः—तकारस्य तत्कालावधारणेन चरितार्थत्वेऽपि तत्र प्रवृत्ताया इत्संज्ञाया अचरितार्थत्वात् सा संज्ञिनि स्वकार्यं कुर्यादेव। ऐजादिसंज्ञायां चकारे प्रागेव प्रवृत्ताया इत्संज्ञायाः 'आदिरन्त्येन' इति प्रत्याहारग्रहणे उपक्षयात् 'वैयाकरणः' इत्यादौ अतिप्रसङ्गोऽपि निरस्तः। यदपि तत्र 'वस्तुतस्तु संज्ञापि तान्ता न तु तित्' इत्यादिना उकारादिरेव संज्ञा, तकारस्तु तात्पर्यग्राहकः इति भाष्यादिमते 'दिव उत्'

1. ककाराद्यनुबन्धानाम् ध.
2. कृतार्थस्य तकारस्य घ.
3. सामर्थ्यं कल्प्यं घ.
4. कुर्यात् घ.

इत्यादौ तकारे इत्संज्ञाप्रवृत्तावपि 'उत्' इत्यादि तकारान्तैव संज्ञेति नवीनमतेऽपि तत्रेत्संज्ञाप्रवृत्तिरेव नेत्युक्तम्, तदपि चिन्त्यम्; 'उत्' इत्यादिसंज्ञाशब्दगततकारस्यापि उपदेशान्त्यहल्त्वं संज्ञितावच्छेदकं वर्तत इति कथं 'हलन्त्यम्' इति इत्संज्ञा न भवेत् ? ततश्च अवयवसमुदाययोर्भेदादुच्छब्दस्तिदिति संज्ञिनि तित्स्वरः स्यादेव । न चैवं कृत्संज्ञायास्तित्त्वे कृत्प्रत्ययानां तित्त्वप्रसङ्गः ; ण्यत्तव्यदादीनां तित्करणादिना लिङ्गेन सर्वैः एवमादीनां दोषाणां परिहर्तव्यत्वात् । तस्मात् 'दिव उत्' इत्यादौ तित्स्वराभावाय दकारो निर्दिश्यत इति भाष्यादिकल्पनं युक्तमेवेति । एवं च वार्त्तिकमते 'दिव उत्' 'दिव औत्' 'अच्च वेः' 'औत्' 'स्थाघ्वोरिच्च' इत्यादौ तकारः क्वचित् 'भाव्यमानोऽप्यण् सवर्णान् गृह्णाति' इति ज्ञापनार्थः । क्वचित् भाव्यमानस्यापि सवर्णग्रहणशङ्कानिवृत्त्यर्थः । क्वचित् उच्चारणार्थः[1] । भाष्यमते तु तकार एव सर्वत्रात्र उक्तप्रयोजनाय निर्दिश्यत इति ॥

यत्तु 'अणुदित्सवर्णस्य' इत्यत्र कौस्तुभे उक्तम्—'दिव औत्' [2]इति तपरकरणं स्वरार्थम्, न तु कालावधारणार्थम् भाव्यमानतया सवर्णग्रहणाप्रसक्तेः । तथा च स्वरितः प्रसज्यते । 'द्यौः पि॒तः पृथि॑वि मात॒रध्रु॑क्' 'पृ॒थि॒वी उ॒त द्यौः' इत्युदात्तप्रयोगस्तु द्यौशब्दस्य बोध्यः । वस्तुतस्तु 'इटोऽत्' इत्यादाविव 'दिव औत्' इत्यत्र तकारोऽप्युच्चारणार्थ एव ; हलः स्रंसनधर्मिणोऽनुदात्ते कृते 'उदात्तस्वरितयोः' इत्येव स्वरितसिद्धेरिति । [3]अत्रेदं चिन्त्यम्—'तिति प्रत्ययग्रहणम्' इति वार्त्तिकात् कथमप्रत्यये तित्स्वरः ? भाष्ये प्रत्याख्यातमिति चेत्—सत्यम् ; न [4]तु 'द्यौः' इत्यादौ अव्याप्तिप्रसङ्गात् प्रत्याख्यातम् ; किं त्वप्रत्यये सर्वत्र दकारो निर्दिश्यत इति कल्पनया ! न च 'दिव उत्' 'ऋत उत्' इत्यत्रैव दकारनिर्देशो

1. उच्चारणाद्यर्थः ङ.
2. इत्यत्र घ.
3. तत्रेदं घ. ङ.
4. च घ.

भाष्ये दर्शित इति वाच्यम् ; तस्य उपलक्षणत्वात् । अत एव 'ऋत उत्' 'उदोष्ठ्यपूर्वस्य' इत्यादावपि दकारनिर्देशो [1]भाष्यसंमतत्वेन कौस्तुभे दर्शितः । हरदत्तादिभिरपि 'प्रत्ययाप्रत्यययोः' इति परिभाषाया इह भाष्यादौ अदर्शनात् अयं यत्न आश्रितः' इति वदद्भिः अप्रत्यये सर्वत्र दकारनिर्देशः सूचितः । 'अङ्गस्य' इति सूत्रभाष्य एव दर्शितया प्रत्ययाप्रत्ययपरिभाषयैव इष्टसिद्धौ 'दकारो निर्दिश्यते' इत्यादि 'एओङ्'सूत्रकौस्तुभग्रन्थेनापि भाष्यमतेऽप्यत्र तितः प्रत्ययस्य ग्रहणमिति प्रदर्शितत्वाच्च । अत एव मनोरमायाम्—'दिव [2]उत्' इत्यत्र तकार उच्चारणार्थ इत्युक्तम् । कथं तर्हि 'द्यौः पितः' इत्यत्र स्वरित इति चेत्—तत्राप्यामन्त्रिते तत्र कथं तित्स्वरः ? छान्दसत्वादिति चेत्—तुल्यमत्रापि[3] । अत एव तैत्तिरीये तत्रैव [4]मन्त्रे द्योशब्द उदात्तः पठ्यते । 'हलः स्रंसनधर्मिणः अनुदात्ते कृते' इत्याद्यप्यत एव निरस्तम् ॥

इदं तु चिन्त्यम्—'दिव उत्' इत्युकारस्य[5] स्वरितप्रसङ्गः ; 'हलः स्रंसनधर्मिणः' इति न्यायस्य तुल्यत्वात् । न च अयमुकार उदात्तो निपात्यत इति वाच्यम् ; दकारनिर्देशोऽयमिति भाष्योक्तिविरोधात् । अत एव भाष्यात् अत्र [6]स्वरितो नेति चेत्—न ; तित्स्वरो मा भूत्, 'उदात्तस्वरितयोः' इति स्वरितो यथा स्यादित्येवंपरत्वेनापि तदुपपत्तेः । न च फलभेदाभावः ; 'द्युलोकः' इत्यादौ स्वरिताभावस्य फलत्वात् । 'उदात्तस्वरितयोः' इति हि स्वरितो नात्र भवति ; समासान्तोदात्ते शेषनिघाते च उदात्तयणभावात् । तित्स्वरस्तु स्यादेव । एवं च 'त्वमग्ने द्युभिः' इत्यादिप्रयोगविरोधः । 'एओङ्'सूत्रस्थकौस्तुभविरोधश्चेति ॥

---

1. भाष्याभिप्रेतत्वेन घ. ङ.
2. औत् घ.
3. अत्रापि घ. ङ. छ. ज. नास्ति ।
4. मन्त्रे घ. नास्ति ।
5. उकारस्यापि घ.
6. तित्स्वरो घ.

## [६४] ॥ यतोऽनावः ॥ (6—1—213)

यत्प्रत्ययान्तस्य द्व्यच आदिरुदात्तो भवति, न चेन्नौशब्दात् परो यत् । तित्स्वरापवादः । 'तस्माद्गायते न देयम्' । 'अचो यत्' । 'ईद्यति' । गुणः । 'कूप्याभ्यः स्वाहा' । 'भवे छन्दसि' इति यत् । द्व्यचः किम् ? 'अवट्याभ्यः' स्वाहा' । अनावः किम् ? नावा तार्यं 'नाव्यम्' । 'नौवयोधर्म' इत्यादिना यत् । 'धुरि धुर्यौ पातम्' इत्यत्र व्यत्ययात् धुर्यशब्दे न अयं स्वरः । धुरं वहतीति धुर्यः । 'धुरो यड्ढकौ' इति यत् । 'अर्यः स्वामिवैश्ययोः' इत्यर्यशब्दो यत्प्रत्ययान्तः[1] स्वामिनि वैश्ये च निपातितः । तत्र 'स्वामिन्यन्तोदात्तत्वं वक्तव्यम्' इत्युक्तम् 'यतोऽनावः' इत्यस्य[2] बाधनाय । 'अग्ने विश्वान्यर्य आ' । 'समर्य आ विदथे वर्धमानः' । 'सूर्यो देवीमुषसं रोचमानामर्यः' इत्यत्र वैश्ये अर्यशब्दः । स्वामिवाचित्वे तु व्यत्ययेन आद्युदात्तत्वम् । अथ यो वैश्यश्च स्वामी च तत्र कथम् ? उच्यते ; वैश्याख्यायामाद्युदात्तत्वम्, स्वाम्याख्यायामन्तोदात्तत्वम्[3] । तथा च 'अर्यः स्वाम्याख्या चेत्' इत्याख्याग्रहणं फिट्सूत्रे कृतमिति हरदत्तः ॥

### ॥ शुनः संप्रसारणं वा च दीर्घत्वम्[4], तत्सान्नियोगेन च अन्तोदात्तत्वम् ॥

'उगवादिभ्यो यत्' इत्यत्रत्यमिदम् । शुने हितं 'शुन्यं' 'शून्यम्' । अत्र संप्रसारणदीर्घपक्षेऽन्तोदात्तत्वम्[5] 'यतोऽनावः' इत्येतद्बाधनाय विधीयते । पक्षान्तरे 'यतोऽनावः' इत्याद्युदात्तत्वैव ॥

---

1. यदन्तः घ.
2. इत्येतद्बाधनाय घ.
3. आद्युदात्तत्वम् ङ.
4. दीर्घत्वं च घ.
5. त्वन्तोदात्तत्वं घ.

## [६५] ॥ ईडवन्दवृशंसदुहां ण्यतः ॥ (6—1—214)

ण्यन्तानामेषामादिरुदात्तः । व्यनुबन्धकत्वात् यद्ग्रहणे ण्यन्न गृह्यत इति 'यतोऽनावः' इत्यस्य अप्राप्तौ तित्स्वरित एव अत्र प्राप्तः । 'ईड्यश्चासि वन्द्यश्च वाजिन्' । 'आजुह्वान ईड्यो वन्द्यश्च' । 'यजमानाय वार्यम्' । 'शंस्यम्' । 'दोह्या धेनुः' । 'वार्यम्' इति वृङ् संभक्तौ इत्यस्मात् ण्यत् । न च 'एतिस्तुशास्वृदृजुषः क्यप्' इति क्यपा बाधः ; तत्र वृञ् वरणे इत्यस्यैव ग्रहणात् । न [1]च मानाभावः ; ईडिवन्दिभ्यां नित्यात्मनेपदाभ्यां[2] साहचर्यात् अत्र वृङ् संभक्तौ इत्यस्य ग्रहणमिति सिद्धे ततो ण्यतोऽवश्यंभावेन तत्र वृञ् वरणे इत्यस्यैव ग्रहणौचित्यात् । 'सजनीयꣳ शस्यं विहव्यꣳ शस्यम्' इत्यादौ 'शस्यम्' इति क्यबन्तत्वादनुनासिकलोपः । 'प्रशस्यस्य श्रः' इति लिङ्गात् शंसेः क्यपो भावात्[3] इति । ईडादीनां किम् ? 'नाश्यं काममन्यस्य' । तित्स्वरितः ॥

## [६६] ॥ समानोदरे शयित ओ चोदात्तः ॥ (4—4—108)

समानोदरशब्दात् सप्तमीसमर्थात् 'शयितः' इत्यर्थे यत्प्रत्ययः, ओकारश्च उदात्तः । 'समानोदर्यो भ्राता' । [4]तित्स्वरापवादः ओकारस्य उदात्तविधिः । 'विभाषोदरे' इति समानस्य विकल्पेन सभावो विहितः । तत्र सभावपक्षे 'सोदर्यः' इति रूपम् ।

---

1. चात्र घ.
2. -पदिभ्यां घ.
3. क्यपोऽपिभावात् घ.
4. अत्र तित्स्वर- ङ.

इदं च तित्स्वरेण अन्तस्वरितम् । 'सोदराद्यत्' इत्युत्तरसूत्रेण तत्र यत्प्रत्ययविधानात्[1], 'ओ चोदात्तः' इत्यस्य च तत्र अननुवृत्तेः— इति कौस्तुभादौ ॥

॥ इति तित्स्वरप्रकरणम् ॥

---

## ॥ अथ लित्स्वरप्रकरणम् ॥

### [ ६७ ] ॥ लिति ॥ (6—1—193)

लकार इत् यस्य तदन्ते प्रत्ययात् पूर्वमुदात्तं भवति । 'यत्र बाणाः' । 'तत्र वृत्रहा' । सप्तम्यास्त्रल् । 'यतो वा इमानि' । पञ्चम्यास्तसिल् । 'वृत्रतूर्यें ततार' । तिपो[2] णल् । प्रत्ययस्वरापवादः । स्यादेतत्—'ब्राह्मणं दक्षिणतो निषाद्य' इत्यत्र 'निषाद्य[3]' इति निपूर्वात् सदेर्ण्यन्तात् क्त्वो ल्यपि रूपम् । तत्र ल्यपि अनुदात्ते परतो णेरुदात्तस्य लोपात् उदात्तनिवृत्तिस्वरेण अन्तोदात्तं प्राप्नोतीति कथं लित्स्वरेण उत्तरपदाद्युदात्तत्वम् ? अत्र केचित्— ल्यपो लित्त्वसामर्थ्यात् लित्स्वर एव ल्यब्विषये भवति—इति । तत्तुच्छम् ; 'प्रचिकीय[4]' इत्यादौ प्रत्ययात् पूर्वस्य उदात्तप्रापणेन लित्त्वसाफल्यात्[5] । उदात्तनिवृत्तिस्वरात् परत्वाल्लित्स्वरः—इत्यपरे । 'तत् स्थलेऽवसाय्य' । अत्र अवपूर्वात् स्यतेर्ण्यन्ताल्ल्यपि णिलोपः । 'शाच्छासाह्वाव्यावेपां युक्' इति युगागमेन यकारद्वयश्रुतिः । अथ कथम् 'यः पावकः पुरुतमः' इत्यत्र पावकशब्दे अन्तोदात्तत्वम् ?

---

1. यद्विधानात् घ.
2. लिटो ङ.
3. निषाद्येति घ. नास्ति ।
4. 'प्रचिक्रीय' ङ. छ.
5. लित्त्वसामर्थ्यात् ख.

पावयतेर्ण्वुलि लित्स्वरौचित्यादिति । अत्र वेदभाष्यम्—णेरुदात्तस्य लोपात् उदात्तनिवृत्तिस्वरेण अन्तोदात्तत्वमिति । तच्चिन्त्यम् ; एवमप्यकादेशाद्याकारे परत उदात्तलोप इति तस्यैव उदात्तत्वापत्त्या अन्तोदात्तत्वानुपपादनात् । [1]तस्मादुञ्छादिः पावकशब्दो बोध्यः । व्यत्ययाद्वा तस्य छन्दसि अन्तोदात्तत्वम् । 'या वाजिन्नग्नेरप्सु पावका प्रिया तनूः' इत्यादौ प्रसिद्धात् अग्नितनूवाचिनः पावकशब्दात् अर्श आद्यचि छन्दसि पावकशब्दः—इत्याचार्याः । पावं कायत इति पावक इति आतोऽनुपसर्गे [2]कप्रत्ययान्तत्वमन्ये मन्यन्ते । 'निषाद्य' इत्यादौ लित्स्वरे कर्तव्ये णिलोपो न स्थानिवत् ; 'न पदान्त' इति स्वरविधौ तन्निषेधात् ॥

## [६८] ॥ आदिर्णमुलन्यतरस्याम् ॥ (6—1—194)

णमुलन्ते आदिरुदात्तो वा स्यात् । लोलूयं लोलूयम् । लूञो यङन्तात् 'आभीक्ष्णये [3]णमुल् च' इति णमुल् । 'नित्यवीप्सयोः' इति द्विर्वचनम् । अत्र आम्रेडितं सर्वानुदात्तम् । पूर्वो लोलूयशब्दः पक्षे लित्स्वरेण मध्योदात्तः । पक्षे आद्युदात्तः । एकाचि धातौ तु 'अभिक्रामं जुहोति' इत्यादौ लित्स्वरस्यास्य च न विशेषः ॥

## [६९] थलि च सेटीडन्तो वा ॥ (6—1—196)

इह 'आदिः[4]' इत्यनुवर्तते 'अन्यतरस्याम्' इति च । तद्बलात् वाशब्दश्चार्थे व्याख्यायते । इड्वति थलन्ते पदे इट् अन्तः आदिश्च इति त्रय उदात्ताः । एतेषां च[5] समुच्चयेन नोदात्तत्वम् ; 'अनुदात्तं पदमेकवर्जम्' इत्युक्तेः । किं तु पर्यायेण । एवमेषां विकल्पे सिद्धे पुनरन्यतरस्यांग्रहणं पक्षे लित्स्वरप्रवर्तनाय[6] ।

---

1. तस्मात् घ. नास्ति ।
2. अनुपसर्गे क इति कप्रत्यय- घ.
3. णमुल् चेति घ. नास्ति ।
4. आदिरुदात्तः घ.
5. च घ. नास्ति ।
6. लित्स्वराय घ.

'लुलविथ'। पर्यायेण अत्र चत्वारोऽपि[1] अच उदात्ताः। 'अग्ने पुरो रुरोजिथ'। 'उदारिथ'। सेट् किम्? 'ययाथ'। 'समिथे बभूथ'। अत्र लित्स्वर एव। न च इटः कार्यित्वेन उपादानादेव सेट् थल् लब्ध इति पुनः सेड्ग्रहणमफलमिति वाच्यम्; सेडनिट् च थल् गृह्येत यत्र इडस्ति तत्र तस्य उदात्तत्वार्थम् [2]इड्ग्रहणमित्युपपत्तेरिति॥

॥ इति लित्स्वरप्रकरणम्॥

---

## ॥ अथ रित्स्वरप्रकरणम्॥

### [७०] ॥ उपोत्तमं रिति ॥ (6—1—217)

र् इत् यस्य तदन्ते उपोत्तममुदात्तं भवति। प्रत्ययस्वरापवादः। 'दिदृक्षेण्यो दर्शनीयो भवति'। अनीयर्प्रत्ययः। 'आहवनीयः'। आहूयतेऽस्मिन्नित्याहवनीयः। 'कृत्यल्युटो बहुलम्' इति अधिकरणेऽनीयर्। कृदुत्तरपदप्रकृतिस्वरेण नीशब्द उदात्तः॥

॥ इति रित्स्वरप्रकरणम्॥

---

## ॥ अथ चित्स्वरप्रकरणम्॥

### [७१] ॥ आदिः सिचोऽन्यतरस्याम् ॥ (6—1—187)

सिजन्तस्य आदिर्वा उदात्तः। 'मा हि कार्ष्टाम्'। करोतेर्माङि लुङि तसस्तामादेशः। 'च्लि लुङि'। 'च्लेः सिच्'। 'सिचि

---

1. अपि घ. नास्ति। 2. इड्ग्रहणम् घ. नास्ति।

वृद्धिः[1] ' इति वृद्धिः । 'हि च' इति निघातनिषेधनार्थो हिशब्द-प्रयोगः । अडागमाभावाय[2] माङ्प्रयोगः । सति हि तस्मिन् स एव उदात्तः स्यात् ; 'अडुदात्तः' इति वचनात् । आद्युदात्तत्वा-भावपक्षे प्रत्ययस्वरेण अन्तोदात्तः । 'मा हि लाविष्टाम्' । अत्र तु पक्षे सिच[3] इडागम उदात्तः । सिचश्चित्त्वसामर्थ्यात् आगमा-नुदात्तत्वं बाध्यते । अन्यथा अनच्कत्वेन सिचः तद्वैयर्थ्यात् । 'मा मर्म प्राणैरापूरिष्ठाः' । पूरी आप्यायने । अनुदात्तेत् । अत्र तिङ्निघाताभावो व्यत्ययात् ॥

## [७२] ॥ स्वपादिर्हिंसामच्यनिटि ॥ (6—1—188)

अत्र 'लसार्वधातुकम्' इत्यनुवृत्तं सप्तम्यन्ततया विपरिणम्यते ; 'अच्यनिटि' इत्यनेन संबन्धात् । स्वपादीनां हिंसेश्च आदिर्वा उदात्तः अजादौ अनिटि लसार्वधातुके । 'स्वपन्ति' । 'श्वसन्ति' । 'अनन्ति' । 'हिंसन्ति' । पक्षे प्रत्ययस्वरेण मध्योदात्तता । अचि किम् ? 'स्वप्यात्' । 'हिंस्यात्' । अत्र यासुडुदात्तः । अनिटि किम् ? 'स्वपितः' । 'रुदादिभ्यः सार्वधातुके' इतीट् । अत्र प्रत्ययस्वरः । स्वपादिरदाद्यन्तर्गणः । आ अदादिपरिसमाप्तेः । तत्र स्वपिश्वस्यनिभ्यः परे जक्षित्यादयः षट्[4] अभ्यस्तसंज्ञाः । तेषु 'अभ्यस्तानामादिः' इति परत्वात् नित्यमाद्युदात्तत्वम् । ततः परे षस सस्ति स्वप्ने, वश कान्तौ इति त्रयश्छान्दसाः । तत्र दृष्टानुविधिः । ततः परं चर्करीतम् अभ्यस्तमेव[5] । चर्करीतं यङ्लुगन्तम् । तत्र 'उभे अभ्यस्तम्' इत्यभ्यस्त-संज्ञा । ह्नुङस्तु ततः परस्य नायं स्वरः ; 'अह्नुङोः' इत्यनुवृत्तेः । अतः[6] पारिशेष्यात् स्वपादिषु त्रिष्वेव अयं स्वर इत्याहुः ॥

---

1. वृद्धिरिति घ. नास्ति ।
2. अडभावाय घ.
3. सिचः घ. नास्ति ।
4. सप्त घ.
5. त्वभ्यस्तमेव घ.
6. अतः घ. नास्ति ।

## (वा) क्ङित्येवेष्यते ।

तेनेह न[1] । 'स्वपानि' । 'हिनसानि' । अत्र 'आडुत्तमस्य पिच्च' इति पित्त्वान्न ङित्त्वम् ; 'सार्वधातुकमपित्' इत्युक्तेः । एवं च 'स्वपानि' इत्यत्र धातुस्वरेण नित्यमाद्युदात्तत्वम् । उक्तवचनाभावे तु सतिशिष्टत्वात् स्वपादिविकल्पः स्यात् । 'हिनसानि' इत्यत्र च धातुस्वरेण नित्यं नकाराकारस्य[2] उदात्तत्वम् । इदं च वचनं सिद्धान्तकौमुद्यां कथितम्[3] ॥

## [७३] ॥ अभ्यस्तानामादिः ॥ (9—1—189)

एषामादिरुदात्तः स्यात्[4] अनिट्यजादौ लसार्वधातुके । 'बिभ्रती जराम्' । 'भुवनानि जुह्वत्' । 'यदाहवनीये जुह्वति' । इह 'श्लौ' इति द्विर्वचने 'उभे अभ्यस्तम्' इति अभ्यस्तसंज्ञा । 'जाग्रते स्वाहा' । 'मनसा दीध्यानः' । 'जक्षित्यादयः षट्' इत्यभ्यस्तसंज्ञा । स्वपादिविकल्पमत्र परत्वादिदं बाधत इत्युक्तम् । चित्स्वरमपि परत्वादयं बाधते । 'हस्ते दधानः' । 'आजुह्वानः' । शानजन्तावेतौ । प्रत्यय-स्वरापवादोऽयम् । अचीति किम् ? 'यन्न जुहुयात्' । 'परिदध्यादन्तम्' । यासुडुदात्तः । अनिटि इति किम् ? 'जक्षिति' । 'जक्षितः' । 'रुदादिभ्यः' इति इट् । 'जागरिष्यते' । 'जागरिताय' इति तु नानिड्ग्रहणप्रत्युदाहरणम् ; लसार्वधातुकत्वाभावेनापि अत्र इष्टसिद्धेः । 'शुचीदयन्दीधितिम्' । क्तिन्नन्तो दीधितिशब्दः । तेन नित्स्वरेण आद्युदात्तः । 'यीवर्णयोः' इतीकारस्य लोपः । लसार्वधातुक इति किम् ? 'परिभू बभूवतुः' । 'लिट् च'

---

1. नेह घ.
2. नकारादकारस्य घ.
3. स्थितम् घ.
4. स्यात् घ. नास्ति ।

इत्यार्धधातुकसंज्ञा[1] । 'यदेनश्चक्रम' इत्यत्र तु अनजादित्वादपि सिद्धम् । 'आदिः' इति वर्तमाने पुनरादिग्रहणं नित्यार्थम् ॥

## [७४] ॥ अचः कर्तृयकि ॥ (6—1—195)

उपदेशेऽजन्तस्य धातोरादिर्वा उदात्तः कर्तृवाचिनि सार्वधातुके परतो विहिते यकि । 'हीयत एव' । 'यदैषां प्रमीयेत यदा वा जीयेरन्' । उपदेशेऽजन्तस्येति व्याख्यानात् 'यदि मध्यन्दिने दीयेत' इत्यादावपि भवति । इतरथा 'ॠत इद्धातोः' इतीत्वे रपरत्वे च परत्वात् कृते अनजन्तत्वान्नायं स्वरः[2] स्यात् । न चैवम् 'जायते स्वयमेव' [3]इत्यादौ जनेरुपदेशेऽजन्तत्वाभावात् कथं तत्र अस्य प्रवृत्तिरिति वाच्यम् ; 'जनसनखनां सञ्झलोः' 'ये विभाषा' इत्यात्वविधावपि 'अनुदात्तोपदेश' इत्यतः उपदेशपदानुवृत्त्या 'सञ्झलोः' इत्यस्य विषय-सप्तमीत्वाश्रयणेन च उपदेश एव जनादीनामात्वप्रवृत्त्या तेषामप्युपदेशे अजन्तत्वादित्याहुः । कर्तृयकि किम् ? 'य उखायां भ्रियते' । 'यन्मृदा चाद्भिश्चाग्निश्चीयते' । अत्र कर्मणि लकारः । 'भावकर्मणोः' इति यक् । पूर्वेषु तु कर्मकर्तरि लकारः । 'कर्मवत् कर्मणा तुल्यक्रियः' इति यगात्मनेपदे । अकर्मकाणामपि जनिप्रभृतीनाम् अन्तर्भावित-ण्यर्थकतया सकर्मकत्वात् [4]कर्मकर्तरि लकारः । पक्षेऽदुपदेशात् लसार्वधातुकानुदात्तत्वे प्रत्ययस्वरेण यगुदात्तः । 'एष हि पञ्च-दश्यामपक्षीयते' । अच इति किम् ? 'भिद्यते कुसूलः स्वयमेव' । 'यदि भिद्येत' । 'यद्वै यज्ञस्यातिरिच्यते' इत्यादौ व्यत्ययेन आद्यु-दात्तत्वम् ॥

---

1. आर्धधातुकत्वम् घ.
2. नायं स्वरः घ. नास्ति ।
3. स्वयमेवेत्यादौ नायं स्वरः स्यात् । जनेरुपदेशेऽनजन्तत्वा-दिति वाच्यम् घ. ङ. छ.
4. कर्मलकारः घ.

## [ ७५ ] ॥ पथिमथोः सर्वनामस्थाने ॥ (6—1—199)

'आदिरुदात्तः' इति वर्तते । सर्वनामस्थानान्तयोरनयोरादिरुदात्तः । उणादौ 'गमेरिनिः' इत्यधिकारे 'मन्थः'। 'पतेस्थ च' इति वचनात् इनिप्रत्ययान्तौ अन्तोदात्तौ पथिमथिन्शब्दौ प्रत्ययस्वरेण[1] । 'ये ते पन्थानः' । 'पन्थामनूऽऽयाम्[2]' । 'पथिमथ्यृभुक्षामात्' इत्याकारः सौ विहितः व्यत्ययात् अम्यपि भवतीति रूपसिद्धिः । 'मन्थाः' । 'मन्थानौ' । सर्वनामस्थान इति किम् ? 'पथो वा एषः' । भस्य टेर्लोपः । उदात्तनिवृत्तिस्वरेण विभक्तिरुदात्ता । 'पथिप्रियः' इत्यादिबहुव्रीहौ प्रत्ययलक्षणेन यथा नायं स्वरः तथा उक्तमधस्तात् ॥

## [ ७६ ] ॥ अन्तश्च तवै युगपत् ॥ (6—1—200)

'तवै' इति लुप्तषष्ठीकं पदम्[3] । तवैप्रत्ययान्तस्य अन्तश्चादिश्च [4]युगपदुदात्तः । 'नानसे यातवै' । 'रक्षसे हन्तवै' । 'कृत्यार्थे तवैकेन्केन्यत्वनः' इति तवैप्रत्ययः । प्रत्ययस्वरापवादः । युगपद्ग्रहणं पर्यायनिवृत्त्यर्थम् । अन्यथा 'एकवर्जम्' इति नियमात् पर्यायः स्यात् अथ कथम् 'हव्यायास्मै वोढवे' इत्यत्र युगपदाद्यन्तयोरुदात्तत्वम् ? 'तुमर्थे सेसेन्' इत्यादिना वहेस्तवेप्रत्यये 'वोढवे' इति रूपम् । तवैग्रहणमत्र तवेप्रत्ययस्याप्युपलक्षणमिति वेदभाष्यम् । एवं सति 'अग्ने हव्याय वोढवे' इत्यत्रापि द्व्युदात्तत्वं[5] स्यात् इति चिन्त्यमेतत् । स्वरमञ्जर्यां वनस्पत्यादिषु वोढवेशब्दः पठितः । तदपि अत एव निरस्तम् । 'उभे वनस्पत्यादिषु युगपत्' इत्यस्य समासविषयकत्वाच्च ।

---

1. प्रत्ययस्वरेण घ. नास्ति ।
2. इत्यादौ घ. अधिकम् ।
3. पदम् घ. नास्ति ।
4. युगपत् घ. नास्ति ।
5. नाद्युदात्तत्वं घ.

अत एव वृत्त्यादिषु तत्र नासौ पठितः । तस्माद्व्यत्ययेन क्वचित् अस्य आद्यन्तावुदात्तौ इति बोध्यम् ॥

## [ ७७ ] ॥ क्षयो निवासे ॥ (6—1—201)

क्षयशब्द आद्युदात्तः निवासेऽभिधेये । 'स्वे क्षये शुचिव्रत' । 'यस्य क्षयाय जिन्वथ' । 'क्षये पाथ' । क्षि निवासगत्योः । क्षियन्ति निवसन्ति अस्मिन्निति क्षयः । 'पुंसि संज्ञायां घः' इति अधिकरणे घः । निवासे किम् ? क्षयः । भावे एरच् ॥

## [ ७८ ] ॥ जयः करणम् ॥ (6—1—202)

करणवाची जयशब्द आद्युदात्तः । 'तज्जयानां जयत्वम्' 'जयान् प्रायच्छत्' । जयति अनेनेति जयः । पूर्ववद्धः[1] । भावे एरचि अन्तोदात्तः प्रत्ययस्वरेण ॥

## [ ७९ ] ॥ वृषादीनां च ॥ (6—1—203)

आदिरुदात्तः । 'वृषः' । 'जनः' । 'त्वरः[2]' । 'हयः' । 'गयः' । 'नयः' । 'तायः' । 'तयः' इत्यन्ये । 'चयः' इति क्वचित् । 'अयः' । 'अंशः' । 'वेदः' । पचाद्यजन्ता एते[3] । 'गयः' इति गायतेर्निपातनात् एत्वे रूपम् । वृषु सेचने । इगुपधलक्षणः कः । वेत्तेरचि 'वेदः' । 'सूदः' । इगुपधत्वात् कः । 'पदः' 'अशः'

1. पूर्ववत् करणे घः घ.
2. ज्वरः घ.
3. पचाद्यजन्तावेतौ । सम्मतौ भावकर्मणोः घ.

इत्यजन्तौ क्वचित् पठ्येते । 'गुहा' । भिदादित्वात् अङ्कि रूपम् । 'शमरणौ संज्ञायाम्' । अजन्तावेतौ । 'संमतौ भावकर्मणोः' । शमरणावित्यनुवर्तते । शमो भावे रणः कर्मणि च निपातनादच् संमतावर्थे । 'मन्त्रः' । मन्त्रयतेरच् । शमेः क्तिच् । 'शान्तिः' । 'कामः' । 'यामः' । घञन्तौ । 'आरा' । 'धारा' । 'कारः' । ऋ गतौ । धृञ् धारणे । कॄ विक्षेपे । भिदादित्वादङि निपातनाद्वृद्धिः । 'वहः' । 'गोचरसञ्चर' इत्यादिना घः । 'कल्पः' । 'पादः' । घञ् । वृषादिषु प्रत्ययस्वरेण कामादिषु 'कर्षात्वतः' इति च अन्तोदात्तत्वं प्राप्तम्[1] । आकृतिगणोऽयम् । अथैषामुदाहरणानि— 'वृषो॑ अ॒ग्निः समि॑ध्यते' । 'जना॒ यद॒ग्निम्' । 'हयोऽसि मम भोगाय' । 'स्वे गये जागृहि[2]' । 'वेदा॒ वा ए॒ते' । 'सूदं गृहेभ्यः' । 'गुहा॒ त्रीणि' । 'शमेन शा॒न्ताः' । 'मह्रे रणाय' । 'मन्त्रो विश्वचर्षणे' । 'अ॒ग्निः शान्तिः' । 'कामो दा॒ता' । 'यामो॒ हि सः' । 'आराग्राम्[3]' । बहुव्रीहौ पूर्वपदप्रकृतिस्वरः[4] । 'वसोर्धारां[5] जुहोति' । 'पादोऽस्य॒ विश्वा भू॒तानि' इत्यादि ॥

## [८०] ॥ निष्ठा च द्व्यजनात् ॥ (6—1—205)

द्वौ अचौ यस्मिन् तत् द्व्यच् । तन्निष्ठान्तमाद्युदात्तं संज्ञायाम्, कार्यभागादिश्चेदाकारो न भवति । 'दत्तः' । 'गुप्तः' । निष्ठा किम् ? 'देवः' । द्व्यच् किम् ? 'रक्षितः' । अनात् किम् ? 'आप्तः' । घृतसितादिशब्दानां क्तान्तत्वेऽपि घृतादित्वात् अन्तोदात्तत्वम् । 'घृ॒तं वै दे॒वाः' । प्रत्ययस्वरः प्राप्तः ॥

---

1. अन्तोदात्तः प्राप्तः घ.
2. 'एते वै सर्वेऽयाः' छ. ज. अधिकम् ।
3. 'आराग्राम्' घ. नास्ति ।
4. आयामः घ. अधिकम् ।
5. कल्पान् ङ. छ. ज.

## [८१] ॥ शुष्कधृष्टौ ॥ (6—1—206)

इमौ आद्युदात्तौ । 'शुष्कस्य चार्द्रस्य च' । शुष्यतेः क्तप्रत्यये 'शुषः कः' इति कादेशे च शुष्कः । ञि धृषा प्रागल्भ्ये । धृष्टः । 'आदितश्च' इति नेट् । असंज्ञार्थं सूत्रम् ॥

## [८२] ॥ आशितः कर्ता ॥ (6—1—207)

अत्र अशेः सकर्मकत्वादप्राप्तः कर्तरि क्तः उपधादीर्घत्वमाद्युदात्तत्वं च निपात्यत इति वार्त्तिकमतम् । प्रकरणादाद्युदात्तत्वं सिद्धम् । 'आङ्पूर्वकादशेः क्तः' इति व्याख्यानात् उपधादीर्घत्वमप्यनिपात्यम् । न चैवम् अवग्रहापत्तिः ; पदस्य पौरुषेयत्वेन यथालक्षणं पदविभागस्य औचित्यात् । तस्मात् कर्तरि क्त एव निपात्यत इति भाष्यमतम् । अत्र मते थाथादिस्वरस्य अयमपवादः[1] । पूर्वत्र तु प्रत्ययस्वरस्य । यत्तु वृत्तिकृन्मतम्—

'प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया'

इति वचनात् अशेरेव अविवक्षितकर्मणो 'गत्यर्थाकर्मक' इति कर्तरि क्तः सिद्ध इति निपात्यं न किञ्चिदिति, तदयुक्तम् ; एवं सति[2] पचतिददात्यादिभ्यामपि कर्तरि क्तप्रसङ्ग इति कैयटभट्टोजिप्रभृतयः । केचित्तु अशेर्ण्यन्तात् कर्मण्येव अयं क्तः । अण्यन्ते कर्तृत्वात् भूतपूर्वगत्या कर्मैव कर्तेति व्यपदिश्यत इति वदन्ति । 'आशिता भवन्ति' । 'आशिता अभवन्' । कर्तेति किम् ? 'तन्नेवाशितं नेवानशितम्' । वार्तिकमतरीत्या इदं प्रत्युदाहरणम् । यत्तु 'आशितो भवति यावानेवास्य' इत्यत्र

---

1. अपवादोऽयम् घ. 2. एवं सति घ. नास्ति ।

वेदभाष्यम्—'आशिते भुवः' इति निपातनात् दीर्घः । [1]कर्तरि निष्ठा । ण्यन्ताद्वा कर्मणि निष्ठा । सर्वथा पृषोदरादित्वात् आद्युदात्तत्व-मिति, [2]तच्चिन्त्यम् ॥

## [८३] ॥ रिक्तो विभाषा ॥ (6—1—208)

'आद्युदात्तः' इति वर्तते । रिक्तः । 'रिक्ताय स्वाहा' इत्यत्र वैकल्पिकत्वात् अन्तोदात्तत्वम् । [3]रिक्तशब्दस्य संज्ञात्वे[4] पूर्वविप्रतिषेधात् 'निष्ठा च द्व्यजनात्' इति नित्यमाद्युदात्तत्वम् ॥

## [८४] ॥ जुष्टार्पिते च च्छन्दसि ॥ (6—1—209)

इमे शब्दरूपे[5] वा आद्युदात्ते छन्दसि । 'अग्नय एवैनां जुष्टं निर्वपति' । जुषी प्रीतिसेवनयोः । क्तः । 'श्वीदितो निष्ठायाम्' इति इण्णिषेधः । अर्तेर्णौ 'अर्तिह्री' इति पुकि 'पुगन्त' इति गुणे ततः क्तप्रत्यये च अर्पितः । 'अग्नये जुष्टं निर्वपामि' । 'जुष्टो दमूनाः' । 'वाचीमा विश्वा भुवनान्यर्पिता' इत्यादि तु मन्त्र-त्वात् उत्तरसूत्रे उदाहर्तव्यम् ; 'नित्यं मन्त्रे' इत्यारम्भेण अस्य ब्राह्मणविषयत्वात् ॥

## [८५] ॥ नित्यं मन्त्रे ॥ (6—1—210)

जुष्टार्पितयोर्द्वयोरनुवृत्तिमत्र केचिदिच्छन्ति । अन्ये तु [6]जुष्टशब्द-मेव अत्र अनुवर्तयन्ति । अर्पितशब्दस्य मन्त्रेऽपि पूर्वेण विकल्प

---

1. अकर्तरि ख.
2. तत् घ. नास्ति ।
3. रिक्तशब्दस्य घ. नास्ति ।
4. संज्ञायां तु घ.
5. शब्दरूपे घ. नास्ति ।
6. जुष्टमेव घ.

एव ; 'अर्पिताः षष्टीः' इत्यादौ मन्त्रेऽप्यन्तोदात्तदर्शनात् इति वृत्तौ । 'आरम्भसामर्थ्यादेव नित्यत्वे सिद्धे नित्यग्रहणमुत्तरार्थम्' इति हरदत्तः । 'सूत्रमेवेदं मास्तु ; पूर्वेणैव मन्त्रेऽपि उदात्तत्वसिद्धेः, छन्दसि प्रयोगस्य व्यवस्थितत्वेन विकल्पापादनायोगात्' इति सिद्धान्तकौमुद्याम्[1] ॥

## [८६] ॥ चङ्यन्यतरस्याम् ॥ (6—1—218)

चङन्तस्य उपोत्तममुदात्तं[2] स्यात् । 'मा हि चीकरत्' । 'मा हि चीकरताम्' । कारयतेर्लुङि तिप्तसौ । 'णिश्रि' इति चङ् । 'चङि' इति द्विर्वचनम् । 'णौ चङि' इति ह्रस्वः । 'सन्वल्लघुनि' इति सन्वद्भावे 'सन्यतः' इतीत्वम् । 'दीर्घो लघोः' इति दीर्घः । अत्र माङ्योगादडभावः । 'हि च' इति निघातनिषेधः । तसदुपदेशात् परत्वादनुदात्तः । प्रत्ययस्वरेण चङ एव उदात्तत्वे प्राप्ते वचनम् । 'अँहसो यत्र पीपरत्' । पारयतेः प्रक्रिया पूर्ववत् योज्या । 'वाजेषु सासहत्' । सहेश्चुरादिण्यन्तात् 'छन्दसि लुङ्लङ्लिटः' इति लुङ् । इतरत् पूर्ववत् । व्यत्ययेन अभ्यासस्य आकारः । 'बहुलं छन्दस्यमाङ्योगे' इति अडभाव इति वेदभाष्ये । उपोत्तममिति किम् ? 'मा हि स्म दधत्' । धेटः 'विभाषा धेट्श्व्योः' इति च्लेश्चङादेशः । 'आतो लोप इटि च' इत्याकारलोपः । त्रिप्रभृतीनामभावात् चङन्ते उपोत्तमं न इति नायं स्वरः ॥

## [८७] ॥ मतोः पूर्वमात् संज्ञायां स्त्रियाम् ॥ (6—1—219)

'आत्' इति शब्दस्वरूपापेक्षया नपुंसकत्वमिति तद्विशेषणत्वात् पूर्वमिति नपुंसकं निर्दिष्टम् । पूर्वं इति पुंलिङ्गपाठे 'आत्'

---

1. इति सिद्धान्तकौमुद्याम् क. नास्ति । 2. वा उदात्तं ङ. न.

इत्यपि पुंल्लिङ्ग एव । मतोः पूर्वे आकार उदात्तः, तच्चेत् मत्वन्तं संज्ञायां स्त्रियां वर्तते । 'उदुम्बरावती'। 'शरावती'। 'लघावन्ते' इति उदुम्बरशब्दे द्वितीय उदात्तः । शरशब्दे तु अबन्तत्वात् आदिः चातुरर्थिको नद्यां मतुप् । 'मतौ बह्वचोऽनजिरादीनाम्' 'शरादीनां च' इति दीर्घः । 'उत्तरावतीं वै देवा आहुतिमजुहवुः' । 'मतोः' इत्यस्मिन्नसति पूर्वग्रहणं न क्रियेत । ततश्च संज्ञाशब्दसंबन्धिन आकारमात्रस्य उदात्तता स्यादिति 'मतोः' इत्युक्तम् । मतोरव्यवहितपूर्वस्य यथा स्यादिति पूर्वग्रहणम् । तेनेह न । 'सानुमती' । संज्ञायां किम् ? 'मालावती' । आत् किम् ? 'इक्षुमती' । अस्त्रियां तु शरावान् ॥

अभिष्टुतां श्रिया गिरामधीशया च सर्वदा
वपुष्मतीं दयामुमां नमामि यत्प्रसादतः ।
चरीकरीति पद्मभूर्बरीभरीति माधवो
जरीहरीति हेलया [1]चराचारांस्त्रिलोचनः ॥

सहापवादैरिति नातिविस्तरं
निरूपितः प्रत्ययगोचरः स्वरः ।
स्वरः क्रमेणाथ समाससंश्रयो
मितैर्वचोभिर्मृदुभिर्विरच्यते ॥

॥ इति प्रत्ययस्वरप्रकरणम् ॥

---

॥ परमेश्वराय परमगुरवे नमः ॥
॥ साम्बशिवः सर्वम् ॥
॥ शङ्करः शरणम् ॥
॥ शुभमस्तु ॥

1. चराचरं ख.

## ॥ अथ समासस्वरप्रकरणम् ॥

## [८८] ॥ समासस्य ॥ (6—1—223)

अस्य अन्त उदात्तो भवति[1] । 'वैश्वदेवाग्निमारुते' । 'यद्यजमानभागम्' । वर्जने विशेषाग्रहणात् पर्यायत एकस्मिन् समासपदे[2] प्राप्तानां नानापदस्वराणामयमपवादः । वैश्वदेवाग्निमारुतशब्दौ अणन्तौ अन्तोदात्तौ । यजमानशब्दस्तु 'पूङ्यजोः शानन्' इति शानन्नन्तत्वे नित्स्वरेण शानजन्तत्वे लसार्वधातुकानुदात्तत्वात् धातुस्वरेण च आद्युदात्तः । भागशब्दः 'कर्षात्वतः' इत्यन्तोदात्तः । स्वरविधौ व्यञ्जनस्य अविद्यमानत्वात् हलन्तेऽपि समासे अन्त्यस्य अच उदात्तत्वम् । इदं तु ध्येयम्—'परमपुमान्' इत्यादौ समासान्तोदात्तत्वम् 'पुंसोऽसुङ्' इति विहितस्य असुङादेशाकारस्य[3] भवति । न च सर्वनामस्थानपरत्वापेक्षत्वेन असुङो बहिरङ्गत्वात् अन्तरङ्गोऽयं स्वरः पकारोकारस्य स्यादिति वाच्यम् ; 'सर्वनामस्थाने' इत्यस्य विषयसप्तमीत्वाश्रयणेनं असुङस्तदनपेक्षत्वात् । 'पुमान्' इत्यादौ तु पकारोकारस्य उदात्तत्वम् ; 'पूञो डुंसुन्' इति डुंसुन्प्रत्ययस्य नित्त्वसामर्थ्यादिति । एतच्च 'पुंसोऽसुङ्' इत्यत्र भाष्यादौ स्पष्टम् ॥

## (वा) ॥ इवेन समासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम् ॥

विभक्त्यलोपः, समासान्तोदात्तत्वबाधनाय पूर्वपदप्रकृतिस्वरश्च अनेन विधीयते । इवेन समासस्तु 'सह सुपा' इति योगविभागात् सिद्धः । योगविभागस्य इष्टसिद्ध्यर्थत्वात् अनित्योऽयं समासः ।

1. भवति घ. नास्ति ।
2. समस्तपदे घ.
3. असुङोऽकारस्य घ.

तेन तैत्तिरीयके 'जीमूतस्येव भवति' इत्यादौ न समासः । लोकेऽपि 'उद्बाहुरिव वामनः' इत्यादौ । अत एव व्यवहितप्रयोगः । 'वागर्थाविव' इत्यत्र इवशब्दस्तु समस्तः पृथग्वा । बह्वृचास्तु 'जीमूतस्येव' इति पदं समस्तमधीयते । जीमूतशब्दो मध्योदात्तः । 'जेर्मूट् चोदात्तः' इत्युणादिसूत्रात् जिधातोस्तन्प्रत्ययः, तस्य मूडागम उदात्तः, चात् धातोर्दीर्घः ॥

## [८९] ॥ बहुव्रीहौ प्रकृत्या पूर्वपदम् ॥ (6—2—1)

'प्रकृत्या' इत्यनेन बहुव्रीहिस्थपूर्वपदस्य व्यासदशायां यः स्वरः स लक्षणयोच्यते । उदात्तपदं स्वरितपदं च इह अनुवर्तते । तेन बहुव्रीहौ पूर्वपदं स्वस्य[1] प्रकृत्या य उदात्तः स्वरितो वा स्वरः तद्वत् भवतीत्यर्थः । समासान्तोदात्तत्वापवादः । यद्यपि 'बहुव्रीहौ पूर्वपदं प्रकृत्या भवति—विकारं नापद्यते' इति यथाश्रुतमेव स्वीकर्तुमुचितम् , एवं सति उदात्तस्वरितपदयोरपि अनुवृत्तिरनाश्रयणीया ; तयोरेव शेषनिघातलक्षणविकारप्राप्तेः , तथापि विकारप्राप्तौ विकारं नापद्यत इति वक्तव्यम् । तत्प्राप्तिश्च सति [2]समासान्तोदात्तत्वे [3]इत्ययं समासस्वरस्य अपवादो न स्यात्, तस्य उपजीव्यत्वात् । किं तु शेषनिघातलक्षणविकारस्यैव अयमपवाद इत्याशङ्क्येत इत्येवं व्याख्यातम् । 'शतवल्शं विरोह सहस्रवल्शा वियं रुहेम' । शतशब्दः फिट्स्वरेण अन्तोदात्तः । सहस्रशब्दः 'लघावन्ते द्वयोश्च' इति मध्योदात्तः । 'सगृहः सपशुः' । 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिः । 'वोपसर्जनस्य' इति सहशब्दस्य सभावः ।

1. स्वस्य घ. नास्ति ।
2. समास- ङ. नास्ति ।
3. -अन्तोदात्तत्वे । ततश्च समास- स्वरस्य नायं स्वरोऽपवादः स्यात् घ. ङ.

स च 'सहस्य सः' इत्यत्र उदात्तो निपातितः । अनिपाते तु उदात्तानुदात्तवतः सहशब्दस्य स्थाने भवन् सशब्दः स्वरितः स्यादिति षाष्ठभाष्यादौ स्थितम् । उदात्तस्वरितपदयोरिहानुवर्तनात् 'समपादः' इत्यादिबहुव्रीहौ नायं विधिः ; 'त्वत्वसमसिमेत्यनुच्चानि' इति फिट्सूत्रेण समशब्दस्य सर्वानुदात्तत्वविधानेन समशब्दे उदात्तस्वरितयोरभावात् । अत्रापि एतद्विधिप्रवृत्तौ तु 'सत्यपि संभवे बाधनं भवति' इति न्यायात् समासान्तोदात्तत्वं बाध्येत । ततश्च पादशब्दो वृषादित्वादाद्युदात्तः श्रूयेत । 'समभागः' इत्येतत्तु न उदात्तस्वरितानुवृत्तेः प्रत्युदाहरणम् ; असत्यप्यत्र समासस्वरे भागशब्दस्य 'कर्षात्वतः' इत्यन्तोदात्तत्वेन इष्टसिद्धेः ।

(वा) ॥ मातज्मातृकमातृषु ष्यङः संप्रसारणं विभाषा वक्तव्यम् ॥

बहुव्रीहावेव । कौमुदगन्ध्या माता अस्य 'कौमुदगन्धीमातः' ; 'कौमुदगन्ध्यामातः' । अत एव वचनात् मातृशब्दस्य मातजादेशः । चित्त्वसामर्थ्यात् पूर्वपदप्रकृतिस्वरं बाधित्वा अन्तोदात्तत्वम् ॥

[९०] ॥ अन्तः ॥ (6—2—92)

'उत्तरपदादिः' इत्यतः प्राक् अयमधिकारः । एतत्प्रकरणस्थेषु सूत्रेषु पूर्वपदे याः प्रथमाः ताः षष्ठ्यर्थे बोध्याः ॥

[९१] ॥ बहुव्रीहौ विश्वं संज्ञायाम् ॥ (6—2—106)

बहुव्रीहौ विश्वशब्दस्य पूर्वपदस्य अन्त उदात्तः संज्ञायाम् । 'विश्वकर्मा दिशाम्' । 'विश्वरूपो वै' । 'गन्धर्वो विश्वावसुः' ।

'विश्वस्य वसुराटोः' इति दीर्घः । विश्वं कर्म कार्यं यस्य स विश्वकर्मा । 'अशूप्रुषिलटिकणिखटिविशिभ्यः क्वन्' इति क्वन्नन्तो[1] नित्स्वरेण आद्युदात्तो विश्वशब्दः । पूर्वपदप्रकृतिस्वरे प्राप्ते अयमारम्भः । 'विश्वशंभुवः' । 'शन्नो देवा विश्वदेवाः' । 'आ विश्वदेवम्' इत्यादावपि बहुव्रीहित्वाद्विश्वशब्देऽयं स्वरः । बहुव्रीहौ किम् ? 'विश्वजनस्य छाया' ॥

## [९२] ॥ उदराश्वेषुषु क्षेपे ॥ (6—2—107)

एषु परतः पूर्वपदस्य अन्त उदात्तः क्षेपे गम्ये । 'कुण्डोदरः' । कुण्डशब्दः 'नब्विषयस्य' इत्याद्युदात्तः । नबिति नपुंसकस्य प्राचां संज्ञा । 'कटुकाश्वः' । कटुशब्दात् संज्ञायां कन् । 'निघातेषुः' । निहन्यन्तेऽनेनेति निघातः । अव्ययपूर्वपदप्रकृतिस्वरेण आद्युदात्तः इत्याहुः । क्षेपे किम् ? 'हर्यश्वाय भरता सजोषाः' । 'इन् सर्वधातुभ्यः' इति इन्नन्तो हरिशब्द आद्युदात्तः । 'अच इः' इति इप्रत्ययान्तत्वे तु वृषादिर्बोध्यः । 'तद्धर्यश्व प्रयन्धि' 'हर्यश्व हंसि' इत्यादौ तु आष्टमिक[2] आमन्त्रितनिघातः । 'क्षिप्रेषवे देवाय' 'तीक्ष्णेषवे च' इत्यादौ क्षिप्रतीक्ष्णशब्दयोरन्तोदात्ततया पूर्वपदप्रकृतिस्वरस्य अस्य च न विशेषः । 'स्फायितञ्चि' इति रक्प्रत्ययान्तः क्षिप्रशब्दः । 'तिजेर्दीर्घश्च' इति क्स्नप्रत्ययान्तः तीक्ष्णशब्दः । 'तिस्रो धात्रे पृषोदराः' । पृषन्ति उदरे यासां ताः पृषोदराः । पृषोदरादित्वादन्तलोपः । 'अनुदरः' 'सूदरः' इत्यादौ परत्वात् 'नञ्सुभ्याम्' इत्यन्तोदात्तत्वमेव । वृत्तौ तु 'उदराश्वेषुषु' इति 'क्षेपे' इति च योगद्वयमिदं व्याख्यातम् । अक्षेपार्थ आद्ययोग इति तदाशयः । एकयोगपाठस्तु भाष्ये

1. क्वन्नन्तत्वात् ग. 2. आष्टमिकः घ. नास्ति ।

स्थितः । अत एव विप्रतिषेधोपपादनावसरे तत्रोक्तम्—'उदराश्वेषुषु क्षेपे' इत्यस्य अवकाश इति । अत्र वृत्तिमते क्षेपग्रहणमनर्थकम् ; आद्ययोगेनैव क्षेपाक्षेपयोः स्वरसिद्धेः । 'हर्यश्वाय भरत' इत्यादौ अतिप्रसङ्गश्च । भाष्यमते तु क्षेपादन्यत्र मा भूदिति क्षेपग्रहणम् । अत एव नातिप्रसङ्ग इति । इदमेव[1] युक्तमिति भाष्यरत्नावल्याम् ॥

## [९३] ॥ नदी बन्धुनि ॥ (6—2—109)

'बन्धुनि' इति शब्दस्वरूपापेक्षया क्लीबत्वम् । नद्यन्तस्य अन्त उदात्तो बन्धुशब्दे उत्तरपदे । 'गार्गिबन्धुः' । गार्ग्यशब्दात्[2] यञन्तात् 'यञश्च' इति ङीप् । नदी किम् ? '[3]यो ज्येष्ठबन्धुः' । 'ज्येष्ठकनिष्ठयोर्वयसि' इति ज्येष्ठशब्दोऽन्तोदात्तः । ब्रह्मबन्धुः ॥

## [९४] ॥ निष्ठोपसर्गपूर्वान्यतरस्याम् ॥ (6—2—110)

उपसर्गपूर्वपदकस्य निष्ठान्तस्य पूर्वपदस्य अन्त उदात्तो वा । 'प्रक्षालितपादः' । 'प्रधौतमुखः' । क्षल शौचे । चुरादिः । धावु गतिशुद्ध्योः । उदित्त्वात् 'यस्य विभाषा' इति नेट् । 'छ्वोः शूठ्' । 'एत्येधत्यूठ्सु' । पक्षे पूर्वपदप्रकृतिस्वरः । प्रधौतमुखे तु 'निष्ठोपमानादन्यतरस्याम्' इति वक्ष्यमाणमुत्तरपदान्तोदात्तत्वं चेति स्वरत्रयम् । गतिस्वरेण आद्युदात्ते पूर्वपदे ॥

## [९५] ॥ उत्तरपदादिः ॥ (6—2—111)

'उत्तरपद' इति लुप्तषष्ठीकं पदम् । तच्च आपादपरिसमाप्तेरधिक्रियते । आद्याधिकारस्तु 'प्रकृत्या भगालम्' इत्येतदवधिकः ॥

---

1. तदेव घ.
2. गर्गशब्दात् घ.
3. विष्णुबन्धुः । कथं 'यो ङ. अधिकम् ।

## [ ९६ ] ॥ कर्णो वर्णलक्षणात् ॥ (6—2—112)

वर्णवाचिनो लक्षणवाचिनश्च पूर्वपदात् परस्य कर्णस्य उत्तरपदस्य आदिरुदात्तः । 'शुक्लकर्णः' । 'दात्रकर्णः' । दात्रं कर्णे यस्येति बहुव्रीहौ गड्वादित्वात् सप्तम्यन्तस्य परनिपातः । 'कर्णे लक्षणस्याविष्टाष्ट' इत्यादिना पूर्वपदस्य दीर्घः । लक्षणशब्देन च अत्र पशूनां विभागज्ञानाय दात्रशङ्कुप्रभृतिप्रतिरूपकं[1] यच्चिह्नं कर्णादिषु क्रियते तत् गृह्यते ; न तु लक्ष्यतेऽनेनेति व्युत्पत्त्या विशेषणमात्रम् । अत एव पृथग्वर्णग्रहणं कृतम् । अन्यथा विशेषणत्वादेव सिद्धे तदनर्थकं स्यात् । । तेन 'श्रुत्कर्णं सप्रथस्तमम्' इत्यादिषु नैष स्वरः । कर्ण इति किम् ? 'श्येतग्रीवः' । 'वर्णानां तणतिनितान्तानाम्' इत्याद्युदात्तः श्येतशब्दः ॥

## [ ९७ ] ॥ संज्ञौपम्ययोश्च ॥ (6—2—113)

अनयोर्यो बहुव्रीहिः तत्र कर्णस्य उत्तरपदस्य आदिरुदात्तः । 'मणिकर्णः' । 'अध्रीलोधकर्णाः' । कर्णोपरि प्ररूढकर्णा[2] इति वेदभाष्यम् । औपम्ये— 'गोकर्णः' । 'पुष्पकर्णाय स्वाहा' । पुष्पमिव कर्णौ यस्य सः पुष्पकर्णः[3] ॥

## [ ९८ ] ॥ कर्णपृष्ठग्रीवाजङ्घं च ॥ (6—2—114)

समाहारद्वन्द्वे 'स नपुंसकम्' इति क्लीबत्वम् । एषामुत्तरपदानामादिरुदात्तः संज्ञौपम्ययोर्बहुव्रीहौ । 'शितिकण्ठाः शर्वाः'

---

1. -प्रभृतिरूपकं घ.
2. इत्यर्थ इति घ. छ.
3. पुष्पकर्णः क. नास्ति ।

'शितिकण्ठाय च नमः'। 'उष्ट्रकण्ठः'। 'काण्डपृष्ठः'। 'गोपृष्ठः'। 'गोग्रीवः'। 'दशग्रीवः'। 'नाडीजङ्घः'। 'एणीजङ्घः'। संज्ञौपम्ययोः क्रमेण उदाहृतम्। अनयोरिति किम्? 'नीलपृष्ठं बृहन्तम्'। 'आग्नेयं कृष्णग्रीवम्'। 'कृषेर्वर्णे' इति नगन्तः कृष्णशब्दः। अथ[1] कथं 'नीलग्रीवो विलोहितः' 'नमो अस्तु नीलग्रीवाय' इत्यादौ पूर्वपदकृतिस्वरः? नीला ग्रीवा यस्येति संबन्धमात्रे तात्पर्यात् संज्ञारूपाविवक्षणात्, व्यत्ययाद्वा। यत्तु वृत्तौ 'सुग्रीवः' इत्युदाहृतम्, तत्र परत्वात् 'नञ्सुभ्याम्' इत्यन्तोदात्तेन भाव्यम्। यदि तु नेष्यते, तदा सूत्रे चकारः पुनर्विधानार्थ इति व्याख्येयमिति हरदत्तः॥

## [९९] ॥ शृङ्गमवस्थायां च ॥ (6—2—115)

शृङ्गस्य उत्तरपदस्य आदिरुदात्तः अवस्थायां संज्ञौपम्ययोश्च बहुव्रीहौ। 'व्यङ्गुलशृङ्गः'। अत्र गम्यमानो गवादेर्वयोविशेषोऽवस्था। 'यः सुशृङ्गः सुवृषभः' इत्यत्र तु 'नञ्सुभ्याम्' इत्येतदपवादेन 'आद्युदात्तं द्व्यच् छन्दसि' इत्यनेन शृङ्गस्य आदिरुदात्त इति बोद्धव्यम्। नाम्नि—'ऋश्यशृङ्गः'। उपमायाम्—'मेषशृङ्गः'। अवस्थादेरन्यत्र तु—'चतुरशृङ्गोऽवमीत्'॥

## [१००] ॥ शितेर्नित्याबह्वच् बहुव्रीहावभसत् ॥ (6—2—138)

शितेः परं नित्यमबह्वच् भसद्भिन्नं यदुत्तरपदं तद्बहुव्रीहौ प्रकृतिस्वरं भवति। 'शितिपाच्छित्योष्ठः शितिभ्रुः'। पादशब्दो वृषादिराद्युदात्तः। 'उषिकुषिगार्तिभ्यस्थन्' इति

1. अथ घ. नास्ति।

थन्नन्त ओष्ठशब्दो नित्स्वरः[1] । 'भ्रमेर्डूः' इति डूप्रत्ययान्तो भ्रूशब्दः । तस्य छान्दसो ह्रस्वः । शितेरिति किम् ? 'एकपादकामयत' । 'इण्भीक' इति कन्नन्त एकशब्दः । नित्येति किम् ? 'शितिककुदे स्वाहा' 'ककुदस्यावस्थायां लोपः' इति वयोविशेषे[2] लोपविधानात् अन्यत्र 'शितिककुदः' इति बह्वजयम् । अतो न नित्याबह्वच् । अबह्वजिति किम् ? 'शितिललाटः' । अभसत् किम् ? 'शितिभसत्' । 'वर्णानां तणतिनितान्तानाम्' इति शितिशब्द आद्युदात्तः ॥

## [१०१] ॥ अन्तः ॥ (6—2—143)

अधिकारोऽयम् ॥

## [१०२] ॥ बहुव्रीहाविदमेतत्तद्भ्यः प्रथमपूरणयोः क्रियागणने ॥ (6—2—162)

'प्रथम' इति स्वरूपं गृह्यते । पूरणशब्दस्य स्वरितत्वात् तदधिकारविहितानां प्रत्ययानां ग्रहणम् । इदमादिभ्यः परस्य क्रियागणनवृत्तेः प्रथमशब्दस्य पूरणप्रत्ययान्तस्य च उत्तरपदस्य अन्त उदात्तः । इदं प्रथममागमनमस्य, 'इदंप्रथमः' । 'इदंद्वितीयः' । 'इदंतृतीयः[3]' । एवम् 'एतत्प्रथमः', 'तत्प्रथमः' इत्यादि । इह समासस्य उत्तरपदस्य च[4] प्रकृतत्वेऽपि उत्तरपदमेव कार्यित्वेन आश्रीयते । तेन इदंप्रथमशब्दात् 'शेषाद्विभाषा' इति कपि 'इदंप्रथमकः' इत्यत्र मकाराकारस्य उदात्तत्वं भवति । न तु कबकारस्य ; तस्य समासान्तावयवत्वेन उत्तरपदान्त्यत्वाभावात् । समासस्य कार्यित्वे तु कबकारस्य प्रसज्येत । यद्यपि 'समासार्थोत्तरपदान्ताः

1. नित्स्वरेण ग.
2. वयसि घ.
3. एतदुदाहरणं घ. नास्ति ।
4. चेति घ.

समासान्ताः' इति पक्षे उत्तरपदस्य कार्यित्वेऽपि दोषतादवस्थ्यम् ; तथापि विशिष्टरूपग्रहणात् उपात्तयोः प्रथमपूरणयोरेव स्वरः, न तु तदन्तस्य[1] कप इत्याहुरिति दिक् ॥

## [१०३] ॥ संख्यायाः स्तनः ॥ (6—2—163)

संख्यावाचिनः परस्य स्तनशब्दस्य अन्त उदात्तः । 'द्विस्तना'। 'चतुस्तना' ॥

## [१०४] ॥ विभाषा छन्दसि ॥ (6—2—164)

पूर्वोक्तं विकल्प्यते । 'द्विस्तनां करोति' । इह अन्तोदात्तत्वम् । 'चतुस्स्तनां करोति', 'अष्टास्तनां करोति' इत्यत्र पूर्वपदप्रकृतिस्वरः ॥

## [१०५] ॥ संज्ञायां मित्राजिनयोः ॥ (6—2—165)

उत्तरपदयोरनयोरन्त उदात्तः । 'देवमित्रः' । 'मृगाजिनम्' । न चैवम् 'विश्वामित्र ऋषिः' इत्यत्रापि परत्वात् इदमन्तोदात्तत्वं प्रसज्येतेति वाच्यम् ; 'ऋषिप्रतिषेधो मित्रे' इति प्रतिषेधात् । ऋषौ समासाभिधेये मित्रशब्दे नायं स्वर इत्यर्थः । एवं च 'विश्वामित्रः' इत्यत्र 'बहुव्रीहौ विश्वम्' इति पूर्वपदान्तोदात्तत्वमेव । 'मित्रे चर्षौ' इति दीर्घः ॥

## [१०६] ॥ व्यवायिनोऽन्तरम् ॥ (6—2—166)

व्यवधातृवाचिनः परस्य अन्तरशब्दस्य अन्त उदात्तः । अन्तरशब्दात् 'तत्करोति' इति ण्यन्तात् पचाद्यच् । अन्तरं व्यव-

1. तदनन्तर्गतस्य घ.

धायकम् । वज्रमन्तरं यस्य सः 'वज्रान्तरः' । व्यवायिनः किम् ? आत्मा स्वभावः अन्तरः अन्यो यस्य सः 'आत्मान्तरः' ॥

## [ १०७ ] ॥ मुखं स्वाङ्गम् ॥ (6—2—167)

स्वाङ्गमिह 'अद्रवं मूर्तिमत्' इति पारिभाषिकं गृह्यते । स्वाङ्गवाचिनो मुखस्य उत्तरपदस्य अन्त उदात्तः । 'गौरमुखः' । स्वाङ्गं किम् ? दीर्घमुखा शाला । मुखमत्र द्वारप्रदेशः । 'विष्णुमुखा वै देवाः' । 'ब्रह्ममुखा एव' । अथ 'हिरण्याक्षो अयोमुखः' इत्यत्र कथं पूर्वपदप्रकृतिस्वरः ? व्यत्ययात् इति स्वरमञ्जर्याम् । वस्तुतस्तु 'निष्ठोपमानादन्यतरस्याम्' इति उपमानपूर्वपदविषयेऽस्य स्वरस्य विकल्पनादिति बोध्यम् । अय इव मुखं यस्य सः 'अयोमुखः' । 'असृङ्मुखो रुधिरेण' इत्यत्रापि एवमेव, व्यत्ययो वा । 'रथमुख ओजस्कामस्य' 'यज्ञमुखेयज्ञमुखे' इत्यादौ अस्वाङ्गवाचित्वेऽपि तत्पुरुषत्वात् समासान्तोदात्तत्वम् ॥

## [ १०८ ] ॥ नाव्ययदिक्शब्दगोमहत्स्थूलमुष्टिपृथुवत्सेभ्यः ॥ (6—2—168)

एतेभ्यः परस्य मुखस्य अन्त उदात्तो न । 'विश्वतश्चक्षुरुत विश्वतोमुखः' । 'प्राङ्मुखः' । 'प्रत्यङ्मुखास्तिष्ठति' इत्यत्र व्यत्ययात् स्वरद्वयम् । एवम् 'गोमुखः' इत्याद्युदाहार्यम् । अन्तोदात्तत्वे निषिद्धे पूर्वपदप्रकृतिस्वरः । विश्वतःशब्दस्तसिलन्तो लित्स्वरेण मध्योदात्तः । 'अनिगन्तोऽञ्चतौ' इति गतिस्वरेणैकादेशे च प्राङ्शब्द उदात्तः । गोमहतोरन्त उदात्तः । 'ऋज्रेन्द्र' इत्यत्र स्थूलशब्दः अन्तोदात्तो निपातितः[1] । 'मुषेः क्िच्' । मुष्टिः । 'प्रथिम्रदि' इति

---

1. निपातितः घ. नास्ति ।

कुप्रत्यये पृथुः । 'वदेः सः' । वत्सः । यत्तु—'उभयतोमुख-मृतुपात्रम्' इति अव्ययस्य उदाहृतम्, तन्न ; अत्र मुखशब्दस्य अस्वाङ्गवाचित्वेन प्राप्त्यभावात् । 'उपाग्निमुखम्' इत्यव्ययीभाव-पूर्वपदकबहुव्रीहौ 'नाव्यय' इति न निषेधः ; अव्ययीभावस्य अव्ययत्वाभावात् । 'अव्ययीभावश्च' इत्यव्ययसंज्ञासूत्रस्य तत्र भाष्ये प्रत्याख्यानात् ॥

केचित्तु—तत्प्रत्याख्यानेऽपि अव्ययीभावस्य 'नाव्यय' इत्यनेन भवति ग्रहणम् ; 'अव्ययीभावः' इति महासंज्ञाकरणस्य अन्वर्थसंज्ञाविज्ञानद्वारा अव्ययग्रहणेषु ग्रहणार्थत्वादिति वदन्ति । सर्वमेतत् 'अव्ययीभावश्च' इत्यत्र भाष्यादौ स्पष्टम् । यत्तु—'नाव्यय' इति निषेधो गतिभिन्नाव्ययपूर्वस्यैव ; 'उच्चैर्मुखः' 'नीचैर्मुखः' इति तथाविधस्यैव उदाहरणस्य वृत्तौ प्रदर्शनात् । एवं च 'संमुखानेव पशून्' इत्यत्र मुखस्वरः सिद्ध इति स्वरमञ्जर्यामुक्तम्, तदप्रमाणकम् ; 'गतिभिन्नस्य' इत्यस्य अत्र भाष्यादौ अदृष्टेः । प्रत्युदाहरणस्य दिक्प्रदर्शनपरतयापि उपपत्तेः । 'प्रमुखः' इत्यादौ 'नाव्यय' इति निषेधात् परत्वात् 'उपसर्गात् स्वाङ्गं ध्रुवम्' इत्यन्तोदात्तत्वं भवतीति 'उपसर्गात् स्वाङ्गं ध्रुवम्' इत्यत्रत्य-भाष्यविरोधाच्च । गतिभिन्नत्वविशेषणे 'प्रमुखः' इत्यत्र 'नाव्यय' इति निषेधाप्रवृत्तौ विप्रतिषेधानवकाशात् । 'संमुखानेव' इत्यत्र तु 'उपसर्गात् स्वाङ्गं ध्रुवम्' इत्यन्तोदात्तत्वम्, व्यत्ययेन वा ॥

## [१०९] ॥ निष्ठोपमानादन्यतरस्याम् ॥ (6—2—169)

निष्ठान्तात् उपमानवाचिनश्च परस्य मुखशब्दस्य वा अन्त उदात्तः । 'प्रक्षालितमुखः' । पक्षे 'निष्ठोपसर्गपूर्वा' इति पूर्वपदा-

न्तोदात्तत्वम्, तदभावे पूर्वपदप्रकृतिस्वरः इति त्रैस्वर्यमित्युक्तम्। उपमानात्—'सिंहमुखः'। 'हिरण्याक्षो अयोमुखः'। हिंसेः पचाद्यच्। सिंहः[1]। पृषोदरादित्वात्[2]। गौरिव मुखं यस्य 'गोमुखः'। 'मुष्टिमुखः'। 'वत्समुखः'। एषु उपमानलक्षणो विकल्पः पूर्वविप्रतिषेधेन 'नाव्ययदिक्शब्द' इति निषेधेन बाध्यत इति वृत्तिकारः। गौर्मुखमिव यस्य इत्यादि निषेधस्य अवकाशः; इह गवादेरुपमेयत्वेन उपमानलक्षणविकल्पानवकाशात्॥

## [११०] ॥ जातिकालसुखादिभ्योऽनाच्छादनात् क्तोऽकृतमितप्रतिपन्नाः ॥ (6—2—170)

आच्छादनवाचकभिन्नाज्जातिवाचिनः कालवाचिनः सुखादिभ्यश्च परस्य कृतादिभिन्नस्य क्तान्तस्य उत्तरपदस्य अन्त उदात्तः। 'पलाण्डुभक्षितः[3]'। 'मासजातः[4]'। 'सुखयातः'। जात्यादेः किम्? 'पुत्रजातः'। अनाच्छादनात् किम्? 'वस्त्रच्छन्नः'। 'अकृत' इत्यादि किम्? 'कुण्डकृतः' इत्यादि। 'हविष्कृतो वा एषः'। हविष्टं कृतं यस्य सः हविष्कृतः। हविश्शब्दो भावप्रधानः। हविष्ट्वेन कृतो निष्पन्न इति तृतीयासमासे तु नेदं प्रत्युदाहरणम्। 'तृतीया कर्मणि' इति च पूर्वपदप्रकृतिस्वरत्वम्। अत एव लिङ्गात् उक्तस्थले सर्वत्र बहुव्रीहौ निष्ठान्तस्य परनिपातः॥

---

1. सिंहः घ. नास्ति।
2. पृषोदरादिः छ.
3. फलभक्षितः ख. पलण्डुभक्षितः घ.
4. मासवातः क. मासयातः ख.

## [१११] ॥ वा जाते ॥ (6—2—171)

जात्यादिभ्यः परस्य जातस्य वा अन्त उदात्तः । पूर्वेण प्राप्तस्य विकल्पः । 'दन्तजातः' । 'मासजातः[1]' । 'सुखजातः' । 'ये देवा मनोजाताः' । जातं मनो येषां ते मनोजाताः प्राणाः ; 'प्राणा वै देवा मनोजाताः' इति वाक्यशेषात्[2] । मनोव्यापारमन्तरेण तेषां स्वकार्यकरणाभावादिति वेदभाष्यम् । 'देवजाताय केतवे' । दन्तशब्दः 'स्वाङ्गशिटाम्' इत्याद्युदात्तः । मासशब्दो ग्रामादिः । तत आद्युदात्तः[3] । सुखदुःखतृप्रकृच्छ्र-प्राण्यस्रालीकप्रतीपकरुणाश्च कृपणः सोढ इति इमे दशसंख्याकाः सुखादयः पठिताः[4] । 'खान्तस्याश्मादेः' इति सुखदुःखशब्दौ अन्तोदात्तौ । तृपेः 'स्फायितञ्चि' इति रकि 'तृप्रः' । 'कृतेश्छः क्रू च' इति रकि 'कृच्छ्रम्' । असेर्बाहुलकात् रकि 'अस्रम्' । 'अलीकादयश्च' इति कनि 'अलीकम्' । प्रतिगताः आपोऽत्र 'प्रतीपम्' । 'कृवृदारिभ्य उनन्' । 'करुणः' । 'कृपेः क्युन्' । 'कृपणः' । सहेः क्तः । 'सोढः' । यत्तु 'सजातानस्मै यजमानाय' इत्यत्र वेदभाष्यम्—समानं[5] जन्म येषां ते सजाताः । 'समानस्य च्छन्दसि' इति सभावः । 'वा जाते' इति अन्तोदात्तत्वम्[6] । समानशब्दस्य जातिकालवाचित्वाभावात् सुखादित्वं बोध्यमिति[7] । सुखादिराकृतिगण इति तदाशयः ॥

---

1. मासजातः घ. नास्ति ।
2. वक्ष्यमाणवाक्यशेषात् क.
3. तत आद्युदात्तः क. ख नास्ति ।
4. पठिताः घ. नास्ति ।
5. समानं जात ङ.
6. इति दिक् क. अधिकम् ।
7. इति घ. नास्ति ।

## [११२] ॥ नञ्सुभ्याम् ॥ (6—2—172)

आभ्यामुत्तरपदस्य अन्त उदात्तः । 'अमुखाय स्वाहा' । 'अप्राणाय स्वाहा' । 'सुपिप्पला ओषधयः' । 'स्वधिचरणेयम्' इत्यादि । अत्र समासस्यैव कार्यित्वम् ; न उत्तरपदस्य । तेन 'अनृचः' इत्यादौ 'ऋक्पूः' इत्यादिना विहितस्य समासान्तस्य उदात्तत्वं सिद्धम् । उत्तरपदस्य कार्यित्वे तु तन्न स्यात् ; तस्य उत्तरपदान्तत्वाभावात् । 'समासार्थोत्तरपदान्ताः समासान्ताः' इति पक्षे तु उत्तरपदस्य कार्यित्वेऽपि न दोषः ॥

## [११३] ॥ कपि पूर्वम् ॥ (6—2—173)

नञ्सुभ्यां परस्य कपि पूर्वस्य अन्त उदात्तः । 'अकुमारीकः' । 'सुकुमारीकः' । 'नद्यृतश्च' इति कप् । 'अथ ब्राह्मणोऽनाशीर्कीण' । 'शेषाद्विभषा' इति कप् । रेफस्य विसर्गाद्यभावश्छान्दसः । पूर्वत्र समासस्य कार्यित्वमुक्तम् । तेन समासान्तस्य कप उदात्तत्वे प्राप्तेऽयमारम्भः । इदमेव पूर्वत्र समासस्य कार्यित्वे लिङ्गम् । उत्तरपदस्य कार्यित्वे हि पूर्वेणैव अत्र कपः पूर्वस्य उदात्तत्वसिद्धेरिदमनर्थकम्[1] ॥

## [११४] ॥ ह्रस्वान्तेऽन्त्यात् पूर्वम् ॥ (6—2—174)

नञ्सुभ्यां परे ह्रस्वान्ते उत्तरपदेऽन्त्यात् पूर्वमुदात्तं भवति कपि परे । 'कपि' इति पृथग्ग्रहणात् तद्व्यतिरिक्तमेव उत्तरपदं गृह्यते । 'अयवको देशः' । 'सुयवकः' । यकाराकार उदात्तः । 'कपि पूर्वम्' इत्यस्य अयमपवादः । एवं च तद्दीर्घान्तविषयम् ।

1. इति घ. अधिकम् ।

एवं च 'अदन्तकाय स्वाहा', 'अमांसकाय स्वाहा' इत्यादि यत् पूर्वसूत्रे स्वरमञ्जर्यामुदाहृतम्, तच्चिन्त्यम् । स्वरनिर्वाहस्तु व्यत्ययात् । 'पूर्वम्' इति वर्तमाने पुनः पूर्वग्रहणम् आवृत्त्या ह्रस्वान्तेऽन्त्यात् पूर्वमेव उदात्तम्, न तु 'कपि पूर्वम्' इत्येतत् प्रवर्तते इति नियमप्रतिपत्त्यर्थम् । तेन न अस्य ज्ञो विद्यते 'अज्ञकः' 'सुज्ञकः' इत्यादौ 'कपि' इत्यस्य अप्रवृत्त्या 'नञ्सुभ्याम्' इति कबन्तस्य उदात्तत्वं भवति । नियमाभावे तु 'अज्ञः' इत्यादौ उत्तरपदेऽन्त्यात् पूर्वाभावेन प्रकृतसूत्राप्रवृत्तौ 'कपि पूर्वम्' इत्येतत् प्रसज्येत इत्याहुः । अन्तग्रहणं तु चिन्त्यप्रयोजनम् । न च 'ह्रस्वेऽन्त्यात् पूर्वम्' इत्युक्तौ 'यस्मिन् विधिः' इति तदादिविधि-प्रसङ्गः; 'ह्रस्वस्यान्त्यात् पूर्वम्' इत्युक्तावपि[1] इष्टसिद्धेरित्याहुः ॥

## [११५] ॥ नञो जरमरमित्रमृताः ॥ (6—2—116)

नञः परेषामुत्तरपदानामेषामादिरुदात्तः । 'नञ्सुभ्याम्' इत्यस्य अपवादः । 'अश्याम द्युम्नमजराजरन्ते' । 'अजर' इत्यस्य आमन्त्रितस्य आष्टमिको निघातः । 'अजरम्' इत्युदाहरणम् । 'अजरासस्ते सख्ये स्याम' । 'अमरः' । 'अमित्रमर्दय' । 'अमित्रस्य व्यथय' । 'अमृतं हिरण्यममृतं एव' । जीर्यतेर्भावे ऋदोरप् । 'जरः' । मृङोऽप्यत एव निपातनादप् । 'मरः' । मिदेर्भावे क्तः । 'मित्रः' । मृङो भावे निष्ठा । 'मृतम्' । ततो बहुव्रीहिः । 'अमे द्विषति चित्' इति चित् । 'अमित्रः' । अयमन्तोदात्तः । सुहृद्वाचिना मित्रशब्देन नञ्तत्पुरुषे 'अमित्रम्' । आद्युदात्तः । नञः किम् ? 'सुमित्रा न आपः' । जरादयः किम् ?

1. उक्त्यापि घ.

'अरतिः सुमेधाः' । अत्र 'नञ्सुभ्याम्' इति स्वरः । 'दुर्मित्रास्तस्मै भूयासुः' । छान्दसमत्र अन्तोदात्तत्वमिति वेदभाष्ये ॥

## [११६] ॥ सोर्मनसी अलोमोषसी ॥ (6—2—117)

सोरुत्तरस्य मन्नन्तस्य असन्तस्य च आदिरुदात्तः लोमन्-शब्दमुषस्शब्दं च वर्जयित्वा[1] । 'उरुक्षितिं सुजनिमा चकार' । 'जनिवृङ्भ्यामिमनिन्' इति जनेरौणादिके इमनिनि जनिमन्शब्दः । ततः सुना बहुव्रीहिः । 'स्तीर्णं बर्हिः सुष्टरीमा जुषाणा' । 'हृभृधृसृस्तृशृभ्य इमनिच्' इति इमनिच्प्रत्ययान्तः स्तरीमन्शब्दः । बहुव्रीहिः । सुषामादित्वात् षत्वम् । शोभनास्तरणं स्तीर्णं बर्हिरित्यन्वयः । 'सुत्रामाणं पृथिवीं द्याम्', 'सुशर्माणमदितिम्' इत्यादिकं तु 'आद्युदात्तं द्व्यच् छन्दसि' इत्यनेनापि सिध्यतीति न इह उदाहर्तव्यम् । अत एव 'सुवर्चा वर्चसा', 'सुमना उपागहि' इत्यादिकमसन्तस्य नोदाहरणम् । 'सुस्रत्' 'सुध्वत्' इत्यत्रापि अयं स्वरः ; 'वसुस्रंसु' इति दत्वस्य असिद्धत्वेन असन्तत्वात् । न च 'सुजनिमा' इत्यादौ मनोऽनर्थकत्वादेव न ग्रहणम् ; 'अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च' इति वचनात् । सोरिति किम् ? 'प्रचेतास्त्वा' । मनसी इति किम् ? 'सुपिप्पला ओषधयः' । लोमोषसोस्तु—'सुलोमा' । 'सूषाः' । लूञो मनिनि 'लोम' । 'उषः कित्' इति असिप्रत्यये 'उषः' । 'नञ्सुभ्याम्' इत्यस्य अपवादोऽयम् । 'कपि पूर्वम्' इत्येतत्तु परत्वादेतं बाधते । 'सुपयस्कः' । 'सुशर्मकः' ॥

1. विना घ.

## [११७] ॥ क्त्वादयश्च ॥ (6—2—118)

सोः परेषामेषामादिरुदात्तः । 'सुक्रतुः क्रुपा सुवः' । 'सुदृशीको अस्मे' । 'सुप्रतीकः पुरस्तात्' । 'अदितिं सुप्रणीतिम्' । 'सुप्रतूर्तिर्मघोनी' ॥

## [११८] ॥ आद्युदात्तं द्व्यच् छन्दसि ॥ (6—2—119)

सोरुत्तरं द्व्यच् आद्युदात्तं यदुत्तरपदं तस्य आदिरुदात्तो भवति च्छन्दसि । 'स्वश्वास्त्वा सुरथा मर्जयेम' । 'सूनव आसुशेवः' । 'अशूप्रुषिकणिखटिलटिविशिभ्यः क्वन्' इति क्वन्प्रत्ययान्तः अश्वशब्दः । 'हनिकुषिनीरमिकाशिभ्यः क्थन्' इति क्थनि 'रथः' । 'शेवयह्व' इति वन्प्रत्ययान्तः शेवशब्दः । आद्युदात्तमिति किम् ? 'या सुपाणिः स्वङ्गुरिः' । द्व्यजिति किम् ? 'सुहिरण्यो अग्ने' । 'नब्विषयस्य' इति हिरण्यशब्द आद्युदात्तः । यत्तु 'यास्ते राके सुमतयः सुपेशसः' इत्युदाहरणम्, तच्चिन्त्यम् ; 'सुमतयः' इत्यस्य अन्तोदात्तत्वेन श्रवणात् । मतिशब्दस्य 'मन्त्रे वृष' इत्यन्तोदात्तत्वविधानात् । मन्त्रार्थपर्यालोचनया[1] शोभना मतयः 'सुमतयः' इति तत्पुरुषत्वाव-गमाच्च । अत एव कृत्स्वरेण अन्तोदात्तता । न च 'सुपेशसः' इत्युदाहरणम् ; 'सोर्मनसी' इत्यनेन गतार्थत्वात् । यत्तु 'सुमतिशब्दे "मन्क्तिन्व्याख्यान" इत्यन्तोदात्तत्वम्' इति वेदभाष्यम्, तच्चिन्त्यम् ; तत्र 'कारकात्' इत्यनुवृत्तेः सोर्गतित्वात् ॥

---

1. अत्र अर्थपर्यालोचनया घ.

## [११९] ॥ वीरवीर्यौ च ॥ (6—2—120)

सोरुत्तरयोरनयोरादिरुदात्तश्छन्दसि । 'सुवीरासो अदाभ्यम्' । 'बर्हिषदं सुवीरम्' । 'सुवीर्यस्य पतयः स्याम' । 'अस्मे वर्चः सुवीर्यम्' । वीर विक्रान्तौ । चुरादिः । पचाद्यच् । वीरयतेः 'अचो यत्' इति यति वीर्यशब्दात् 'तत्र साधुः' इति यति[1] वीर्यशब्दः । न च अस्य 'यतोऽनावः' इति आद्युदात्तत्वात् पूर्वेण गतार्थत्वम् ; अत एव वीर्यग्रहणाच्छन्दसि वीर्यशब्दे 'यतोऽनावः' इति न प्रवर्तत इति ज्ञापनात् । तेन 'वीर्यं वृङ्क्ते' इत्यादौ अन्तस्वरितत्वं सिद्धम् । लोके तु वीर्यशब्द आद्युदात्त एव । अत एव फिषि 'बिल्वबर्स्ववीर्याणि छन्दसि' इति छन्दस्येव अन्तस्वरितत्वमस्य विहितम् ॥

## [१२०] ॥ बहोर्नञ्वदुत्तरपदभूम्नि ॥ (6—2—175)

उत्तरपदशब्द उत्तरपदार्थपरः । बहोर्भावो भूमा बहुत्वम् । 'बहोर्लोपो भू च बहोः' । उत्तरपदार्थबहुत्ववृत्तेः बहोरुत्तरस्य नञः परस्येव स्वरो भवति । 'नञ्सुभ्याम्' इत्युक्तं बहोरपि भवति । 'बहुग्वै बह्वश्वायै बह्वजाविकायै' । 'अवेः कन्' इति स्वार्थे कनि अविकः, न त्वयं कप् । 'कपि पूर्वम्' इत्युक्तम् बहोरपि । 'बहुकुमारीकः' । 'ह्रस्वान्तेऽन्त्यात् पूर्वम्' बहोरपि । 'बहुयवकः' । 'बहुहस्तिकायै' इत्यत्र ह्रस्वान्तेऽपि 'कपि पूर्वम्' इत्येतदेव, व्यत्ययात् । 'नञ्सुबहुभ्य उत्तरपदभूम्नि' इति नञादावेव बहुशब्दे पठितव्ये 'नञ्वत्' इत्यतिदेशो विदेशस्थस्यापि 'नञो जरमर' इत्युत्तरपदाद्युदात्तत्वस्य बहोरुत्तरस्मिन् प्रापणाय । तेन 'बहुजरः' 'बहुमरः' इत्यादौ 'नञो जरमर' इति स्वरसिद्धिः ।

1. वा ङ.

न चैवं नञादौ बहुशब्दपाठे 'उत्तरपदभूम्नि' इत्येतन्नञादावपि अन्वियात् इति वाच्यम्; संभवव्यभिचाराभ्यां तस्य बहुशब्दविशेषणत्वोपपत्तेः। अत एव 'न गुणादयः' इति वक्ष्यमाणनिषेधो नञ्सुभ्यामपि स्यात् इति निरस्तम्। 'उत्तरपदभूम्नि' इत्यस्य अनुवृत्त्या तस्य बहुविषयत्वसिद्धेः। तस्मात् उक्तमेव अतिदेशफलम्। तथा च वार्त्तिकम् —

॥ बहोर्नञ्वदुत्तरपदाद्युदात्तार्थम् ॥

इति। 'अचितीकः' 'बहुचितीकः' इत्यत्र 'चितेः कपि' इति सत्यपि दीर्घे 'अचः परस्मिन्' इति स्थानिवत्त्वात् 'ह्रस्वान्तेऽन्त्यात् पूर्वम्' इत्येतद्भवतीति कैयटादयः ॥

## [१२१] ॥ न गुणादयोऽवयवाः ॥ (6—2—176)

बहोः परेषामेषामवयवार्थानां गुणादीनां नञ्वत् अतिदेशो न। 'बहुगुणा रज्जुः'। गुण संख्याने। चुरादेरदन्तादेरच्। 'अशेः सरन्'। 'अक्षरम्'। छन्दो मीयते येन तत् 'छन्दोमानम्'। सुपूर्वाद्वचेः क्तः। 'सूक्तम्'। 'इङश्च' इति घञ्। 'अध्यायः'। एते गुणादयः। आकृतिगणोऽयम्। अवयवा इति किम्? 'बहुगुणो द्विजः'। विद्यात्तादयोऽत्र गुणाः ॥

## [१२२] ॥ उपसर्गात् स्वाङ्गं ध्रुवमपर्शु ॥ (6—2—177)

उपसर्गग्रहणं प्राद्युपलक्षणम्; स्वाङ्गं प्रति क्रियायोगाभावात्। प्रादेः परस्य ध्रुवं नित्यमेकरूपं यत् स्वाङ्गं तद्वाचिनः पर्शुभिन्नस्य अन्त उदात्तः। 'निर्ललाटः'। ललाटस्य नित्यमनिर्गमनात् ध्रुवत्वम्? ध्रुवं किम्? 'उद्बाहुः' क्रोशति। क्रोशनसमये

एव बाह्वोरूर्ध्वत्वम्, न सर्वदा । अपर्शु किम् ? 'उत्पर्शुः' । पर्शुः पार्श्वास्थि । 'प्रमुखः' इत्यादावपि अयं स्वरः ; 'मुखं स्वाङ्गम्' इत्येतस्यैव 'नाव्यय' इति निषेधात् । 'संमुखानेव पशून्' इत्यत्रापि अनेनैव अन्तोदात्तत्वमित्युक्तम् ॥

## [१२३] ॥ द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ ॥
(6—2—197)

द्वित्रिभ्यां परेषु पाद्दन्मूर्धसु यो बहुव्रीहिः तत्र वा अन्त उदात्तः । 'द्विपाद्यजमानः प्रतिष्ठित्यै' । 'द्विपदी त्रिपदी' । 'त्रिपदा गायत्री' । एष्वन्त उदात्तः । 'संख्यासुपूर्वस्य' इति पादशब्दान्तस्य लोपः । 'पादोऽन्यतरस्याम्' इति ङीप् । 'टाबृचि' । 'पादः पत्' । 'द्विदन्' । 'त्रिदन्' । 'वयसि दन्तस्य दतृ' । 'द्विमूर्धा' । 'त्रिमूर्धा' । समासान्तविधेरनित्यत्वात् 'द्वित्रिभ्यां ष मूर्ध्नः' इति नात्र षप्रत्ययः । तदनित्यत्वे च 'मूर्धसु' इति निर्देशो लिङ्गम् । इतरथा 'मूर्धेषु' इति स्यात् । न च अकृतसमासान्तस्य मूर्धशब्दस्य निर्देशात् 'द्विमूर्धः' इत्यादौ कृतसमासान्ते नायं स्वरः स्यादिति वाच्यम् ; मूर्धन्-शब्दघटितबहुव्रीहिविशेषस्य अत्र कार्यित्वात् समासान्तस्य समासावयवत्वेन कृतेऽपि तस्मिन् तस्य तादृशबहुव्रीहित्वानपायात् इति । द्वित्रिभ्यां किम् ? 'चतुष्पादः पशवः' । 'अन्यतोदन्तश्चो भूयान्' ॥

## [१२४] ॥ सक्थं चाक्रान्तात् ॥ (6—2—198)

क्रशब्दान्तभिन्नात् परः कृतसमासान्तः सक्थशब्दो वा अन्तोदात्तः । 'गौरसक्थः' । 'पृश्निसक्थमालभेत' । 'लोमशसक्थौ' ।

'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्' इति षचि चित्स्वरेण नित्यमन्तोदात्तत्वे प्राप्ते विकल्पोऽयम् । अक्रान्तात् किम् ? 'चक्रसक्थः' ॥

## [१२५] ॥ परादिश्छन्दसि बहुलम् ॥ (6—2—199)

परशब्देन अत्र सक्थशब्द उच्यते : तस्यैव पूर्वसूत्रे सन्निहितत्वात् । न चैवम् 'पर' इति व्यर्थम् , अनुवृत्त्यैव सक्थशब्दलाभादिति वाच्यम् ; बहुव्रीहेरपि प्रकृतत्वेन तस्यापि अत्र आद्युदात्तत्वं विधीयत इति शङ्कानिवर्तकत्वात् । छन्दसि सक्थ-शब्दस्य आदिरुदात्तो बहुलम् । बहुलग्रहणात् 'अञ्जिसक्थाय' इत्यादौ सक्थस्य अन्त उदात्तः । 'विभाषा' इति प्रकृते बहुलग्रहणं छन्दसि अन्यत्रापि स्वरस्य व्यत्ययसिद्धये । तेन

''[1]परादिश्च परान्तश्च पूर्वान्ता अपि दृश्यते ।
पूर्वादयश्च दृश्यन्ते व्यत्ययो बहुलं ततः ॥'

इत्यादि सिद्धमिति ॥

॥ इति बहुव्रीहिस्वरप्रकरणम् ॥

---

1. 'परादिश्च परान्तश्चापि दृश्यते' । 'व्यत्ययो बहुलम्' 'ततो बहुलं तणि' 'पूर्वान्तश्चापि पूर्वादिश्चापि दृश्यन्ते' । क. ख. ग. च. छ. ज.

## [१२६] ॥ तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्यय-द्वितीयाकृत्याः ॥ (6—2—2)

तुल्यार्थादीनि सप्त पूर्वपदानि प्रकृतिस्वराणि भवन्ति तत्पुरुषे । 'समासस्य' इत्यस्य अपवादः । 'तुल्यश्वेतः' । 'कृत्यतुल्याख्या अजात्या' इति कर्मधारयः । तुलया सम्मितः 'तुल्यः' । 'नौवयोधर्म' इति यत् । 'यतोऽनावः' इत्युदात्तः[1] । किरिणा काणः 'किरिकाणः' । 'तृतीया तत्कृत' इति समासः । यत्तु 'वरुणगृहीतम्' 'यदशनिहतस्य' इति स्वरमञ्जर्यामुदाहरणम्[2], तन्न ; 'तृतीया कर्मणि' इति [3]ह्यत्र पूर्वपदप्रकृतिस्वरः । [4]एतत्सूत्र-प्राप्तेः कृत्स्वरेण थाथादिस्वरेण च बाधितत्वात् । अक्षेषु शौण्डः 'अक्षशौण्डः' । 'अशेर्देवने' इति सप्रत्ययान्तोऽक्षशब्दः । 'सारागवस्त्रैर्जरदक्षः' । जले दक्षः समर्थो जलदक्षः वसन्त उच्यते, सर्वप्राणिनां[5] तत्र जलप्रियत्वात् । सप्तमीपूर्वपदप्रकृति-स्वरः' इति वेदभाष्यम् । यत्तु 'देवकृतमेनोऽयाडवमर्त्यैर्मर्त्यकृतम्' इत्यत्र वेदभाष्यम् 'देवेषु कृतं देवकृतम्, सप्तमीपूर्वपदप्रकृतिस्वरः' इति, तच्चिन्त्यम् ; परत्वात् कृत्स्वरेण अस्य[6] बाधात् । तस्मात् देवेषु कृतं करणं यस्य इति बहुव्रीहौ पूर्वपदप्रकृतिस्वरः । 'देवकृतस्यैनसः' इत्यत्र वेदभाष्य एव पक्षान्तरं[7] दर्शितम्—

---

1. इत्याद्युदात्तः क. ख.
2. स्वरमञ्जर्युदाहरणम् घ.
3. हि घ. नास्ति ।
4. हेतौ तृतीया वा तृतीया-तत्सूत्रप्राप्तेः घ.
5. उच्यते, सर्वप्रजानां घ. ङ.
6. अत्र क.
7. पक्षान्तरमपि क.

देवादिभिरस्मद्विषये यत् कृतम् एनःफलं दुःखम् । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वर इति । मर्तशब्दात् 'नवसूरमर्तयविष्ठेभ्यः' इति स्वार्थे यति 'यतोऽनावः' इति आद्युदात्तो मर्त्यशब्दः । कर्कन्धुवत् रोहितः 'कर्कन्धुरोहितः' । 'शुकबभ्रुः' । 'लघावन्ते' इति मध्योदात्तः कर्कन्धुशब्दः । शुकशब्दः कन्नन्तः । अव्यये परिगणनं कृतम् 'अव्यये नञ्कुनिपातानाम्' इति । 'अब्राह्मणश्च प्रश्नमेयाताम्' । 'कुब्राह्मणः' । 'देवासुराः संयत्ता आसन्' । सम्यक् यत्ताः संयत्ताः इति प्राचार्यादिवत् प्रादिसमासः । तेन न कृत्स्वरः शङ्क्यः । यत्तु गतिसमासे 'गतिरनन्तरः' इति प्रकृतिस्वर इति, तन्मन्दम् ; 'गतिरनन्तरः' इत्यत्र 'कर्मणि क्तः' इत्यनुवृत्तेः । 'सुहोता सूद्गाता' । 'सुः पूजायाम्' इति कर्मप्रवचनीयत्वात् न सोर्गतित्वम् । 'अधिपतिः' । परिगणनात् इह न, 'स्नात्वाकालकः' । मयूरव्यंसकादिः । एवं सति तत्रैव अन्तोदात्तत्वनिपातनादिष्टसिद्धेः परिगणनं मास्त्विति भाष्यम् । 'सामिकृतम्' 'स्वयंधौतम्' इत्याद्यर्थं परिगणनमावश्यकम् इति तु[1] हरदत्तादयः । एवं च 'स्वयंकृता वेदिर्भवति' इत्यादावपि अन्तोदात्वं सिद्धम् इति मन्तव्यम् । निपातत्वादेव सिद्धे नञ्ग्रहणम् 'अकरणिः' इत्यादौ परमपि कृत्स्वरादिकं बाधित्वा नञ्स्वरप्रवृत्तय इत्युक्तम् । कुशब्दस्तु अत्र न पठितव्यः ; अव्ययसंज्ञार्थं चादिषु तस्य पठितव्यत्वेन निपातत्वादेव सिद्धेः । 'अपथात् पन्थामपिनयति[2]' । न च अत्र 'ऋक्पूरप्' इति समासान्तप्रत्ययस्वरेण नञ्स्वरबाधः[3] सतिशिष्टत्वात् इति वाच्यम् ; 'बहुव्रीहौ सङ्ख्येये डजबहुगणात्' इत्यत्र डचश्चित्त्वेन लिङ्गेन स्वरविधेः प्राक्

1. तु घ. नास्ति ।
2. -यन्ति क.
3. समासान्तप्रत्ययस्य स्वरो नञ्स्वरबाधकः घ.

समासान्तप्रवृत्तेः । अन्यथा सतिशिष्टत्वात् प्रत्ययस्वरे सति किं चित्त्वेन ? मुहूर्तं सुखं 'मुहूर्तसुखम्' । 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया । 'अत्यन्तसंयोगे च' इति द्वितीयातत्पुरुषः । मुहूर्तशब्दः पृषोदरादिरन्तोदात्त इति वृत्तौ । यत्तु 'अन्तंगता दहति' इत्युदाहृतम्, तन्न; कृत्स्वरेण बाधात् । 'अहीने द्वितीया' इति सूत्रेण च अत्र पूर्वपदप्रकृतिस्वर इति वक्ष्यते । 'अन्तगताः' इत्यत्र द्वितीयापूर्वपदप्रकृतिस्वर इति वेदभाष्यमपि 'अहीने द्वितीया' इति सूत्रेणेति योज्यम् । 'भोज्योष्णम्' । 'कृत्यतुल्याख्याः' इति कर्मधारयः । अयमेव कृत्यसमासोऽत्र गृह्यते प्रतिपदोक्तत्वात् इति वृत्तिकृत् । भाष्ये तु एतन्नाश्रितम् । अत एव कुरुगार्हपतसूत्रे पण्यकम्बलग्रहणं नियमार्थम्; 'द्वितीयाकृत्या' इत्येव[1] पूर्वपदप्रकृतिस्वरस्य प्राप्तत्वात् इति तत्र भाष्यकृतः । अत्र च [2]लक्षणप्रतिपदोक्तपरिभाषया तृतीयादिशब्दमुच्चार्य विहितस्तृतीयातत्पुरुषादिरेव गृह्यते । तेन 'उत्तरवेद्याः' 'उत्तरवेद्याम्' 'उत्तरवेदिम्' इत्यादौ 'विशेषणं विशेष्येण' इति समासे न तृतीयातत्पुरुषादिस्वरः । अन्यथा विशेषणसमासः प्रथमान्तानामेव इत्यत्र मानाभावात् तृतीयाद्यन्तमत्र पूर्वपदमिति तृतीयातत्पुरुषादिस्वरः प्राप्नुयात् ॥

॥ इति तत्पुरुषे पूर्वपदप्रकृतिस्वरप्रकरणम् ॥

——

1. एव घ. नास्ति । 2. लक्षण- घ. नास्ति ।

॥ अथ तृतीयापूर्वपदप्रकृतिस्वरापवादः ॥

## [१२७] ॥ ऊनार्थकलहं[1] तृतीयायाः ॥ (6—2—153)

तृतीयान्तात् परस्य ऊनार्थशब्दस्य[2] कलहशब्दस्य च अन्त उदात्तः । 'माषोनः' । 'माषविकलः' । 'असिकलहः' । 'पूर्वसदृश' इति समासः । इह 'अर्थ' इति स्वरूपग्रहणमित्येके । धान्येन अर्थो 'धान्यार्थः' । अत्र पक्षे व्याख्यानात् 'ऊन' इत्यर्थग्रहणम् । तृतीयाग्रहणं विस्पष्टार्थम् ; प्रतिपदोक्तत्वादेव तृतीयासमासग्रहणसिद्धेरित्याहुः ॥

## [१२८] ॥ मिश्रं चानुपसर्गमसन्धौ ॥ (6—2—154)

तृतीयान्तात् परस्य उपसर्गरहितस्य मिश्रशब्दस्य अन्त उदात्तः असन्धौ गम्ये । 'नीतमिश्रेण तृतीयसवने' । 'दध्ना मधुमिश्रेण' । अनुपसर्गग्रहणं ज्ञापकम् 'अन्यत्र मिश्रग्रहणे सोपसर्गस्यापि ग्रहणम्' इत्यर्थे[3] । तेन 'पूर्वसदृश' इति समासः सम्मिश्रादिनापि[4] भवति । 'गुडसम्मिश्रः' । असन्धौ किम् ? 'ब्राह्मणमिश्रो राजा' । 'यदि मे भवानिदं कुर्यात् अहमपि भवत इदं करिष्यामि' इत्येवं पणबन्धेन ऐकार्थ्यापत्तिः सन्धिः, तमापन्नो राजा इत्यर्थः ॥

॥ इति तृतीयापूर्वपदप्रकृतिस्वरापवादः ॥

---

1. -कलहं- घ.
2. ऊनार्थस्य घ.
3. अर्थे क. नास्ति ।
4. अपि क. नास्ति ।

## ॥ अथ सप्तमीपूर्वपदप्रकृतिस्वरापवादः ॥

### [१२९] ॥ सप्तम्याः पुण्यम् ॥ (6—2—152)

सप्तम्यन्तात् पुण्यस्य[1] अन्त उदात्तः । अध्ययने पुण्यम्[2] 'अध्ययनपुण्यम्' । 'सप्तमी' इति योगविभागात् समासः । सप्तमीपूर्वपदप्रकृतिस्वरापवादः । सप्तम्याः किम् ? वेदेन पुण्यं 'वेदपुण्यम्[3]' ॥

॥ इति सप्तमीपूर्वपदप्रकृतिस्वरापवादः ॥

---

## ॥ अथ अव्ययपूर्वपदप्रकृतिस्वरापवादः ॥

### [१३०] ॥ नञो गुणप्रतिषेधे सम्पाद्यर्हहितालमर्था-[4] स्तद्धिताः ॥ (6—2—155)

सम्पाद्याद्यर्थतद्धितान्तानां गुणस्य प्रवृत्तिनिमित्तस्य सम्पादित्वादेः प्रतिषेधे विद्यमानान्नञः परेषामन्त उदात्तः । 'अकार्णवेष्टनिकं मुखम्' । कर्णवेष्टनाभ्यां न संम्पादि[5] न शोभनमिति गुणो निषिध्यते । 'सम्पादिनि' इति सूत्रेण 'प्राग्वहतेष्ठञ्' इत्यधिकारस्थेन ठञि कार्णवेष्टनिकम् । छेदमर्हति छैदिकः । 'तदर्हति' 'छेदादिभ्यो. नित्यम्' इति पूर्ववत् ठञ् । अच्छैदिकः । वत्साय हितो वत्सीयः । 'प्राक्क्रीताच्छः' । 'अवत्सीयः' । सन्तापाय प्रभवति सान्तापिकः । 'तस्मै प्रभवति सन्तापादिभ्यः' इति ठञ् ।

---

1. पुण्यशब्दस्य क.
2. अध्ययने पुण्यम् घ. नास्ति ।
3. वेदपुण्यम् क. नास्ति ।
4. -सम्पाद्यार्ह- क.
5. सम्पादितशोभनमित्यर्थः । अनेन गुणा निषिध्यन्ते । 'सम्पादिनि' घ.

'असान्तापिकः'। गुणप्रतिषेधे किम् ? वत्सीयादन्यः 'अवत्सीयः'। तद्धिताः किम् ? 'अवोढा'। वोढुमर्हो वोढा। 'अर्हे कृत्यतृचश्च' ॥

## [१३१] ॥ ययतोश्चातदर्थे ॥ (6—2—156)

तद्धितौ यौ ययतौ अतदर्थे विद्यमानौ तदन्तयोर्गुणनिषेधार्थकनञः परयोरन्त उदात्तः। पाशानां समूहः पाश्या। 'पाशादिभ्यो यः'। 'अपाश्या'। दन्ते भवं दन्त्यम्। 'शरीरावयवाच्च' इति यत्। 'अदन्त्यम्'। अतदर्थे किम् ? 'अपाद्यम्'। 'पादार्घाभ्यां च' इति तादर्थ्ये यत्। पादाय इदम् पाद्यम्। तद्धितानुवृत्तेः 'अदेयम्' इत्यत्र नञ्स्वर एव। 'अचो यत्'। 'ईद्यति' गुणः इति वृत्त्यादौ। 'अचो यत्' इति यतः कृत्यसंज्ञकत्वेन 'कृत्योकेष्णुच्' इति वक्ष्यमाणसूत्रेण अत्र[1] अन्तोदात्तावश्यम्भावात् कथमिदं तद्धितप्रत्युदाहरणमिति चिन्त्यम्; 'अमाया' इत्यादिकमौणादिकयान्तमत्र[2] प्रत्युदाहर्तव्यम्। वेदभाष्यकृतस्तु अत्र तद्धितानुवृत्तिं नानुमन्यन्ते[3]। तथा च 'पाह्यस्मान् द्रुहो निदो मित्रमहो अवद्यात्' इत्यत्र अवद्यशब्दे 'ययतोश्च' इति अन्तोदात्तत्वं तैर्दर्शितम्। 'अवद्यपण्यवर्याः' इति 'अचो यत्' इति प्रकरणेऽवद्यशब्दो निपातितः। द्रुहः द्रोहात्, निदः निन्दायाः, अवद्यात् परीवादाच्च अस्मान् पाहि इत्युक्तमन्त्रार्थः। यत्तु वेदभाष्ये 'अनाधृष्यं देवानाम्' इत्यत्र प्रकृतसूत्रेण अन्तोदात्तत्वमुक्तम्, तच्चिन्त्यम्; निरनुबन्धकपरिभाषया तदनुबन्धकपरिभाषया च ययद्ग्रहणेन क्यपोऽग्रहणात्। '[4]ऋदुपधाच्चाक्लृपि' इति क्यपि धृष्यशब्द-

1. अत्र क. नास्ति।
2. अत्र क. नास्ति।
3. -मन्वते क.
4. इगुपधाच्च घ.

निष्पादात् । अत एव 'वामदेव्यम्' इत्यादौ 'वामदेवाड्ड्यड्ड्यौ' इति ड्यड्ड्यान्ते न अयं स्वरः ; 'उक्तपरिभाषाभ्याम्' इति आकरे स्थितम् । अत एव 'युग्यं च पत्रे' इति क्यप्प्रकरणे निपातनादेव युग्यशब्दसिद्धौ 'तद्वहति रथयुगप्रासङ्गम्' इति यद्विधौ युगग्रहणम् 'अयुग्यम्' इत्यत्र 'ययतोः' इति स्वरसिद्धये इति 'तद्वहति' इत्यत्र हरदत्तः । यत्तु अस्य सूत्रस्य उदाहृतम् 'अमेध्या वै माषाः' । मेधमर्हति 'मेध्यः' । 'दण्डादिभ्यो यः' 'छन्दसि च' इति यः । 'अपशव्योऽपशुः' । पशवे हितः 'पशव्यः' । 'उगवादिभ्यो यत्' इति । तन्नासाधारणम् ; पूर्वेणापि सिद्धेरिति ॥

## [१३२] ॥ अच्कावशक्तौ ॥ (6—2—157)

नञः परस्य अच्प्रत्ययान्तस्य कप्रत्ययान्तस्य च अन्त उदात्तः अशक्तौ गम्यायाम् । 'अपचः' । यः पक्तुं न शक्नोति । पचाद्यच् । 'अविक्षिपः' । इगुपधलक्षणः कः । वक्ष्यमाणैः कृत्यादिभिः साहचर्यात् अच्कयोः कृतोरत्र ग्रहणम् । तेन कृद्ग्रहणपरिभाषया विक्षिपस्यापि कान्तत्वम् । अशक्तौ किम् ? 'अपचो दीक्षितः' । शास्त्रनिषेधात् अयं न पचति, न तु अशक्त्या ॥

## [१३३] ॥ आक्रोशे च ॥ (2—6—158)

अस्मिंश्च गम्ये नञः परस्य अच्कान्तस्य अन्त उदात्तः । 'अपचः, अविक्षिपोऽयं जाल्मः' । यः पक्तुं विक्षेप्तुं च शक्तोऽपि लोभादिना न पचति न विक्षिपति च ॥

1. उत्तर- घ.

## [१३४] ॥ संज्ञायाम् ॥ (6—2—159)

अत्र वर्तमानस्य नञः परस्य अन्त उदात्तः आक्रोशे । 'अदेवदत्तः' । यो देवदत्तः सन् तत्कार्यं न करोति स एवमाक्रुश्यते ॥

## [१३५] ॥ कृत्योकेष्णुच्चार्वादयश्च ॥ (6--1—160)

नञः परेषां कृत्याद्यन्तानां चार्वादीनां च अन्त उदात्तः । 'पशूनामनुपजीवनीयः' । 'अध्वर्तव्या त्रै' । 'पत्न्यनालम्भुका भवति' । बहुलग्रहणात् उकञ् । 'अनलङ्कामुकः' । 'लषपत' इत्युकञ् । 'अवर्षुकः पर्जन्यः' इत्यादौ तु व्यत्ययात् नञ्स्वरः । 'अनलङ्करिष्णुः' । 'अलङ्कृञ्निराकृञ्' इत्यादिना इष्णुच् । 'अनाढ्यम्भविष्णुः' । 'कर्तरि भुवः खिष्णुच्' इति खिष्णुच् । न च व्यनुबन्धकत्वात् अस्य अग्रहणम्; भवतेरुदात्ततया ततः परस्य खिष्णुचः इटैव इकारादित्वे सिद्धे इकारादेर्विधानस्य अत्र सामान्यग्रहणार्थत्वात् इत्याहुः । चार्वादयः—'चारुः' । 'साधुः' । 'यौधिकः' । 'अनङ्गमेजयः' । 'वदान्यः' । 'अकस्माद्वर्तमानवर्धमानत्वरमाणध्रियमाणक्रियमाणरोचमानशोभमानाः संज्ञायाम्' । 'विकारसदृशे व्यस्तसमस्ते च[2]' । 'गृहपतिकः' । 'गृहपतिः' इत्यन्ये पठन्ति । 'राजाह्नोश्छन्दसि' । लोके तु नञ्स्वर एव । 'अचारुः' इत्यादिकमुदाहरणम् । 'अनङ्गमेजयः' 'अकस्मात्' इत्यनयोः [3]द्वितीयनञ्समास उदाहरणम् ॥

---

1. -त्वरमाणप्रीयमाणश्रियमाण- रोचमानाः घ. ङ.
2. च घ. नास्ति ।
3. द्वितीय- घ. नास्ति ।

स्वरमञ्जर्यां तु प्रकृतसूत्रं 'ययतोश्च' इति सूत्रं च 'संज्ञायां मित्राजिनयोः' इत्यनन्तरं[1] लिखितम् । तत्र क्रमोल्लङ्घने किं फलमिति न विद्मः । प्रत्युत बहुव्रीहिप्रकरणलेखनं बहुव्रीहि-विषयत्वभ्रमजनकमिति[2] ॥

## [१३६] ॥ विभाषा तृन्नन्नतीक्ष्णशुचिषु ॥
(6—2—161)

नञः परेषामेषां वा अन्त उदात्तः । 'अकर्ता' । 'अनन्नम' । 'अतीक्ष्णः' इत्यादिः[3] ॥

## [१३७] ॥ गतिकारकोपपदात् कृत् ॥ (6—2—139)

गतेः कारकात् उपपदाच्च परं कृदन्तमुत्तरपदं प्रकृतिस्वरं भवति तत्पुरुषे । गत्यंशेऽव्ययपूर्वपदप्रकृतिस्वरापवादो योगः । कारकोपपदांशे तु[4] समासस्वरस्य । तृतीयापूर्वपदप्रकृतिस्वरादिकमपि परत्वात्[5] अनेन अंशेन बाध्यत इति विवेकः । 'यत्पुनराधेयः' । धेयशब्दो धाञः 'अचो यत्' इति यति निष्पन्नः 'यतोऽनावः' इत्याद्युदात्तः[6] । तस्य आङा[7] 'कुगति' इति समासे कृत्स्वरेण 'आधेयः[8]' इति मध्योदात्तं पदम् । तस्य पुनश्शब्देन

---

1. इति सूत्रादनन्तरम् क. ख.
2. इति घ. नास्ति ।
3. 'अतीक्ष्णम्' इत्यादि क.
4. तु घ. नास्ति ।
5. परत्वात् ख. नास्ति ।
6. इत्युदात्तः घ.
7. गत्याङा घ.
8. आधेयशब्दः ख.

'पुनश्चनसौ छन्दसि' इति गतिसंज्ञकेन पूर्ववत् समासे, पुनः कृत्स्वरेण धेयशब्द आद्युदात्तः[1] । 'यमाशिरा दम्पती' । आङ्पूर्वात् श्रीणातेः क्विप् । 'अपस्पृधेथामानृचुः' इत्यत्र निपातनात् शीरादेशः । ततस्तृतीयान्तम् 'आशिरा' इति । यत्तु 'अपस्पृधेथाम्' इत्यत्र निपातनात् 'आशिषा' इति पदं स्वरमञ्जर्यां विप्रकीर्णप्रकरणे व्युत्पादितम्, तदसत् ; उक्तरीत्या श्रीणातेः शीरादेशे रेफान्तमेव हि पदम् 'अपस्पृधेथाम्' इत्यत्र निपातितम् । अत एव वृत्त्यादिषु[2] तत्र 'आशिर[3]' इत्युदाहृतम् । 'यमाशिरा' इत्यत्र वेदभाष्येऽप्युक्तम्— 'अपस्पृधेथाम्' इत्यत्र निपातितः [4]अशीरशब्दः—इति । 'आशिषः' इति च रूपमाङ्पूर्वात् शासेः क्विपि 'शास इदङ्हलोः' इत्यत्र 'आशासः क्वावुपसङ्ख्यानम्' इति वचनात् इत्वे 'शासिवसि' इति षत्वे च भवतीति सर्वं सिद्धमिति । एवम् 'संज्ञानम्' 'विज्ञानम्' इत्याद्युदाहार्यम् । ज्ञानशब्दो ल्युडन्तो लित्स्वरेण आद्युदात्तः । कारकात्—'स्रुक्सम्मार्जनान्यग्नौ प्रहरति' । 'देवयजनमध्यवसाय' । आद्ये करणे ल्युडन्तेन कर्मणि षष्ठ्याः समासः । इतरत्र अधिकरणल्युडन्तेन । 'कर्णगृहीता' इत्यादौ परत्वात् सप्तमीपूर्वपदप्रकृतिस्वरबाधः । उपपदात्—'ईषत्करः' । 'उच्चैःकृत्य' । 'उच्चैःकारम्' । 'ईषद्दुस्सुषु' इति खल्विधौ 'अव्ययेऽयथाभिप्रेताख्याने' इति णमुल्विधौ च धात्वधिकारे सप्तमीनिर्देशात् 'तत्रोपपदम्' इति

---

1. उदात्तः घ. ङ.
2. वृत्त्यादौ घ. ङ.
3. आशिरन्दुहे क.
4. आशिरशब्दः ख.

ईषदादेः[1] उपपदत्वम् । [2]यत्तु 'अभिजिद्भवति' 'ब्रह्मवादिनो वदन्ति' इत्युपपदस्य उदाहृतम्, तन्मन्दम् ; णिनिस्वरेण गतिस्वरेण च सिद्धेः । गत्यादेः किम् ? देवदत्तस्य कारकः 'देवदत्तकारकः' । शेषषष्ठ्याः समासः, न कारकषष्ठ्याः, 'तृजकाभ्यां कर्तरि' इति तत्समासनिषेधात् । तेन नात्र कारकात् परत्वम् । ननु अत्र 'कृत्' इति व्यर्थम् । न चैवम् 'निष्कौशाम्बिः' इत्यादौ अतिप्रसङ्गः ; 'यत्क्रियायुक्ताः प्रादयः' इति न्यायेन गम्यमानक्रमण-

---

1. अस्तीषदादेः क.

2. यत्तु स्वरमञ्जर्याम् उपपदस्य उदाहरणं दर्शितम् 'ब्रह्मवादिनो वदन्ति' 'अभिजिद्भवति' इत्याद्युपपदस्य दर्शितम्, 'सुप्यजातौ णिनिः' 'जिनीराजामुपसर्गेऽपि क्विप्' इति सप्तमीनिर्देशात् ब्रह्मादीनामुपपदत्वमिति, यच्च तद्व्याख्यात्रा अभिहितम् 'गिरिचराय' 'रथकारेभ्यः' 'पामनम्भावुकाः' इत्येवमाद्यपि उदाहार्यम् इति, तदुभयमपि चिन्त्यम् ; यथायथं कारकाद्गतेश्च परत्वेन उदाहरणानामन्यथासिद्धत्वात् । 'नमः शंभवे च मयोभवे च नमः शङ्कराय च मयस्कराय च' । 'शमिधातोः संज्ञायाम्' इत्यच्प्रत्ययान्तः शङ्करशब्दः । 'कृञो हेतु' इत्यादिना ताच्छील्याचि 'मयस्करः' । उपपदात् कारकाद्वा परत्वात् उत्तरपदप्रकृतिस्वरः, डुप्रकरणे मितद्र्वादीनामुपसंख्यानात् डुप्रत्ययान्तौ शंभुमयोभुशब्दौ । उपपदात् परत्वात् कृत्स्वर इति **परिमळकृत्** । सप्तमीनिर्देशाभावात् कथमुपपदत्वमिति चिन्त्यम् । शं भावयति उत्पादयति इति शम्भुरिति कारकात् परत्वादिदं बोध्यम् । 'ग्रामकामः प्रजाकामः पशुकामो वीर्यकाम इन्द्रियकामः' इत्यादौ कारकात् उपपदाच्च परत्वेऽपि नायं स्वरः ; 'शीलिकामिभिक्ष्यचरिभ्यो णः पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम्' इति 'कर्मण्यण्' इति वार्त्तिकात् । अणि प्रकृते णविधिः 'अदितिः पुत्रकामा' इत्यादौ ङीबभावाय । 'ग्रसेरा च' इति मन्प्रत्ययान्तो ग्रामशब्द आद्युदात्तः । 'उपसर्गे च संज्ञायाम्' इति प्रशब्दे उपपदे जनेर्डप्रत्यये प्रजशब्दः कृत्स्वरेण अन्तोदात्तः । ततः टापि एकादेशोऽप्युदात्तः । पशुशब्दः 'अर्जिदृशि' इति कुप्रत्ययान्तः अन्तोदात्तः । 'पुनातेर्ह्रस्वश्च' इति त्रप्रत्ययान्तः पुत्रशब्दः प्रत्ययस्वरेण अन्तोदात्तः । 'इन्द्रियमिन्द्रलिङ्गम्' इत्यादिना इन्द्रियशब्दः घप्रत्ययान्तोऽन्तोदात्तो निपातित इत्याहुः । वीर्यशब्दस्वरस्तु 'वीरवीर्यौ च' इत्यत्र दर्शितः—ङ.

क्रियामपेक्ष्यैव निसो गतित्वेन कौशाम्बिशब्दं प्रति गतित्वाभावात् । ससम्बन्धिकेन गतिशब्देन तादृशस्यैव उत्तरपदस्य आक्षेपात् । सत्यपि गतिग्रहणे 'प्रजा॑ताः स्थ स॒मद्भिः पृ॑च्यध्वम्' इत्यादौ कृत्स्वराभावाय अस्यैव न्यायस्य आश्रयणीयत्वात् । अत एव अत्र वेदभाष्ये 'प्रकृष्टा जाताः प्रजाताः इति प्रादिसमासान्नात्र कृत्स्वरः' इत्युक्तम् । एवं कारकोपपदाभ्यामपि क्रियानियताभ्यां क्रियावचनस्यैव उत्तरपदस्य आक्षेपात् न अक्रियावचनेऽतिप्रसङ्गः । क्रियावाचकं च द्वयम्[1] तिङन्तं कृदन्तं च । तत्र तिङन्तेन समासाभावात् विनापि कृद्ग्रहणं कृदन्त एव अयं स्वरो भविष्यतीति चेत्[2]—उच्यते ; धातुप्रत्ययसमुदायपरिग्रहार्थं कृद्ग्रहणम् । अन्यथा 'यत्क्रियायुक्ताः' इति न्यायेन धातुं प्रत्येव गतित्वम्, धातोरेव अन्वयव्यतिरेकाभ्यां क्रियावाचित्वादिति यत्र धातुरेव उत्तरपदम् 'प्रणीः' इत्यादौ, तत्रैव अयं स्वरः स्यात्, न तु प्रणायकादौ, इति कृदन्तस्य धातुप्रत्ययसमुदायस्य परिग्रहाय कृद्ग्रहणम् । तथा च पूर्वोत्तरपक्षवार्त्तिके—'गत्यादिभ्यः प्रकृतिस्वरत्वे कृद्ग्रहणानर्थक्यम्, अन्यस्य उत्तरपदस्य अभावात्' । 'कृत्प्रकृतौ वा गतित्वात् अधिकार्थं कृद्ग्रहणम्'—इति । अत्र वाशब्दस्तर्ह्यर्थे इति कैयटः । इदं च कृद्ग्रहणफलं भाष्यकृता प्रत्याख्यातम् । तथा हि—'यत्क्रियायुक्ताः' इति नायमर्थः—यस्य क्रिया यत्क्रियेति, येन अन्वयव्यतिरेकाभ्यां धातोरेव क्रियावाचकता इति तं प्रत्येव गतित्वं स्यात् ; अपि तु[3] या क्रिया यत्क्रियेति । एवं च क्रियारूपार्थं प्रत्येव गतिसंज्ञा । तस्य च अत्र व्यवहारानर्हत्वात् तद्वाचकपदाक्षेपप्राप्तौ तन्मात्रवाचकोत्तरपदाभावात् कारकसंसृष्टक्रियावाचकस्य गत्यादिभिराक्षेपात् सिद्धः कृद्ग्रहणं विनापि धातुप्रत्ययसमुदायपरिग्रहः । अपि च, कृद्ग्रहणे

---

1. द्वयम् घ. नास्ति ।
2. चेत् घ. नास्ति ।
3. तर्हि क.

'प्रपचतितराम्' इत्यादौ आमन्तेन गतिसमासे तस्य अकृदन्तत्वात् अयं स्वरो न स्यात्। ततश्च अव्ययपूर्वपदप्रकृतिस्वरेण आद्युदात्तत्वप्रसङ्गः। इष्यते च कृत्स्वरेण अन्तोदात्तत्वम्। न च 'गतिकारकोपपदानां कृद्भिः सह समासवचनम्' इत्युक्तेः कथमामन्तेन गतिसमासः इति वाच्यम्; न हि गत्यादीनां कृद्भिरेव समास इति तदर्थः। किं तु तेषां कृद्भिर्यदि समासो भवति[1] तर्हि प्राक्सुबुत्पत्तेरिति। अतः फलाभावात् अव्याप्त्यावहत्वाच्च कृद्ग्रहणं त्यक्तव्यमिति। अत्र[2] केचित्—न तावत् कृद्ग्रहणस्य फलाभावः, मन्दान् प्रति विस्पष्टीकरणस्य तत्फलत्वात्। न च आमन्तेऽव्याप्तिः; अन्तरङ्गत्वात् तरबन्तेन गतिसमासे तत आमि सतिशिष्टेन तत्स्वरेणेष्टसिद्धेरिति। तत्र[3] अयं भाष्यकृदाशयः हरदत्तेन दर्शितः—'प्रपचतितराम्' इत्यत्र यदि[4] तरबन्तेन समासः[5] तर्हि आमन्तसमुदायस्यैकपद्याभावेन शेषनिघातः प्रशब्दस्य न स्यात्; भिन्नपदत्वात्। न च आमन्तात् सुपि सुबन्तत्वात् 'प्रपचतितराम्' इत्यस्य कुतो न पदत्वम् इति वाच्यम्; यस्मात् सुप् विहितः तद्धि सुबन्तं पदम्। अत्र च आमन्तात् सुप् विहितः। यस्मात् आम् विहितः तदामन्तम्। तरबन्ताच्च आम् विहितः, 'किमेत्तिङव्ययघादाम्' इति वचनात्। ततश्च पचतितरशब्दात् आम्विधेः तदादिसमुदायस्यैव आमन्तत्वम्। तस्माद्विहितः सुप् तदादिसमुदायस्यैव पदत्वं सम्पादयति, न तु प्रशब्दादेः; 'प्रत्ययग्रहणे यस्मात् स विहितः' इत्युक्तेः। तस्मात् आमन्तेन गतिसमास एष्टव्यः। एवं हि समुदायस्य समासत्वात् प्रातिपदिकत्वे ततः सुबुत्पत्तौ सिध्यति ऐकपद्यम्। ततश्च कृद्ग्रहणे आमन्तेऽव्ययपूर्वपदप्रकृतिस्वरप्रसङ्गात् त्यक्तव्यं

1. भवति क. नास्ति।
2. अत्र तावत् घ.
3. अत्र ~
4. न ङ.
5. समासश्चेत् घ.

कृद्ग्रहणमिति । यत्तु प्रपचतिदेश्यादौ अतिप्रसङ्गवारणाय कृद्ग्रहणमिति वृत्तिकृन्मतमिति, तत् भाष्यविप्रतिषिद्धम् ; तत्र कृद्ग्रहणप्रत्याख्यानेन प्रपचतिदेश्यादेरपि सङ्ग्राह्यत्वानुमानात्[1] इत्याहुः । एवं सति तिङन्तसमासेऽयं स्वरो भवेन्न वेति विचिन्त्यते । न च 'सुप् सुपा' इत्यनुवर्त्त्य समासविधानात् तिङन्तसमासासम्भवः ; 'नित्यं क्रीडा' इत्यत्र वार्त्तिककृता 'उदात्तवता गतिमता तिङा गतेः समासो वक्तव्यः' इति तद्विधानात् । उदात्तवता तावत्—'यान्न िवपति यदनुदिशति' । 'निपातैर्यद्यदि' इति निघातप्रतिषेधे शप्तिपोरनुदात्तत्वात् धातुस्वरेण 'वपति' इति तिङन्तमाद्युदात्तम् । 'दिशति' इति शविकरणस्वरेण मध्योदात्तम् । गतिमता—'पर्यावर्तते दक्षिणा पर्यावर्तते' । अत्र परत्वात् 'तिङ्ङतिङः' इति निघाते तिङन्तस्य उदात्तवत्त्वाभावात् गतिमता तिङन्तेन समासविधिः । भाष्यकृता तु 'सह सुपा' इत्यत्र 'सह' इति योगविभागेन अयमर्थः साधितः । 'सह' इत्यत्र 'सुप्' इत्यनुवृत्त्या समर्थ-परिभाषोपस्थित्या च सुबन्तं समर्थेन समस्यत इति तदर्थात् तिङन्तेनापि समाससिद्धिः । अत्र कौस्तुभकृतः[2]—'भाष्यमतमेव अत्र समञ्जसम् । एवं हि योगविभागस्येष्टसिद्ध्यर्थतया तिङन्त-समासस्य छान्दसत्वम्, तत्रापि वैकल्पिकत्वं च सिध्यति । वार्त्तिकरीत्या तु नित्यसमासत्वापत्तौ 'सोमच्युतꣳह्यस्य राध ऐति' 'सम्प्रच्यवध्वमनु सम्प्रयात' इत्यादावपि समासप्रसङ्गः । एवं लोकेऽपि तिङन्तसमासे 'कर्मणा यमभिप्रैति' इत्यत्रैकपद्यं नेति हरदत्तादिग्रन्थानुपपत्तिः । 'यथोत्तरं मुनीनां प्रामाण्यम्' इति । अत्र च तिङन्तसमासे समासान्तोदात्तत्वमेव, नाव्ययपूर्वपदप्रकृति-

1. संग्राह्यत्वात् ख.
2. कौस्तुभकृत् ङ.

स्वरः, नापि कृत्स्वर इति कैयटहरदत्तयोर्मतम् । तथा हि 'सह सुपा' इत्यत्र तावत् कैयटः—'अनुव्यचलत्' इति भाष्योदाहरणे समासविधेः फलम् 'सिन्नित्यसमासयोः' इति शाकलप्रतिषेधः । समासान्तोदात्तत्वं तु न भवति, परत्वात् 'तिङ्ङतिङः' इति निघातेन बाधितत्वादिति केचिदित्युक्त्वा, एवं सति 'अनुप्राविशत्' इति भाष्योदाहरणं निष्फलं स्यात् । तस्मात् सतिशिष्टत्वात् समासान्तोदात्तत्वेन भाव्यमित्यपरे—इत्याह । 'नित्यं क्रीडा' इत्यत्रापि 'अनुव्यचलत्' इति भाष्यमुपादाय 'त्रयाणां पदानां समासे कृते समासान्तोदात्तत्वं भवति । 'तत्पुरुषे तुल्यार्थ' इत्यनेन तु पूर्वपदप्रकृतिस्वरो न भवति ; 'गतिर्गतौ' इत्यनोरनुदात्तत्वात् । 'तत्पुरुषे तुल्यार्थ' इत्यत्र च उदात्तस्वरितग्रहणात् । विशब्दस्य अपूर्वपदत्वात्' इति स एवाह[1] । सर्वमिदं हरदत्तोऽप्यन्ववादीत् । प्रकृतसूत्रेण उत्तरपद-प्रकृतिस्वरप्रसङ्गस्तु अत्र कैयटेन नैव स्मृतः । हरदत्तस्तु अत्र सूत्रे आह—'अनुव्यचलत्' इत्यत्र तु न गतित्वनिबन्धनः समासः । किं तर्हि ? 'सुप्[2]' इति योगविभागनिबन्धन इति । लक्षणप्रतिपदोक्त-परिभाषया गतिसंशब्दनेन[3] विहितगतिसमासस्यैव अत्र ग्रहणान्नात्र गतिस्वर इति भावः । एवं हि वदता 'अनुव्यचलत्' इत्यादौ 'सुप्[4]' इति योगविभागेनैव[5] समासः ; 'यथोत्तरं मुनीनां प्रामाण्यात्' इति द्योतितम् । उक्तवार्त्तिकेन समासे हि अयमपि गतित्व-निबन्धन एव समासः स्यादिति । यत्त्वत्र मनोरमायाम्—हरदत्तेनापि 'अनुव्यचलत्' इत्यादौ उत्तरपदप्रकृतिस्वरस्य वार्तापि न कृता इत्युक्तम्, तत् उक्तप्रकृतसूत्रस्थहरदत्तग्रन्थापर्यालोचनात्[6] । न चैतावता

1. आह क. घ. नास्ति ।
2. 'सह' घ.
3. गतिसंज्ञाशब्दनेन घ.
4. 'सह' घ.
5. योगविभागादेव घ.
6. -ग्रन्थानालोचनात् क. ङ.

'अनुव्यचलत्' इत्यादौ परत्वान्निघातः, सातिशिष्टत्वात् समासान्तोदात्तत्वं वा इति सन्दिग्धमेव कैयटेन अभिहितम् इति वाच्यम् ; परत्वात् सतिशिष्टत्वस्य प्रबलत्वेन[1] समासान्तोदात्तत्वमेवेति तदाशयात् । अत एव 'नित्यं क्रीडा' इत्यत्र समासान्तोदात्तत्वमेव तत्र तेन दर्शितम् । यत्र तु [2]तिङन्तनिघाताप्रसक्तिः 'यत् परियन्ति' इत्यादौ, तत्र समासान्तोदात्तत्वमनुक्तसिद्धमेव। 'सह सुपा' इत्यत्र कौस्तुभे तु—तिङ्समासे समासान्तोदात्तत्वम् इत्युक्तम्[3] ; 'क्रतुना पर्यभूषत्' 'तदेवानुप्राविशत्' इत्यादौ क्वापि अन्तोदात्तपाठादर्शनात् । 'तिङि चोदात्तवति' इति गतिनिघातविधानं ज्ञापकं तिङ्समासेऽन्तोदात्तत्वाभावस्य । अन्यथा हि शेषनिघातेनैवेष्टसिद्धौ तद्वैयर्थ्यम् । भाष्यमते तु—'गतिकारकोपपदात्' इत्यत्र कृद्ग्रहणस्य प्रत्याख्यातत्वान्न कश्चिद्दोषः—इत्युक्तम् । मनोरमायां तु—'तिङ्समासेऽयं स्वरो भवति न वा' इति सन्दिह्य, पक्षद्वये दूषणमुपन्यस्य, 'अत्रेदं तत्त्वम्' इत्युपक्रम्य सिद्धान्तितम् 'वार्त्तिकमते तावत् आद्य एव पक्षः ; कृद्ग्रहणस्य प्रत्याख्यानात्, 'नित्यं क्रीडा' इत्यत्र तिङ्समासविधानेन तत्पुरुषत्वाभ्युपगमाच्च'—इति[4] । एवं च 'पर्यभूषत्' इत्यादौ उत्तरपदप्रकृतिस्वरेण सिद्धमिष्टम् । न चैवम् 'यत्रा नरो देवयन्तो युगानि । वितन्वते' इत्यत्र बह्वृचानामन्तोदात्तत्वं कथमिति वाच्यम् ; त्रिचक्रादित्वकल्पनात् । 'अत्यायाहि शश्वतः' इत्यत्र तिङन्तस्य निघाते आङा समासः । उत्तरपदस्य स्वरशून्यतया[5] गतिस्वराभावात् अव्ययपूर्वपदप्रकृतिस्वरेण आद्युदात्तः । ततः अतिशब्देन समासे कृते कृद्ग्रहणप्रत्याख्यानात् उत्तरपदप्रकृतिस्वरेणे[6]ष्टसिद्धिः । भाष्यमते तु तत्पुरुषत्वाभावात् गतिस्वरस्य अव्ययपूर्वपदप्रकृतिस्वरस्य च अभावे समासान्तोदात्तत्वेनैव 'वितन्वते'

1. प्राबल्येन क.
2. तिङ्निघाता- क.
3. इत्युक्तम् घ.
4. इति ङ. नास्ति।
5. उदात्तशून्यतया घ. ङ.
6. इष्ट- घ. नास्ति।

इति सिद्धम् । 'पर्यभूषत्' इत्यादौ उत्तरपदप्रकृतिस्वरस्तु[1] बाहुलकात् समाधेयः[2] ॥

अत्रेदं चिन्त्यम्—'तिङि चोदात्तवति' इति गतिनिघातविधानं कथं तिङ्समासे समासान्तोदात्तत्वाभावज्ञापकम् ? यत्र उदात्तवता तिङा गतेर्न समासः भाषायां छन्दस्यपि क्वचित्, तत्र गतिनिघातार्थं तत् इत्युपपत्तेः 'तिङ्समासश्छन्दोविषयः, तत्रापि वैकल्पिकः' इति कौस्तुभ एव समर्थनात् । अथ वार्त्तिकमतेनेदं ज्ञापककथनम्, तत्र च उदात्तवता तिङा गतेः सर्वत्र समास एवेति चेत्—एवमपि समासान्तोदात्तत्वं बाधित्वा प्रसक्तमव्ययपूर्वपदप्रकृतिस्वरं बाधितुं तद्विधानोपपत्तेः कथं ज्ञापकम् ? न च अव्ययस्वरमपि बाधित्वा कृद्ग्रहणप्रत्याख्यानात् प्रकृतसूत्रेण उत्तरपदप्रकृतिस्वरे शेषनिघातेनेष्टसिद्धेः पुनस्तद्विधानं ज्ञापकमेव[3] इति वाच्यम् ; 'वार्त्तिकमते कृद्ग्रहणप्रत्याख्यानं न' इति वक्ष्यमाणत्वात् । 'यथोत्तरं मुनीनां प्रामाण्यम्' इति भाष्यस्यैव सिद्धान्तत्वसमर्थनाच्च । अपि च, नानास्वरप्राप्तौ[4] समासस्वरारम्भात्[5] ज्ञापकेन तदप्रवृत्तौ पदद्वयप्रकृतिस्वरप्रसङ्गः । ततश्च 'अपादादौ' इत्यधिकारात् यत्र पादादौ गतेः 'गतिर्गतौ' इति 'तिङि चोदात्तवति' इति निघाताभावः[6] तत्र समासे गतेस्तिङन्तस्य च स्वरः पर्यायेण समाविशेत् । यदपि 'भाष्यमते कृद्ग्रहणप्रत्याख्यानान्न कश्चिद्दोषः' इति, तदपि कथम ? उत्तरपदप्रकृतिस्वरेण 'पर्यभूषत्' इत्यादौ इष्टसिद्धिरिति हि तदाशयः । न चैतद्युक्तम् ; तन्मते कृद्ग्रहणप्रत्याख्यानेऽपि 'सह सुपा[7]' इति योगविभागसाधितस्य तिङ्समासस्य

1. -स्वरं तु ङ.
2. समाधेयं ङ.
3. तद्विधिर्ज्ञापक एव घ.
4. -प्रवृत्तौ क.
5. -स्वरसम्भवात् क.
6. चोदात्ताभावः घ.
7. सुपा घ. नास्ति ।

तत्पुरुषत्वाभावेन प्रकृतसूत्राप्रवृत्तेः । तन्मते तत्र तत्पुरुषत्वाभावश्च कौस्तुभमनोरमयोरेव स्पष्टः । अत्र[1] सूत्रे तत्पुरुषानुवृत्तिः सर्वसिद्धा, मनोरमायामपि दर्शिता च । यत्तु 'तिङ्समासे क्वापि अन्तोदात्तत्वं न दृश्यते' इति, तत् मनोरमायाम् 'वितन्वते' इत्यन्तोदात्तत्वं दर्शयता स्वेनैव दूषितम् । यत्तु मनोरमायाम् 'वार्त्तिकमते कृद्ग्रहणप्रत्याख्यानात्' इति, तत्कथमिति न विद्मः ; 'कृत्प्रकृतौ वा गतित्वादधिकार्थं कृद्ग्रहणम्' इति [2]वार्त्तिकेन तन्मते कृद्ग्रहणसमर्थनात् । भाष्यकृता हि[3] तत्प्रत्याख्यातम् । अत एव कौस्तुभे 'भाष्यमते कृद्ग्रहणप्रत्याख्यानात्' इति स्वेनैवोक्तम् । यदपि 'अत्यायाहि' इत्यत्र तिङ्निघाते आङा समासः' इत्यादि, तदपि मन्दम् ; वार्त्तिकमते उदात्तवता गतिमता वा तिङा गतेः समासविधानेन अनुदात्तेन तिङा गतेः समासायोगात् । अन्यथा 'दिशो व्यभजन्त' इत्यादावपि तत्प्रसङ्गात् । सति वा समासे कथमव्ययपूर्वपदप्रकृतिस्वरः ? 'सत्यपि सम्भवे बाधनं भवति' इति न्यायेन कृत्स्वरेण तस्य बाधात् । अपि च, कृद्ग्रहणप्रत्याख्यानेऽपि कथं तिङ्समासे कृत्स्वरः ? 'लक्षणप्रतिपदोक्तपरिभाषया गतित्वनिबन्धनसमासस्यैव अत्र ग्रहणात्[4]' इति हरदत्तोक्तेः । न च 'अनुप्राविशत्' इत्यादिप्रयोगदर्शनात् उक्तपरिभाषा [5]नाश्रीयत इति वाच्यम् ; बाहुलकात् उक्तप्रयोगनिर्वाहसम्भवात् । तदनाश्रयणेऽपि 'वितन्वते' इत्याद्यर्थं बहुलग्रहणस्य अवश्योपसेव्यत्वात्[6] । तस्मात् तिङ्समासे समासान्तोदात्तत्वमेव । 'पर्यभूषत्' इत्यादौ उत्तरपदप्रकृतिस्वरस्तु बहुलग्रहणात् इति युक्तं कैयटादिमतमेव इत्यलं बहुना ॥

---

1. तत्र घ.
2. पूर्वोक्तवार्त्तिकेन क. ङ.
3. हि घ. नास्ति ।
4. ग्रहः ङ.
5. अत्र नाश्रीयते घ.
6. अवश्योपास्यत्वात् ख. घ.

अथ गतेः परं कृदन्तं प्रकृतिस्वरम् इत्यंशस्य अपवादः—

## [१३८] ॥ तादौ च निति कृत्यतौ ॥ (6—2—50)

तकारादिः नित् तुशब्दभिन्नो यः कृत् तदन्ते उत्तरपदे गतिः प्रकृतिस्वरः । 'अभिजित्यै' । 'अनुख्यात्यै' । क्तिन्नन्तौ । तादौ किम् ? 'प्रजल्पाकः' । 'जल्पभिक्षकुट्टलुण्टवृङः षाकन्' । 'यस्मिन् विधिस्तदादौ' इति सिद्धे 'आदिग्रहणमनर्थकम्' इति हरदत्तः । नितीति किम् ? 'प्रस्तोता' । तृजन्तः ; तृन्विधौ 'ऋत्विक्षु चानुपसर्गस्य' इत्युक्तेः । गतिनैव क्रियावचने आक्षिप्ते परिशेषात् कृदन्तपर्यवसाने च सिद्धे कृद्ग्रहणं कृदुपदेशकालोपलक्षणार्थम् । तेन कृदुपदेशकाले यस्तादिस्तत्रापि भवति । 'अभिभवितुम्' । 'प्रवदितोः' । तुमुन्तोसुनौ । स्वरप्रवृत्तिकाले हि एतौ इडादी । अतौ किम् ? 'आगन्तुः' । औणादिकस्तुन्[1] । केचित्तु 'अतौ' इति तुमुनोऽपि पर्युदासमिच्छन्ति । तन्मते 'अभिभवितुम्' इत्यादिप्रयोगविरोधः । "'अतौ' इति तुशब्दस्यैव अयं पर्युदासः, न तिशब्दस्य, व्याख्यानात्" इति हरदत्तः । अत एव 'प्रभूतौ भूयाम' इत्यादौ क्तिन्नन्तेऽयं स्वरो दृश्यते ॥

## [१३९] ॥ तवै चान्तस्य युगपत् ॥ (6—2—51)

तवैप्रत्ययान्तस्य अन्त उदात्तः, तस्मिंश्च परतो गतिश्च प्रकृतिस्वरो भवति । उभयमेतत् युगपद्भवति । यद्यपि अत्र 'उदात्तः' इति नानुवर्तते ; तथापि तवैप्रत्ययस्य प्रकृत्या यः

---

1. तुन्प्रत्ययान्तः ख.

स्वरः सोऽन्तो भवतीति व्याख्यानात् उदात्तलाभः । 'तस्मादग्निचिन्नाभिचरितवै' । 'अन्वेतवा उ' । 'कृत्यार्थे तवै केन्' इति तवैप्रत्ययः । युगपद्ग्रहणं पर्यायनिवृत्त्यर्थम् ॥

## [१४०] ॥ अनिगन्तोऽञ्चतावप्रत्यये ॥ (6—2—52)

अश्रूयमाणः प्रत्ययः अप्रत्ययः क्विन्नादिः । तदन्तेऽञ्चतौ परे अनिगन्तो गतिः प्रकृतिस्वरो भवति[1] । 'पराञ्चो हि यन्ति' । 'अवाञ्चौ त उभौ बाहू' । 'उपसर्गाश्चाभिवर्जम्' इति परावयोः[2] आदिरुदात्तः । 'प्राञ्चौ वेद्यऽसौ' । अनिगन्तः किम् ? 'प्रतीची च[3]' 'समीची नामासि' । अत्र 'चौ' इति पूर्वपदान्तोदात्तत्वम् । यत्तु स्वरमञ्जर्याम्—'यदन्वञ्चं धारयेत्' 'प्रत्यञ्चावावृत्य' इति प्रत्युदाहृतम्, तदयुक्तम् ; अन्तरङ्गत्वाद्यणादेशे अत्रापि अनिगन्तत्वेन[4] दोषतादवस्थ्यात् । अत एव यण्विषये [5]अनिगन्तस्वरनिवृत्तये वचनमेव[6] आदृतम् आकरे । गतिः किम् ? 'अधराक्तास्त्वा दिशः' । 'प्र यः सत्राचा' । 'विश्वाची च घृताची च' । 'देवाच्या कृपा' । अप्रत्यय इति किम् ? 'तदस्य समञ्चनं च' । प्रत्युदाहृतिषु भसंज्ञाविषयेषु चुस्वरः, अन्यत्र कृत्स्वरः । 'ऋत्विग्दधृक्' इत्यादिना अञ्चेः सुप्युपपदे क्विन् । 'अनिदिताम्' इति नलोपः । 'उगिदचाम्' इति सर्वनामस्थाने नुम् । अन्यत्र भसंज्ञायाम् 'अचः' इत्यकारलोपः । 'चौ' इति पूर्वपदस्य दीर्घः इत्यादिप्रक्रिया सर्वत्र यथायोगमुन्नेया । अथ कथं

---

1. स्यात् घ.
2. उभावयोः घ.
3. प्रतीचश्च क.
4. अनिगन्तसत्त्वेन ङ.
5. अनिगन्तप्रकृतिस्वर- घ. ङ.
6. एव घ. नास्ति ।

'सध्रियञ्चो धवध्वे' 'अस्मद्रियग्वावृधे'[1] 'यद्रियङ्वायुर्वाति तद्रियङ्ङग्निर्दहति' इत्यादौ गतेरन्यत्रापि कृत्स्वराभावः ? उच्यते—'विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये' इति[2] अद्र्यादेशसध्र्योरन्तोदात्तत्ववचनात् कृत्स्वराभावः । तदुक्तम्—'अद्रिसध्र्योरन्तोदात्तवचनं कृत्स्वरनिवृत्त्यर्थम्' इति । एवं च अद्र्यादेशस्य[3] तन्वादित्वात् इयङादेशः । स च आन्तर्यात् उदात्तः । 'उदात्तादनुदात्तस्य' इति ततः परस्य अकारस्य स्वरितत्वम् । केचित्तु अद्रिशब्दे-कारस्य उदात्तस्य यणादेशे ततः परस्य अकारस्य 'उदात्त-स्वरितयोर्यणः' इति स्वरितत्वम् । इकारोपबन्धस्तु[4] छान्दस इत्याहुः । 'ये पराचः' 'पराचीं वाचा' इत्यादौ सतिशिष्टोऽपि चुस्वरो न भवति, किन्तु अयमेव स्वरः ; वचनबलादिति 'चौ' इत्यत्र उक्तम् । 'विष्वञ्चमेव' 'विषूची प्रहरति' इत्यादौ व्यत्ययात् पूर्वपदप्रकृतिस्वर इति च ॥

## [१४१] ॥ न्यधी च ॥ (6—2—53)

एतौ प्रकृतिस्वरौ अञ्चतौ अप्रत्यये । 'यन्न्यञ्चं चिनुयात्' 'न्यङ्ङग्निः' । यद्यपि अत्र यणादेशे सति न क्वचित् अस्य स्वरस्य श्रवणम्, 'नीचा' इत्यादौ चुस्वरेणापीष्टसिद्धिः, तथापि 'उदात्तस्वरितयोर्यणः' इति अञ्चत्यकारस्य स्वरितसिद्धिर्वचनफलम् । 'अध्यङ्' । 'अध्यञ्चौ' । अधिशब्दस्य निपातत्वादादिरुदात्तः । अञ्चत्यकारस्य ततः परस्य 'उदात्तादनुदात्तस्य' इति स्वरितत्वम् ।

---

1. 'अस्मद्रियक्सम्मिमीहि' । घ. ङ.
2. 'सहस्य सध्रिः' इत्यादि ङ.
3. अद्रिशब्देकारस्य क. ङ.
4. इकाररूपोपजनस्तु घ. ङ.

न च व्यवधानम् ; यणादेशे सति स्वरविधौ व्यञ्जनस्य अविद्यमानत्वात् । यत्तु परिमलकृता उक्तम्—'उदात्तादनुदात्तस्य' इति अधेरन्त्यस्य स्वरितत्वे यणादेशे 'उदात्तस्वरितयोर्यणः' इति अञ्चत्यकारस्य स्वरितत्वम् इति, तदसम्बद्धम् इति 'उदात्त-स्वरितयोर्यणः' इत्यत्रैवोक्तम् । 'अधीचः' इत्यादावपि सतिशिष्टं चुस्वरं बाधित्वा अयमेव स्वरो वचनबलात् ॥

अञ्चतिस्वरनिष्कर्षः पद्यैरेतैः प्रदर्श्यते[1] ।
अनिगन्तः प्रकृत्या स्याद्गतिरप्रत्ययेऽञ्चतौ ॥

प्रत्यङ्गादौ यण्विषये प्रतिषिद्धमिदं बुधैः ।
न्यधी न्यधीचेति सूत्रादिगन्तौ प्रकृतिस्वरौ ॥

अत्रोभयत्र नैवेष्टः सतिशिष्टोऽपि चुस्वरः ।
शिष्टाद्गतेरन्यतश्च परस्मिन्नञ्चतौ सति ॥

कृत्स्वरः स्याद्भसंज्ञायां निमित्तं प्रत्ययो न चेत् ।
भसञ्ज्ञायां तु पूर्वान्तोदात्तत्वञ्चावतद्धिते ॥

बाधित्वा चुस्वरं चैनं विकल्पेन स्वगोचरे ।
अञ्चेश्छन्दस्यसर्वेति स्याद्विभक्तेरुदात्तता ॥

नलोपाभावविषये नगोश्वन्निति सूत्रतः ।
नैषा निषेधाद्भवति विभक्तेरप्युदात्तता ॥

अन्तोदात्तावद्रिसध्री सर्वत्रात्र च वार्त्तिकात् ।
विषुशब्दे व्यत्ययेन स्याद्वेदे प्रकृतिस्वरः[2] ॥

॥ इति अव्ययपूर्वपदप्रकृतिस्वरापवादः ॥

---

1. प्रकथ्यते ङ.　　　　2. प्राकृतस्वरः क. ङ.

## ॥ अथ त्रिविधस्यापि कृत्स्वरस्य अपवादः ॥

## [१४२] ॥ थाथघञ्क्ताजबित्रकाणाम् ॥ (6—2—144)

गत्यादिभ्यः परेषामेतदन्तानां अन्त उदात्तः । थ—'एष वै दर्शपूर्णमासयोरवभृथः'। 'अवे भृञः' इति क्थनि 'अवभृथः'। 'उद्गीथा उद्गीथ एव' इत्यादिकं तु थक्प्रत्ययान्तः । तत्र कृत्स्वरस्य अस्य च न विशेषः । पूर्वत्र कृत्स्वरेण[1] उत्तरपदमाद्युदात्तं स्यात् । अथ—'यदावसथेऽन्नꣳहरन्ति'। 'प्रवसथमेष्यन्' । 'उपसर्गे वसेः' इत्यथप्रत्ययः । 'प्रागथेन' इत्यत्र तु व्यत्ययेन कृत्स्वरः । घञ्—'प्रमोद आनन्दः' । 'यज्ञियस्य कर्मणः स विदोहः' । क्त—'दूरादागतो ग्रामः' । कर्मणि क्तः । तत्र आङो गतिसमासे 'गतिरनन्तरः' इति आगतशब्द आद्युदात्तः । ततः 'स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन' इति समासे 'पञ्चम्याः स्तोकादिभ्यः' इत्यलुकि कारकात् परस्य गतशब्दस्य आद्युदात्तता प्राप्ता 'गतिकारक' इति सूत्रेण । 'विशुष्कः' । शुषेरकर्मकत्वात् कर्तरि क्तः । 'शुष्कधृष्टौ' इत्याद्युदात्तः । 'नस्योता नैनीयते' । ओतशब्दः आङ्पूर्वाद्वेञः क्ते निष्पन्नः गतिस्वरेण आद्युदात्तः । ततः सप्तमीसमासः । 'पद्दन्' इत्यादिना नासिकाशब्दस्य नसादेशः । 'तत्पुरुषे कृति' इत्यलुक् । यत्तु[2] अत्र कृत्स्वर इति वेदभाष्यम्, तदपि थाथादिस्वर इत्येवम्परम् । यत्तु स्वरमञ्जर्यामुदाहृतम्—'पुनरुत्सृष्टः' 'शिपिविष्ट आसादितः' इति, तच्चिन्त्यम् ; यथाक्रमम् 'गतिरनन्तरः' इति गतिस्वरेण 'द्वितीया कर्मणि' इति स्वरेण च अस्य स्वरस्य बाधात् । अत एव 'पुनरुत्सृष्टशब्दः प्रवृद्धादित्वात् अन्तोदात्तः । 'संज्ञायामनाचितादीनाम्'

---

1. कृत्स्वरे नित्स्वरेण आद्युदात्तं क. ङ. 2. ननु. ङ.

इत्यनेन अन्तोदात्तः शिपिविष्टशब्दः’ इति स्वरमञ्जर्यामेवोक्तम् । अच्—‘प्रत्ययः’ ‘प्रजयः’ । एरच् । ‘क्षयो निवासे’ ‘जयः करणम्’ इति क्षयजयशब्दौ आद्युदात्तौ । ‘विजयमुपयन्तः’ इत्यादौ कृत्स्वरस्य अस्य च न विशेषः । अप्—‘सवितुः प्रसवे’ ‘विह्वेष्वस्तु’ । आद्ये ‘ऋदोरप्’ इत्यप् । अन्यत्र ‘ह्वः सम्प्रसारण च न्यभ्युपविषु’ इति अप् सम्प्रसारणं च । निश्चयशब्दे तु नायं स्वरः ; ‘एरच्’ इत्यचैव स्वररूपयोः सिद्धौ ‘ग्रहवृदृनिश्चिगमश्च’ इत्यब्विधानसामर्थ्यात् । तेन कृत्स्वरेण मध्योदात्तो निश्चयशब्द इति ‘ग्रहवृदृ’ इत्यत्र वृत्त्यादौ । इत्र—‘तिरःपवित्रमतिनीताः’ । ‘पुवः संज्ञायाम्’ इति इत्रप्रत्ययः । ‘यः प्राशित्रं प्राश्नाति’ इति । ‘प्रवृषः’ । इगुपधलक्षणः कः । ‘वृषादीनां च’ इत्याद्युदात्तो वृषः । ‘एत्य प्रेत्य विक्षिपः’ ॥

॥ इति त्रिविधस्यापि कृत्स्वरस्य अपवादः ॥

---

॥ अथ थाथादिस्वरापवादः ॥

## [१४३] ॥ सप्तमीसिद्धशुष्कपक्वबन्धेष्वकालात् ॥
(6—2—32)

सिद्धादिषु उत्तरपदेषु[1] अकालवाचिनो या सप्तमी तदन्तं पूर्वपदं प्रकृतिस्वरं स्यात् । ‘साङ्काश्यसिद्धः’ । वुञ्छणादिसूत्रे सङ्काशादिभ्यो ण्यो विहितः । ‘ऊकशुष्कः’ । अवेः कप्रत्यये ‘ज्वरत्वर’ इत्यूठि ऊकशब्दः । ‘कुम्भीपकः’ । जातिलक्षणङीषन्तः कुम्भीशब्दः । ‘चक्रबन्धः’ । ‘कृञः के द्वे च’ । ‘चक्रः’ । कालात्तु ‘पूर्वाह्णसिद्धः’ ॥

---

1. उपपदेषु क.

## [१४४] ॥ अहीने द्वितीया ॥ (6—2—47)

अहीनमत्यक्तम्, तद्वाचिनि समासे द्वितीयान्तं पूर्वपदं प्रकृतिस्वरं क्तान्ते उत्तरपदे । 'अग्निरथौषधीरन्तगता दहति' । 'कष्टश्रितः' । अमेस्तन्प्रत्ययेऽन्तशब्दः । कषेः क्तः 'कष्टः' । 'कृच्छ्रगहनयोः कषः' इति इडभावः । अहीने किम् ? 'कान्तारातीतः' । कान्तारं त्यक्त्वा-नित्यर्थः । 'अहीने' इत्यपनीय 'द्वितीयानुपसर्गे इति वक्तव्यम्' इति वार्त्तिकम् । तेनेहापि नायं स्वरः, 'सुखप्राप्तः' इत्यादि ॥

## [१४५] ॥ तृतीया कर्मणि ॥ (6—2—48)

तृतीयान्तं प्रकृतिस्वरं भवति कर्मणि क्तान्ते उत्तरपदे । 'वरुणगृहीतं वा एतत्' । 'नखनिर्भिन्नम्' । 'कृवृदारिभ्य उनन्' इत्युनन्नन्तो वरुणशब्दः । नास्य खमस्तीति 'नखम्' । 'नभ्राण्ण-पात्' इत्यत्र निपात्यते । 'नञ्सुभ्याम्' इत्यन्तोदात्तः । कर्मणि किम् ? रथेन यातो 'रथयातः' ॥

## [१४६] ॥ इत्थम्भूतेन कृतमिति च ॥ (6—2—149)

कञ्चित् प्रकारं प्राप्त इत्थम्भूतः । तेन कृतमित्यर्थे यः समासः तत्र क्तान्तस्य अन्त उदात्तः । 'सुप्तप्रलपितम्' । 'उन्मत्तप्रलपितम्' । 'तृतीया कर्मणि' इत्यस्य अपवादः । 'कृतम्' इति क्रियासामान्ये करोतिर्वर्तते, न तु अभूतप्रादुर्भावे । तेन 'सुप्तोत्पादितम्' इत्याद्येव उदाहार्यमिति न शङ्क्यम् । पादेन उपहतं 'पदोपहतम्' । 'पादस्य पदाज्यातिगोपहतेषु' इति पदादेशः । तस्य च आन्तर्यात् आद्युदात्तत्वं प्राप्तम् ; पादशब्दस्य

वृषादित्वेन आद्युदात्तत्वात् । अतस्तन्निवृत्तये 'पादस्य पदाजि' इति सूत्रे अन्तोदात्तः पदादेशो निपात्यत इति भाष्यादौ । तेन 'पदोपहतम्' इत्यत्र 'तृतीया कर्मणि' इति पूर्वपदस्य अन्त उदात्तः । तस्यैकादेशः 'स्वरितो वानुदात्ते' इति पक्षे स्वरितः । 'पदाजिः' 'पदातिः' इत्यादौ तु कृत्स्वरेण निपातस्वरो बाध्यते ; निपात्यमानस्य उपदेशिवद्भावेन[1] कृत्स्वरस्य सतिशिष्टत्वात् ॥

## [१४७] ॥ गतिरनन्तरः ॥ (6—2—49)

'गतिः' इति क्तिजन्तः, न क्तिन्नन्तः । [2]तेन अनन्तरशब्दस्य पुंस्त्वम् । 'न क्तिचि दीर्घश्च' इत्यनुनासिकलोपनिषेधस्तु न ; निपातनात् इत्याहुः । कर्मणि क्तान्ते उत्तरपदे अनन्तरो गतिः प्रकृत्या[3] भवति । '[4]क्रीतः सोम उपनद्धो मित्रः' । 'उप' इत्ययमाद्युदात्तः ; 'उपसर्गाश्चाभिवर्जम्' इत्युक्तेः । कर्मणीति किम् ? 'प्रकृतः कटम्' । 'आदिकर्मणि क्तः कर्तरि च' इति कर्तरि क्त इति वृत्त्यादौ । यत्तु 'उत्थिताय स्वाहा' 'विपृक्ताय स्वाहा' इत्यादौ कर्तरि क्तेऽपि गतिस्वरश्रवणम्, तत् व्यत्ययेन प्रादिसमासे अव्ययपूर्वपदप्रकृतिस्वरेण वा बोध्यम् । अनन्तरः किम् ? 'विद्युत् सूर्ये समाहिता' । अत्र व्यवहितगतौ नैष स्वरः । 'गतिर्गतौ' इति निघातः परत्वादत्र बाधको भविष्यतीति चेत्—एवमपि पादादिस्थस्य गतेर्व्यावृत्त्यर्थमनन्तरग्रहणम् । तत्र हि न गतिनिघातः ; 'गतिर्गतौ' इत्यत्र 'अपादादौ' इत्यधिकारात् । अत एव 'उप प्रेत जयता नरः' इत्यादौ न गतिनिघातः । न च क्तान्तपरकत्वाभावादेव व्यवहितगतौ नातिप्रसङ्ग इति

1. -वचनेन ङ.
2. अनन्तर इति पुंल्लिङ्गनिर्देशात् क. ङ.
3. प्रकृतिस्वरः क. ङ.
4. 'उद्गृहीताय स्वाहा' । 'विवृत्ताय स्वाहा' । उद्वी आद्युदात्तौ । उपसर्गाश्च घ.

वाच्यम् ; 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्' इति परिभाषया व्यवहितगतेरपि क्तान्तपरकत्वात् । व्यवहितनिवृत्त्यर्थं क्रियमाणमिदमनन्तरग्रहणमेव एकदेशद्वारा परिभाषायामस्यां ज्ञापकम् । न चैवं कृतेऽप्यनन्तरग्रहणे उक्तपरिभाषयैव [1]गतिव्यवहितगतौ दोषतादवस्थ्यमिति वाच्यम् ; अनन्तरग्रहणसामर्थ्यात् धात्वानन्तर्यस्यैव अत्राश्रयणात् । उक्तपरिभाषाफलं तु 'नखनिर्भिन्नम्' इत्यादौ 'तृतीया कर्मणि' इत्यादिस्वरसिद्धिः ॥

स्यादेतत्—'वि॒द्युत् सू॒र्यै स॒माहि॑ता' इत्यादौ कथमाङः स्वरः ? थाथादिस्वरौचित्यात् । न च तमपि बाधित्वा गतिस्वर इति युक्तम् ; आङा हितशब्दस्य समासे तं बाधित्वा गतिस्वरप्रवृत्तावपि सम आहितशब्दस्य समासे थाथादिस्वरस्यैव प्रसङ्गात् । न च पुनराङि गतिस्वरः प्रवर्त्यः ; द्वितीयसमासे तस्य अपूर्वपदत्वात् । तस्मात् 'समाहिता' इत्यादौ थाथादिस्वरबाधनाय अनन्तरग्रहणम् अपूर्वस्य[2] गतेरनन्तरस्य प्रकृतिभावविध्यर्थं व्याख्येयम् । न चैवम् 'दूरादागतो ग्रामः' इत्यादौ कारकपूर्वेऽप्यपूर्वपदे गतौ गतिस्वरः थाथादिस्वरं बाधेतेति वाच्यम् ; अनेकगतिसन्निधावेव अपूर्वपदस्य गतेः स्वरप्राप्त्यर्थम् अनन्तरग्रहणमिति व्याख्यानात् । तदेवमन्यार्थं क्रियमाणमनन्तरग्रहणं कथं उक्तपरिभाषाज्ञापकमिति । अत्रोक्तम् आकरे—'कारकाद्दत्तश्रुतयोः' इत्यत्र 'कारकात्' इति योगो विभज्यते । गतिग्रहणं क्तग्रहणं च तत्र अनुवर्तते । तदयमर्थः—कारकात् परं सगतिकं क्तान्तमन्तोदात्तमिति । थाथादिस्वरेणैव[3] सिद्धे नियमार्थमिदम्—[4]कारकात् परमेव सगतिकं क्तान्तमन्तोदात्तं भवति[5] न गतेः परमिति । तेन समाहितादौ थाथादिस्वराभावे कृत्स्वरेण सिद्धमाङादेरुदात्तत्वम् ।

---

1. गति- ङ. नास्ति ।
2. अपूर्वपदस्यापि गतेः घ. ङ.
3. थाथादिसूत्रेणैव घ.
4. कारकात् परमेव क्तान्तं सगतिकमन्तोदात्तं न गतेः परमिति समाहिता ... घ.
5. भवति. ङ. नास्ति ।

दूरादागतादौ तु थाथादिस्वर एव । एवं च अनन्तरग्रहणं पूर्वोक्तरीत्या व्यवहितगतिनिवृत्त्यर्थं सत् उक्तपरिभाषाज्ञापकमेवेति[1] दिक् ॥

## [१४८] ॥ क्ते नित्यार्थे ॥ (6—2—61)

क्तान्ते परतः पूर्वपदं प्रकृतिस्वरं नित्यार्थे समासे । नित्यमाभीक्ष्ण्यम् । नित्यं प्रहसितः 'नित्यप्रहसितः' । कर्मणि द्वितीया ; 'अकर्मकधातुभिर्योगे' इति कालस्य कर्मत्वात् । 'कालाः' इति द्वितीयासमासः । 'त्यब्नेर्ध्रुवे' इति त्यबन्तो नित्यशब्दः । नित्यार्थे किम् ? 'मुहूर्तप्रहसितः' ॥

## [१४९] ॥ सूपमानात् क्तः ॥ (6—2—145)

सोः उपमानवाचिनश्च परं क्तान्तमन्तोदात्तम् । 'सूक्तं च मे सुकृतं च मे' । वृकैरिव अवलुप्तम् 'वृकावलुप्तम्' । कर्मणि क्तः । 'कर्तृकरणे कृता' इति समासः । गतेरित्येव । 'सुप्रीतः सुभृतमकर्म' । अत्र 'सुः पूजायाम्' इति सुः कर्मप्रवचनीयः, न गतिः । 'स्वती पूजायाम्' इति समासः । अव्ययपूर्वपद-प्रकृतिस्वरः । यत्तु अत्र 'गतिरनन्तरः' इति सोः प्रकृतिस्वरः इति वेदभाष्यम्, तच्चिन्त्यम् ; उपमानांशे 'तृतीया कर्मणि' इत्यस्य अपवादः सुशब्दाद्गतिस्वरस्य । 'सोमः सुषुतम्' इत्यत्र तु व्यत्ययेन गतिस्वरः ॥

## [१५०] ॥ संज्ञायामनाचितादीनाम् ॥ (6—2—146)

गत्यादेः परस्य क्तान्तस्य अन्त उदात्तः संज्ञायाम्, न तु आचितादीनाम् । 'तद्विष्णुः शिपिविष्टः' । शिपयो रश्मयः, तैर्विष्टः,

1. -भाषां ज्ञापयत्येवेति । क.

अग्न्यादिनाम[1] इत्याहुः । 'परिवित्तो वीरहणि' 'उन्नत ऋषभः' इत्यादौ तु कृत्स्वरेणापि इष्टसिद्धिः । आचितादौ तु न । 'आचितम्' 'आस्थापितम्' इत्यादि । 'यवाचितमच्छावाकाय' इत्यत्र वेदभाष्यम् —यवा अस्मिन्नाचीयन्ते, यवैर्वा आचितं यवाचितं शकटमुच्यते । 'संज्ञायामनाचितादीनाम्' इत्यन्तोदात्तत्वं व्यत्ययेनेति ॥

'संहिता गवि' इति गणसूत्रम् । संहिताशब्दो यदा गोः संज्ञा तदा अन्तोदात्तः । अन्यस्य संज्ञा चेन्न अन्तोदात्तः[2] । 'सꣳहितासि विश्वरूपीः' । अयमपि 'तृतीया कर्मणि' इत्यस्य गतिस्वरस्य च अपवादः ॥

## [१५१] ॥ कारकाद्दत्तश्रुतयोरेवाशिषि ॥
(6—2—148)

कारकात् परयोर्दत्तश्रुतयोरेव क्तान्तयोरन्त उदात्त आशिषि संज्ञायाम् । देवा एनं देयासुः इति प्रार्थिते देवैर्दत्तः 'देवदत्तः' । विष्णुरेनं श्रूयात् 'विष्णुश्रुतः' । 'आशिषि लिङ्लोटौ' । 'क्तिच्क्तौ च संज्ञायाम्' इति क्ते 'दोदद्घोः' । पूर्वेण प्राप्ते नियमः । तेन 'देवपालितः' इत्यादौ 'तृतीया कर्मणि' इत्येव स्वरः । इष्टतोऽवधारणार्थ एवकारः । अत्र च 'दत्तश्रुतयोराशिष्येव' इति नियम आश्रीयते सूत्रावृत्त्यादिना । तेन 'नानाहितं नदति देवदत्तः' इत्यादौ अन्तोदात्तत्वम् । देवदत्तोऽत्र धनञ्जयशङ्खः । अत्र आशीरभावात् 'तृतीया कर्मणि' इत्येव स्वरः । तदुक्तम्—सिद्धं तूभयनियमात्—इति ॥

---

1. अग्न्यादीनाम् एकतमः ङ. 2. इदं वाक्यं ख. नास्ति।

## [१५२] ॥ प्रवृद्धादीनां च ॥ (6—2—147)

एषां सम्बन्धिनः क्तान्तस्य अन्त उदात्तः । 'प्रवृद्धं यानम्' 'प्रयुक्ताः सक्तवः' इत्यादि । 'कविशस्तः' इत्यादौ[1] कविभिः शस्तः कविशस्तः । असंज्ञार्थं सूत्रम् । आकृतिगणोऽयम् । तेन 'घृतानुषिक्ताम्' 'पुनर्निष्कृतो रथः' इत्यादि सिद्धम् । अयमपि 'तृतीया कर्मणि' इत्यस्य गतिस्वरस्य च अपवादः ॥

॥ इति थाथादिस्वरापवादः ॥

---

॥ अथ कृत्स्वरस्यैव[2] अपवादः ॥

## [१५३] ॥ अनो भावकर्मवचनः ॥ (6—2—150)

कारकात् परस्य भावकर्मवचनस्य अनान्तस्य अन्त उदात्तः । 'ओदनभोजनम्' । 'कर्मणि च येन संस्पर्शात' इति कर्मण्युपपदे भावे ल्युट् । उपपदसमासः । राजभोजनाः [illegible] । 'प्रातस्सवनस्य गायत्रछन्दसः' । प्रातः सूयत इति प्रातस्सवनः सोमः । बाहुलकात् कर्मणि ल्युट् । 'अग्नेस्तूषाधानं वायोर्वीतपानम्' । 'शलाकोपधानरज्जवस्तूषाः । तत्र तन्तूनामा[illegible]नं पूरणं तूषाधानम् । सेचनानि पाययित्वा वातेन पानं शोषणं [illegible]पानम् । उभयत्र[3] व्यत्ययेन[4] कृत्स्वरः' इति वेदभाष्यम् । अनः किम् ? 'तस्मादनो वाह्यम्' । भावकर्मवचनः किम् ? '[illegible]कृसमार्जनानि' । कारकात् किम् ? 'तदस्य समञ्जनं च'

---

1. इत्याह घ.
2. एवं घ. ना. ।
3. उभयत्रात्र घ.
4. व्यत्ययेन घ. नास्ति ।

## [१५४] ॥ मन्क्तिन्व्याख्यानशयनासनस्थानयाजकादि-क्रीताः ॥ (6—2—151)

कारकात् परेषां मन्नन्तादीनामन्त उदात्तः । 'रथवर्त्मा' वृतेरधिकरणे मनिन् । कर्तरि षष्ठ्या समासः । क्तिन्—'पाणिनिकृतिः' । 'वाजसातये' । 'धियें पूषन्' । वाजः अन्नं सद्यते लभ्यतेऽस्याम् इत्यधिकरणे क्तिन् । 'जनसन' इति आत्वम् । अत्र दासीभारादित्वात् पूर्वपदप्रकृतिस्वर इति वेदभाष्यम् । 'छन्दोव्याख्यानम्' । [1]अधिकरणे ल्युट् । 'राजशयनम्[2]' । 'द्विजासनम्'। 'गोस्थानम्' । 'गच्छ गोस्थानम्' इत्यत्र तु 'परादिश्छन्दसि बहुलम्' इति स्वर इति वेदभाष्यम् । शयनादौ अधिकरणे ल्युट् । 'द्विजयाजकः'। 'द्विजपूजकः' । 'याजकादिभिश्च' इति षष्ठीसमासः । त एवेह गृह्यन्ते । 'गोक्रीतः' । इह 'तृतीया कर्मणि' इत्येतत् प्राप्तम् । कारकात् किम् ? 'प्रभूतौ भूयाम ते' इत्यादौ 'तादौ च निति' इति पूर्वपदप्रकृतिस्वरः । एतेन 'अग्ने जनामि सुष्टुतिम्' 'सुक्षितिः' इत्यादौ 'मन्क्तिन्' इत्यन्तोदात्तत्वम् इति वेदभाष्यम् चिन्त्यम् ; अत्र 'कारकात्' इत्यनुवृत्तेः । अत एव "स्याम ते सुमतावपि' इत्यत्र क्तिचि कृत्स्वरः, क्तिनि 'तादौ च' इति बाधित्वा व्यत्ययेन वा कृत्स्वरः' इति वेदभाष्य एव स्थितम् ॥

## [१५५] ॥ आदिरुदात्तः ॥ (6—2—64)

'अन्तः' इत्यतः प्राक् आद्यधिकारः । उदात्ताधिकारस्तु[3] आ पादपरिसमाप्तेः ॥

---

1. करणे घ. ङ.
2. खट्वाशयनम् ङ.
3. उदात्ताधिकारस्तु घ. नास्ति ।

## [१५६] ॥ अके जीविकार्थे ॥ (6—2—73)

अकान्ते उत्तरपदे पूर्वपदस्य आदिरुदात्तः जीविकारूपे समासप्रवृत्तिनिमित्ते । 'दन्तलेखकः[1]' । 'नित्यं क्रीडाजीविकयोः' इति षष्ठीसमासः । अके किम् ? 'चारुकर्ता' । जीविकार्थे किम् ? इक्षुभक्षिकां मे धारयति । 'पर्यायार्हर्ण' इति ण्वुच् ॥

## [१५७] ॥ प्राचां क्रीडायाम् ॥ (6—2—74)

प्राग्देशवर्तिनी या क्रीडा तद्वाचिनि समासे पूर्वपदस्य आदिः उदात्तः अकान्ते उत्तरपदे । 'उद्दालकपुष्पभञ्जिका' । पुष्पान्तात् कर्मणि षष्ठी । 'नित्यं क्रीडा' इति समासः । 'संज्ञायाम्' इति ण्वुल् ॥

## [१५८] ॥ अणि नियुक्ते ॥ (6—2—75)

नियुक्तोऽधिकृतः । तद्वाचिनि समासे पूर्वपदस्य आदिरुदात्तः अणन्ते उत्तरपदे । 'तूणीधारः' । 'कर्मण्यण्' ॥

## [१५९] ॥ संज्ञायां च ॥ (6—2—77)

अकृञो योऽण् तदन्ते उत्तरपदे पूर्वपदस्य आदिरुदात्तः संज्ञायाम् । 'वालवायो नाम गिरिः' । अकृञः किम् ? 'रथकारो नाम ब्राह्मणः' इति वृत्तौ ॥

---

1. दन्तलेखनेन जीविका यस्य घ. अधिकम् ।

## [१६०] ॥ णिनि ॥ (6—2—79)

णिन्यन्ते उत्तरपदे पूर्वपदस्य आदिरुदात्तः । 'फलहारी' । 'ब्रह्मवादिनो वदन्ति' इत्यादौ उत्तरपदान्तोदात्तत्वं व्यत्ययात् । अत एव 'ब्रह्मचार्यसि' इत्यादौ प्रवृद्धादित्वात् अन्तोदात्तत्वम्, बहुलग्रहणात् इत्यपरे इति 'बहुव्रीहौ प्रकृत्या' इत्यत्र हरदत्तः । 'ऊर्ध्वमन्थिनो बभूवुः' इत्यत्र वेदभाष्यम्—ऊर्ध्वं मथ्नन्ति इति ऊर्ध्वमन्थिनः, ऊर्ध्वरेतसः । 'णिनि' इति पूर्वपदप्रकृतिस्वरः । विभक्त्युदात्तत्वं तु च्छान्दसम्—इति ॥

## [१६१] ॥ उपमानं शब्दार्थप्रकृतावेव ॥ (6—2—80)

उपमानवाचिनः पूर्वपदस्य आदिरुदात्तः शब्दनक्रियार्थो धातुर्यस्य प्रकृतिस्तस्मिन्नेव णिन्यन्ते उत्तरपदे । उष्ट्र इव क्रोशति 'उष्ट्रक्रोशी' । 'कर्तर्युपमाने' इति णिनिः । पूर्वेण प्राप्तौ नियमात् इह न । 'प्रष्टिवाही रथः' । 'त्रिपादाधारविशेषः प्रष्टिः । तद्वाही अश्वत्रययुक्तो रथः' इति वेदभाष्यम् । प्रकृतिग्रहणं यत्र प्रकृतिरेव उपसर्गनिरपेक्षा शब्दार्था तत्रैव यथा स्यात्, यत्र धातूपसर्ग-समुदायस्य शब्दार्थकत्वं तत्र मा भूदिति । तेन 'कोकिलव्याहारी' इत्यादावपि कृत्स्वर एव । एवकार इष्टतोऽवधारणार्थः ॥

## [१६२] ॥ दीर्घकाशकुशभ्राष्ट्रवटं जे ॥ (6—2—82)

दीर्घान्तस्य काशादीनां च आदिरुदात्तो जशब्दे उत्तरपदे । 'कुटीजः' 'काशेजः' इत्यादि । 'सप्तम्यां जनेर्डः' । दीर्घादि इति किम् ? 'अप्सुजो वेतसः' । 'अब्जा गोजाः' इत्यादौ तु न

जशब्द उत्तरपदम्, किन्तु 'जनसनखनक्रमगमो विट्' 'विड्वनोः' इत्यात्वे 'जा' इत्याकारान्तम् ॥

## [१६३] ॥ अन्त्यात् पूर्वं बह्वचः ॥ (6—2—83)

बह्वचः पूर्वपदस्य अन्त्यात् पूर्वम् उदात्तं जशब्दे उत्तरपदे । 'मन्दुरजः' । 'वाजिशाला तु मन्दुरा' । 'ङ्यापोः' इति ह्रस्वः । 'आमलकीजः' इत्यादौ 'दीर्घकाश' इत्यतः परत्वात् अनेन अन्त्यात् पूर्वं उदात्तः । 'कर्मण्यण्' इत्यत्र वार्त्तिके—

॥ शीलिकामिभिक्ष्याचरिभ्यो णः पूर्वपदप्रकृतिस्वरत्वम् ॥

॥ ईक्षिक्षमिभ्यां च ॥

इति । अणि प्रकृते णविधिर्ङीबभावाय । कृत्स्वरापवादः पूर्वपदप्रकृतिस्वरविधिः । 'मांसशीला' । 'पुत्रकामा' । 'इ॒न्द्रि॒यका॑मो वी॒र्य॑कामः' । 'इन्द्रियमिन्द्रलिङ्गम्' इत्यत्र घप्रत्ययान्तोऽन्तोदात्त इन्द्रियशब्दो निपातितः । वीर्यशब्दो यदन्तः तित्स्वरितः । 'प्र॒जाप॒शुका॑मो वा' इत्यत्र व्यत्ययादाद्युदात्तत्वम् । अदेवताद्वन्द्वत्वान्न पदद्वयप्रकृतिस्वर इति वेदभाष्यम् । 'मांसभिक्षा' । 'कल्याणाचारा' । 'सुखप्रतीक्षा' । 'बहुक्षमा[1]' ॥

॥ इति कृत्स्वरस्यैव अपवादः ॥

---

1. अधिकक्षामा घ.

## ॥ अथ औणादिककृत्स्वरापवादः ॥

### [१६४] ॥ समाने ख्यः स चोदात्तः ॥ (उ)

समानशब्दे उपपदे ख्याधातोरिण्प्रत्ययः, स च डिच्च, यलोपश्च । समानस्य सादेशः, स चोदात्तः । डित्त्वात् आकारलोपः । 'सखा सखिभ्यः' ॥

### [१६५] ॥ आङि श्रिहनिभ्यां ह्रस्वश्च ॥ (उ)

इण् स्यात्, स च डित्, आङो ह्रस्वश्च । 'उदात्तः' इत्यनुवृत्तेराद्युदात्त इति स्वरमञ्जर्याम् । 'अहिरसि बुध्न्यः' इत्यत्र वेदभाष्येऽपि एवमाश्रितः । 'अहिः' । 'अग्निष्ठाश्रिस्संमिता' । 'अहिरिव भोगैः' ॥

### [१६६] ॥ गतिकरकोपपदयोः पूर्वपदप्रकृति-स्वरत्वं च ॥ (उ)

'मिथुनेऽसिः पूर्ववच्च सर्वम्' इत्यसिप्रत्ययप्रकरणस्थमिदं सूत्रम् । असिप्रत्ययान्ते परतः गतिकारकयोः प्रकृतिस्वरः कृत्स्वर-बाधनाय विधीयते । 'विश्वो विहाया अरतिः' । 'शोणा धृष्णू नृवाहसा' । 'विश्वधाया असि परमेण' । 'जातवेदा मोर्जयन्त्या पुनातु' । 'मिथुनेऽसिः' इति असिप्रत्ययान्तो विहायश्शब्दः । इदं च सूत्रं सिद्धान्तकौमुद्यादौ इत्थं व्याख्यातम्—उपसर्गविशिष्टो

धातुर्मिथुनम् । तत्र असुनोऽपवादोऽसिप्रत्ययः स्वरार्थः[1] । 'पूर्ववत्' इत्यादिना 'पूर्वप्रकृतासुन्विषये[2] यद्यत् कार्यम्, तत्सर्वमतिदिश्यते असिप्रत्यये । पूर्वत्र 'वहिहाधाञ्भ्यश्छन्दसि' इत्यसुन्विधौ हाधातोरसुन्प्रत्ययस्य णित्वं विहितमिति तस्य इह अतिदेशात् 'आतो युक्' इति युकि 'विहायाः' इति रूपम् । 'नृवाहसा' 'विश्वधायाः' 'जातवेदाः' इत्यसुन्नन्ताः । अत्र कारकाणां प्रकृतिस्वरः । वहेर्धाञश्च असुनो णित्त्वात् उपधावृद्धिर्युगागमश्च । यद्यपि विश्वशब्दः कन्नन्त आद्युदात्तः, तथापि पूर्वपदप्रकृतिस्वरवचनं बहुव्रीहिस्वरोपलक्षणार्थम् । तेन 'बहुव्रीहौ विश्वं संज्ञायाम्' इति विश्वशब्दस्य अन्त उदात्त इति वेदभाष्यकृतः । स्वरमञ्जरीकारस्तु 'मिथुनेऽसिः पूर्ववच्च सर्वम् गतिकारकयोः पूर्वपदप्रकृतिस्वरत्वं च' इति सूत्रद्वयमेकीकृत्य पठित्वा 'सर्वेधातुभ्यो गतिकारकयोरुपपदयोः मिथुने स्त्रीपुंसयोरसिप्रत्ययः पूर्वपदप्रकृतिस्वरत्वं च' इति व्याख्याय 'पावकवर्चाः' 'विश्वो विहाया अरतिः' इत्याद्युदाजहार ॥

## [१६७] ॥ गौः सादसादिसारथिषु ॥

(6—2—41)

एषु परतो गौः प्रकृत्या भवति । 'गोसादः' । घञन्तेन षष्ठीसमासः । सदेर्ण्यन्तात् कर्मण्यण वा । 'गोसादी' । णिनिः । 'गोसारथिः' । आद्ययोः कृत्स्वरस्य अपवादः, अन्त्ये समासस्वरस्य, इति हरदत्तः । गौरिव सीदति गोसादी इत्यत्र पूर्वपदप्रकृतिस्वरार्थं सादिग्रहणम् । अन्यत्र 'णिनि' इति पूर्वपदाद्युदात्तत्वेन इष्टसिद्धिः । उक्तस्थले तु न तेनेष्टसिद्धिः ;

1. असिः स्वरार्थः ङ. 2. पूर्वप्रक्रान्तासुन्प्रत्ययविषये घ. ङ.

'उपमानं शब्दार्थप्रकृतावेव' इति नियमात् । 'राजसूयसूर्य' इति सूत्रे कृष्टपच्यशब्दः कर्मकर्तरि क्विबन्तोऽन्तोदात्तो निपातितः[1] । तत्र कृत्स्वरेण धातोरुदात्तत्वे प्राप्ते इदम् अन्तोदात्तनिपातनम् । कृष्टे स्वयमेव पच्यन्ते कृष्टपच्याः । 'कृष्टपच्यं च मेऽकृष्टपच्यं च' । 'कृत्योकेष्णुच्' इति अकृष्टपच्येऽन्त उदात्तः । एवं च वेदभाष्ये—'तस्मादकृष्टपच्या ओषधयः पच्यन्ते' इत्यत्र 'अकृष्टपच्याः' इति बहुव्रीहिः । 'नञ्सुभ्याम्' इत्यन्त उदात्तः, तत्पुरुषत्वे व्यत्ययेन न अव्ययपूर्वपदप्रकृतिस्वरः इति किमर्थमुक्तम् इति चिन्त्यम् ॥

॥ इति औणादिककृत्स्वरापवादः ॥

---

## ॥ अथ चत्वारो योगा अव्ययस्वरस्य कृत्स्वरस्य वा अपवादाः ॥

## [१६८] ॥ प्रतेरंश्वादयस्तत्पुरुषे ॥

(6—2—193)

प्रतेः परेषामंश्वादीनामन्त उदात्तः तत्पुरुषे । प्रतिगतोऽंशुः 'प्रत्यंशुः' । 'प्रतिराजा' । इह राजन्शब्दपाठः समासान्तस्य अनित्यत्वे लिङ्गम् ; अन्यथा 'राजाहः' इति टचश्चित्त्वेनैव अन्तोदात्तत्वसिद्धौ तद्वैयर्थ्यात् ॥

'अंश्वादयोंऽशुराजोष्ट्रखेटकाजिरकृत्तिकाः ।
आर्द्राश्रवणमर्धेश्च पुरमित्युदिता दश ॥'

---

1. निपात्यते ङ.

## [ १६९ ] ॥ उपाद्व्यजजिनमगौरादयः ॥ (6—2—194)

उपात् परस्य व्यचः अजिनस्य च अन्त उदात्तः गौरादीन् विना । उपगतो देवम्[1] 'उपदेवः' । 'उपांशुंहुत्वा' । 'यदुपांशुः' । 'उपाजिनः' ॥

'गौरस्तैषो[2] लेटलौटौ जिह्वा कृष्णगुडस्तथा ।
कन्या कल्पः पाद इति दश गौरादयः स्मृताः ॥'

## [ १७० ] ॥ सोरपक्षेपणे[3] ॥ (6—2—195)

सोः परस्य अन्त उदात्तो निन्दायाम् । इह खलु इदानीं सुस्थण्डिले सुस्फिगाभ्यां 'सुप्रत्यवसितः' । 'स्वती पूजायाम्' इति कर्मप्रवचनीयस्य सोः समासः । तेन सुप्रत्यवसिते थाथादिस्वरेण नेष्टसिद्धिः । यस्तु अनर्थे उपस्थिते सुखायमान आस्ते, तं प्रति इयमुक्तिरिति क्षेपो गम्यते ॥

## [ १७१ ] ॥ विभाषोत्पुच्छे ॥ (6—2—196)

अस्य वा अन्त उदात्तः । उत्क्रान्तः पुच्छात् 'उत्पुच्छः' । अव्ययस्वरेण बाधात् अप्राप्तम् अन्तोदात्तत्वम् अत्र विकल्प्यते । पुच्छमुदस्यति उत्पुच्छयते । ततः पचाद्यच् । 'उत्पुच्छः' इत्यत्र तु थाथादिस्वरेण नित्यं अन्तोदात्तत्वं विकल्प्यत इति उभयत्र विभाषेयम् इत्याहुः ॥

॥ इत्यव्ययपूर्वपदप्रकृतिस्वरकृत्स्वरयोरपवादः[4] ॥

---

1. देशम् उपदेशः घ.
2. -तौषः ङ.
3. अवक्षेपणे घ.
4. निरूपणम् घ. ङ.

## ॥ अथ समासस्वरस्यैव अपवादः ॥

### [ १७२ ] ॥ वर्णो वर्णेष्वनेते ॥ (6—2—3)

एतभिन्नवर्णवाचिनि उत्तरपदे वर्णवाची प्रकृत्या स्यात् । 'अरुणबभ्रुः' । 'धूम्रलोहितः' । 'अर्तेश्चिच्च' इत्युनन्नन्तश्चित्स्वरेण अन्तोदात्तः अरुणशब्दः । धूम्रशब्दः फिट्स्वरेण । अनेते इति किम् ? 'कृष्णैताय स्वाहा' । एतः शबलः ॥

### [ १७३ ] ॥ गाधलवणयोः प्रमाणे ॥ (6—2—4)

अनयोः[1] पूर्वपदं प्रकृतिस्वरं भवति इयत्तापरिच्छेदवाचिनि तत्पुरुषे । 'शम्बगाधं जलम्' । तत्प्रमाणम् इत्यर्थः । 'शमेर्बन्' । शम्बः । आद्युदात्तः । 'गोलवणम्' । यावद्गवे दीयते तावदित्यर्थः । षष्ठी तत्पुरुषावेतौ ॥

### [ १७४ ] ॥ दायाद्यं दायादे ॥ (6—2—5)

दातव्यं दायः । तमादत्ते दायादः । मूलविभुजादित्वात् कः । तस्य भावः दायाद्यम् । इह लक्षणया दाय एवोच्यते । तद्वाचि पूर्वपदं दायादशब्दे परे प्रकृतिस्वरं भवति[2] । 'धनदायादः' । 'नब्विषयस्य' इति धनशब्द आद्युदात्तः । 'स्वामीश्वराधिपतिदायाद' इति तत्पुरुषः[3] ॥

---

1. परतः क. अधिकम्
2. भवति क. नास्ति ।
3. षठ्या न समासः घ. षष्ठ्या तत्पुरुषः क.

## [ १७५ ] ॥ प्रतिबन्धि चिरकृच्छ्रयोः ॥ (6—2—6)

कार्यसिद्धिमवश्यं प्रतिबध्नातीति प्रतिबन्धी । आवश्यके णिनिः । तद्वाचि प्रकृतिस्वरं भवति चिरकृच्छ्रयोः परतः । 'गमनचिरम्' । 'गमनकृच्छ्रम्' । चिरकृच्छ्रशब्दौ कालविशेषदुःखयोर्वाचकौ अत्र लक्षणया तद्युक्ते गमने वर्तेते इति विशेषणसमासे मयूरव्यंसकादित्वात् विशेष्यस्य पूर्वनिपातः । गमनं हि चिरकालभावि कृच्छ्रयोगि वा सत् कार्यसिद्धेः प्रतिबन्धकं भवति ॥

## [ १७६ ] ॥ पदेऽपदेशे ॥ (6—2—7)

अपदेशो व्याजः । तद्वाचिनि पदशब्दे परे पूर्वपदं प्रकृतिस्वरम् । 'मूत्रपदेन प्रस्थितः' । मूत्रशब्दः आद्युदात्तः ; 'सिविमुच्योष्टेरू च' इति ष्ट्रन्नन्तत्वात् । समासः प्राग्वत् ॥

## [ १७७ ] ॥ निवाते वातत्राणे ॥ (6—2—8)

वातत्राणवाचिनि तत्पुरुषे पूर्वपदं प्रकृतिस्वरं निवातशब्दे परे । निवातो वाताभावः । 'कुटीनिवातम्' । कुटीहेतुके निवाते तत्र कुटीशब्द इति समानाधिकरणसमासः । कुटीशब्दो गौरादिङीषन्तः । वातत्राणे किम् ? 'राजनिवाते सुखं वसति' । निवातशब्दोऽत्र पार्श्वे रूढः । षष्ठीसमासः ॥

## [ १७८ ] ॥ शारदेऽनार्तवे ॥ (6—2—9)

ऋतौ भवमार्तवम्, तदन्यवाचिनि शारदशब्दे परे पूर्वपदं प्रकृतिस्वरम् । 'रज्जुशारदं जलम्' । शारदशब्दः प्रत्यग्रवाची ।

रज्जूद्धृते रज्जुशब्दः । ततः कर्मधारयोऽस्वपदविग्रहः । सद्यो रज्जूद्धृतम् अनुपहतं जलम् इत्यर्थः । 'सृजेरसुम् च' इति उप्रत्यये रज्जुशब्दः । तत्र 'नित्' इत्यनुवृत्तेराद्युदात्तः ॥

## [१७९] ॥ अध्वर्युकषाययोर्जातौ ॥ (6—2—10)

अनयोः परतः पूर्वपदं प्रकृतिस्वरं जातिवाचिनि तत्पुरुषे । 'प्राच्याध्वर्युः' । 'माषपुष्पकषायः[1]' । [2]प्राच्यशब्दो यदन्तः । कर्मधारयः समानाधिकरणसमासः चरणविशेषनियतः । अन्यः षष्ठीतत्पुरुषः । माषपुष्पशब्दः 'समासस्य' इत्यन्तोदात्तः । इमौ समासौ जातिवचनौ । जाताविति किम् ? 'परमाध्वर्युः' । 'परमकषायः' ॥

## [१८०] ॥ सदृशप्रतिरूपयोः सादृश्ये ॥ (6—2—11)

अनयोः परतः पूर्वपदं प्रकृतिस्वरं सादृश्यार्थकतत्पुरुषे । 'वृषलयाःसदृशः' । 'तुल्यार्थैरतुलोपमाभ्याम्' इति षष्ठी । 'षष्ठी' इति समासः । 'षष्ठ्या आक्रोशे' इत्यलुक् । 'पितृसदृश' इति नोदाहृतम्, 'पूर्वसदृश' इति तृतीयासमासे तृतीयापूर्वपद-प्रकृतिस्वरेण अन्यथासिद्धिशङ्कया । न चैवं षष्ठीसमासेनैव स्वररूपयोः सिद्धौ तृतीयासमासविधानानर्थक्यं शङ्क्यम् ; 'मनसा-सदृशः' इति समस्तपदे 'मनसः संज्ञायाम्' इति अलुकि तृतीया-श्रवणाय तद्विधेरावश्यकत्वात् इति दिक् । 'पितृप्रतिरूपः' । जातिलक्षणङीषन्तो वृषलीशब्दः । पितृशब्दः औणादिकतृजन्तः । सादृश्ये किम् ? 'परमसदृशः' । यत्र सादृश्यप्रतियोगिसमर्पकं पूर्व-पदं तत्रैव सादृश्यं समासार्थ इति सादृश्यग्रहणसामर्थ्याश्रयणादिह[3] न ॥

---

1. माषपुष्टकषायः घ.
2. प्राच्य...तत्पुरुषः ख. नास्ति
3. अत्र ङ.

## [१८१] ॥ द्विगौ प्रमाणे ॥ (6—2—12)

द्विगौ उत्तरपदे प्रमाणवाचिनि तत्पुरुषे पूर्वपदं प्रकृतिस्वरम् । सप्तशमाः प्रमाणमस्य सप्तशमः । 'प्रमाणे लो द्विगोर्नित्यम्' इति मात्रचो लुक् । 'प्राच्यसप्तशमः' । कर्मधारयः । प्राच्यशब्द उक्तस्वरः । द्विगौ किम् ? 'व्रीहिप्रस्थः' । यत्तु 'द्विषाहस्रं चिन्वीत' इत्यत्र वेदभाष्यम्—"द्वे सहस्रे प्रमाणमस्य द्विषाहस्रम् । 'प्राग्वतेः संख्यापूर्वपदानां तदन्तग्रहणमलुकि' इति तदन्तविधेः 'शतमानविंशतिक' इत्यण् । 'अध्यर्धपूर्वात्' इति लुक् तु न ; 'विभाषा कार्षापणसहस्राभ्याम्' इति विकल्पनात् । 'संख्यायाः संवत्सरसंख्यस्य च' इत्युत्तरपदवृद्धिः । सुषामादित्वात् षत्वम् । 'द्विगौ प्रमाणे' इति पूर्वपदप्रकृतिस्वरः" इति, यदपि 'द्विभाग इन्द्रः' इत्यत्र तत्रैवोक्तम्—द्वयोर्भागयोः समाहारः द्विभागम् । 'द्विगौ प्रमाणे' इति पूर्वपदप्रकृतिस्वर इति, तदुभयं चिन्त्यम् ; 'द्विगावुत्तरपदे पूर्वपदस्य स्वरः' इति सूत्रार्थस्य आकरे स्थितत्वात्[1] अत्र द्विगोरुत्तरपदत्वाभावात् । 'द्विषाहस्रम्' इत्यत्र सतिशिष्टत्वेन अण्स्वरप्रसंगाच्च । तस्मात् सहस्रम् अस्य अस्तीति 'साहस्रः' इष्टकासमुदायः । 'तपः सहस्राभ्यां विनीनी' 'अण् च' इत्यण् । द्वौ साहस्रौ यस्य सः 'द्विषाहस्रः', द्वौ भागौ यस्य सः 'द्विभागः' समुदाय इति बहुव्रीहेः, व्यत्ययाद्वा अत्र स्वरनिर्वाहो बोध्यः ॥

## [१८२] ॥ गन्तव्यपण्यं वाणिजे ॥ (6—2—13)

वणिगेव वाणिजः । प्रज्ञाद्यण् । तस्मिन् परे गन्तव्यवाचि पण्यवाचि च प्रकृतिस्वरम् । 'मद्रवाणिजः' । योगविभागात्

1. अवस्थानात् घ. ङ.

सप्तमीसमासः । मद्रान् गत्वा व्यवहरति इत्यर्थः । मद्रशब्दो रक्प्रत्ययान्तः अन्तोदात्तः । 'गोवाणिजः' । षष्ठीसमासः ॥

## [ १८३ ] ॥ मात्रोपज्ञोपक्रमच्छाये नपुंसके ॥
(6—2—14)

एषु परतः पूर्वपदं प्रकृतिस्वरं नपुंसके तत्पुरुषे । 'समुद्रमात्रं सरः' । मात्रशब्दः तुल्यपर्यायः वृत्तिविषये तुल्यप्रमाणे वर्तते । तत्र समुद्रतुल्यप्रमाणम् इति अस्वपदविग्रहः । षष्ठीसमासः । समुद्रशब्दः सागरार्थत्वात् अन्तोदात्तः । 'व्याड्युपज्ञम्' । 'नन्दोपक्रमम्' । 'इषुच्छायम्' । एतेऽपि षष्ठीसमासाः । व्याडिशब्द[1] आद्युदात्तः । नन्दशब्दः पचाद्यजन्तः । 'धान्ये नित्' इत्यनुवृत्तौ 'ईषेः किच्च' इत्युप्रत्यये इषुशब्दः आद्युदात्तः । मात्रशब्दान्तः स्वभावान्नपुंसके । इतरत्र 'उपज्ञोपक्रमम्' इति 'छायाबाहुल्ये' इति च क्लीबता ॥

## [ १८४ ] ॥ सुखप्रिययोर्हिते ॥ (6—2—15)

अनयोः परयोः पूर्वपदं प्रकृतिस्वरं हितार्थे तत्पुरुषे । 'व्याकरणसुखम्' । 'व्याकरणप्रियम्' । अत्र सुखप्रियशब्दौ तद्धेतौ आयत्यां परिणामे[2] प्रीतिकरे वर्तेते । ततः समानाधिकरणसमासः ॥

---

1. इञन्तः ङ. अधिकम् । 2. परिणामे घ. ङ. नास्ति ।

## [ १८५ ] ॥ प्रीतौ च ॥ (6—2—16)

अस्यां च गम्यायां सुखप्रिययोः परतः पूर्वपदं प्रकृतिस्वरम् । 'ब्राह्मणसुखं पायसम्' । 'छात्रप्रियोऽनध्यायः' । ब्राह्मणशब्दोऽणन्तः । 'ब्राह्मोऽजातौ' इति निषेधाट्टिलोपाभावः । 'छत्रादिभ्यो णः' इति णान्तः छात्रशब्दः । [1]आयत्यां परिणामसमये प्रीतिकरं यद्धितं तद्विषयं पूर्वसूत्रम् । इदं तु प्रीतिविषयम् । यद्यपि 'सुखप्रिययोः' इत्युक्त्वा 'हिते च' इति सूत्रेणापि इष्टसिद्धिः, सुखप्रिययोः प्रीत्यव्यभिचारात् [2]पूर्वयोगेनैव स्वरसिद्धेः, तथापि 'प्रीतौ च' इति पृथग्वचनम् प्रीत्यतिशय एव स्वरः यथा स्यादित्येवमर्थम् । एवं च इह प्रीतिग्रहणं प्रीत्यतिशयप्रतिपत्त्यर्थम् इति वृत्तौ ॥

## [ १८६ ] ॥ स्वं स्वामिनि ॥ (6—2—17)

स्ववाचि प्रकृतिस्वरं स्वामिशब्दे परतः । 'गोस्वामी' ॥

## [ १८७ ] ॥ पत्यावैश्वर्ये ॥ (6—2—18)

ऐश्वर्यवाचिनि पतिशब्दे तत्पुरुषे परतः पूर्वपदं प्रकृतिस्वरम् । 'अ॒हं त्वया॑ गृ॒हप॑तिना भूयासम्' । 'प्र॒जाप॑तिः' । 'गेहे कः' इति कान्तो गृहशब्दः । 'उपसर्गे च संज्ञायाम्' इति डप्रत्यये टाबादौ च कृत्स्वरेण प्रजाशब्दोऽन्तोदात्तः । ऐश्वर्ये किम् ? 'वृषलीपतिः' । धवपर्यायोऽत्र पतिशब्दः ॥

---

1. आयत्यां प्रीतिकरं हि तद्विषयम् घ. ङ.
2. पूर्वभागेनैव घ. ङ.

## [१८८] ॥ न भूवाक्चिद्दिधिषु ॥ (6—2—19)

पूर्वसूत्रप्राप्तं निषिध्यते । 'भूपतिः' । 'वाक्पतिः' । 'चित्पतिः' । 'दिधिषूपतिः' । 'अन्दूदृन्भू' इति उणादिसूत्रे दिधिषूशब्दः ऊप्रत्ययान्तो निपातितः । सूत्रे तु समाहारद्वन्द्वे नपुंसकह्रस्वत्वेन ह्रस्वनिर्देशः । 'भूपतये स्वाहा' इत्यादौ पूर्वस्य पदस्य आद्युदात्तत्वम् । 'चित्पतिस्त्वा पुनातु' । 'वाक्पतिस्त्वा पुनातु' । 'अराध्यै दिधिषूपतिम्' इत्यादौ उत्तरपदाद्युदात्तत्वम् व्यत्ययात् ॥

## [१८९] ॥ वा भुवनम् ॥ (6—2—20)

इदं वा प्रकृतिस्वरम् पत्यावैश्वर्ये । 'अहं भुवनपतिः' । 'भूसूधूभ्रस्जिभ्यश्छन्दसि' इति क्युन्नन्तो[1] भुवनशब्दः ॥

## [१९०] ॥ आशङ्काबाधनेदीयःसु संभावने ॥ (6—2—21)

एषु परतः पूर्वपदं प्रकृतिस्वरं संभावनावाचिनि तत्पुरुषे । अस्तित्वनिश्चयः संभावनम् । 'गमनाशङ्कं वर्तते' । एवं 'गमनाबाधम्' । 'गमननेदीयः' । आशङ्क्यत इति आशङ्कम् । घञ् । एवमाबाधम् । अन्तिकशब्दात् ईयसुनि 'अन्तिकबाढयोर्नेदसाधौ' इति नेदादेशे नेदीयः । समानाधिकरणसमासः । आशङ्क्यमानं गमनं संभाव्यत इत्याद्यर्थः ॥

---

1. किन्नन्तो क.

## [१९१] ॥ पूर्वे भूतपूर्वे ॥ (6—2—22)

पूर्वशब्दे परे पूर्वपदं प्रकृतिस्वरं भवति भूतपूर्ववाचिनि तत्पुरुषे । आढ्यो भूतपूर्वः 'आढ्यपूर्वः' । मयूरव्यंसकादिः । आङ्पूर्वकात् ध्यायतेः 'घञर्थे कविधानम्' इति कप्रत्यये 'आढ्यसुभग' इति निपातनात् धकारस्य ढकारे च थाथादिस्वरेण अन्तोदात्त आढ्यशब्दः ॥

## [१९२] ॥ सविधसनीडसमर्यादसवेशसदेशेषु सामीप्ये ॥ (6–2–23)

समीपार्थेष्वेषु परतः पूर्वपदं प्रकृतिस्वरम् । मद्राणां सविधं 'मद्रसविधम्', 'मद्रसनीडम्' इत्यादि । सविधादिशब्दाः सामीप्ये रूढाः । मद्रशब्दो रगन्तः ॥

## [१९३] ॥ विस्पष्टादीनि गुणवचनेषु ॥ (6—2—24)

इमानि प्रकृतिस्वराणि गुणोपसर्जनद्रव्यवाचिषु परतः । विस्पष्टं पटुः 'विस्पष्टपटुः' । विस्पष्टता च अत्र पाटवादिप्रवृत्तिनिमित्तविशेषणम्, सामानाधिकरण्याभावात् । 'सुप्[1]' इति योगविभागात् समासः । प्रवृत्तिनिमित्तविशेषणत्वादेव विग्रहे विस्पष्टम् इति क्लीबत्वम् । [2]स्पशतेर्ण्यन्तात्[3] क्ते, 'वा दान्त' इत्यादिना [4]इडभावनिपातनात् स्पष्टः । ततो गतिसमासे विस्पष्टः । 'गतिरनन्तरः' ।

1. 'सह' घ.
2. स्पाशयतेः घ.
3. ण्यन्तात् घ. नास्ति ।
4. इडभाव- घ. नास्ति ।

'विचित्रम्'। प्रादिसमासः। 'विचित्तम्' इत्यन्ये। बहुव्रीहिरयम्। 'व्यक्तम्'। विपूर्वादनक्तेः क्ते गतिस्वरः। इकारस्य यणादेशे 'उदात्तस्वरितयोर्यणः' इति ततः परस्य स्वरितः। 'संपन्नः'। थाथादिस्वरः। 'फलीपटी' इति उप्रत्यये पटुः। पडि गतौ इत्यतः क्ते 'पण्डितः'। कुशं लातीति 'कुशलः'। 'आतोऽनुपसर्गे कः'। कृत्स्वरः। 'चुपेरच्चोपधायाः' इति [1]लच्प्रत्यये 'चपलः'। स च चित्त्वात् अन्तोदात्तः। 'निपुणः'। पुण कर्मणि शुभे। इगुपधत्वात् के थाथादिस्वरः॥

## [१९४] ॥ श्रज्यावमकन्पापवत्सु भावे कर्मधारये॥ (6—2—25)

श्र, ज्य, अवम, कन्, इत्येतेषु पापवति च उत्तरपदे भाववाचि प्रकृतिस्वरं कर्मधारये। श्र, ज्य, कन्, इति 'प्रशस्यस्य श्रः', 'ज्य च', 'युवाल्पयोः कन्' इत्यादेशा गृह्यन्ते। सामर्थ्यात् तद्वदुत्तरपदग्रहणम्। 'गमनश्रेष्ठम्'। 'गमनश्रेयः'। 'वचनश्रेष्ठम्'। 'वचनज्यायः'। 'गमनावमम्'। 'गमनकनिष्ठम्'। 'गमनकनीयः'। 'गमनपापिष्ठम्'। 'गमनपापीयः'। अत्र 'विन्मतोर्लुक्' इति मतुपो लुक्। मयूरव्यंसकादयः। भावग्रहणात् करणे ल्युटि न। कर्मधारये किम्? गमनस्य श्रेयो 'गमनश्रेयः'॥

## [१९५] ॥ कुमारश्च॥ (6—2—26)

पूर्वपदभूतः अयं प्रकृतिस्वरः कर्मधारये। 'कुमारश्रमणा'। लिङ्गविशिष्टपरिभाषया कुमारीशब्दस्य[2] पुंवद्भावः। 'कुमार क्रीडायाम्'

1. खलप्रत्यये ङ. 2. समासे घ. ङ. अधिकम्।

इत्यतः पचाद्यच् । 'कुमारः' । 'केचिदत्र 'कुमार श्रमणादिभिः' इति प्रतिपदोक्तकर्मधारयस्य ग्रहणमिच्छन्ति । अन्ये पुनः 'कर्मधारयमात्रस्य' इति वृत्तौ । 'चकारस्य पुनर्विधानार्थत्वात् कर्मधारयमात्रग्रहणपक्षसिद्धिः' इति हरदत्तः ॥

## [१९६] ॥ आदिः प्रत्येनसि ॥ (6—2—27)

'आदिः' इति षष्ठ्यर्थे प्रथमा । पूर्वत्र कुमारशब्दस्य प्रकृतिभावेन यः स्वरः प्राप्तः स आदेर्भवति प्रत्येनसि उत्तरपदे कर्मधारये । एवं व्याख्यानात् उदात्तग्रहणाभावेऽपि अत्र आदिरुदात्त इति फलितम् । 'कुमारप्रत्येनाः' । प्रतिगत एनसा प्रत्येनाः । 'अवादयः क्रुष्टाद्यर्थे' इति तत्पुरुषः । प्रतिगतमेनः अस्य इति बहुव्रीहिर्वा ॥

## [१९७] ॥ पूगेष्वन्यतरस्याम् ॥ (6—2—28)

नानाजातीया अनियतवृत्तयः[1] अर्थकामप्रधानाः सङ्घाः पूगाः । तद्वाचिनि उत्तरपदे कुमरस्य वा आदिरुदात्तः । 'कुमारचातकाः' । 'कुमारलोहितध्वजाः' । 'कुमारजीमूताः' । चातकादिभ्यः 'पूगात् ञ्योऽग्रामणीपूर्वात्' इति ञ्यः । 'ञ्यादयस्तद्राजाः' । 'तद्राजस्य बहुषु' इति बहुषु लुक् । पक्षे 'कुमारश्च' इति पूर्वपद-प्रकृतिस्वरः । तत्र च प्रतिपदोक्तस्यैव ग्रहणमिति मते तु समासान्तोदात्तत्वमेव ॥

---

1. नियतवृत्तयः घ.

## [१९८] ॥ इगन्तकालकपालभगालशरावेषु द्विगौ ॥

(6—2—29)

द्विगौ पूर्वपदं प्रकृतिस्वरमिगन्ते उत्तरपदे कालवाचिनि च कपालादिषु च । 'पञ्चारत्नि तस्मै वृश्चेत्' इत्यादि । पञ्च अरत्नयः प्रमाणमस्य इति 'पञ्चारत्निः' । तद्धितार्थे द्विगुः । 'द्विगोर्नित्यम्' इति मात्रचो लुक् । 'पञ्चारत्नयः' इत्यत्र 'जसि च' इति गुणस्य बह्वपेक्षत्वेन[1] बहिरङ्गस्य अत्र स्वरेऽसिद्धत्वात् अस्ति इगन्तत्वम् इति भवत्ययं स्वरः । एवं 'पञ्चारत्न्यः' इत्यत्रापि यणो बहिरङ्गस्य असिद्धत्वात् । 'जसादिषु[2] छन्दसि वावचनम्' इत्यत्र यण् । कालवचनः—पञ्चमासान् भृतो भूतो भावी वा 'पञ्चमास्यः' । 'तमधीष्टे' इत्यधिकारे 'द्विगोर्यप्' इति वचनाद्यप् । 'पञ्चवर्षः' । 'वर्षाल्लुक् च' 'चित्तवति नित्यम्' इति भूताद्यर्थेषु उत्पन्नस्य ठञो लुक् । 'पुत्रस्ते दशमास्यः' इत्यत्र व्यत्ययात् [3]उत्तरपदाद्युदात्तत्वम् । 'पञ्चकपालम्' । 'दशभगालः' । 'पञ्चशरावमोदनम्' । पञ्चसु कपालेषु संस्कृत इति विवक्षायाम् 'संस्कृतं भक्षाः' इत्यणः 'द्विगोर्लुगनपत्ये' इति लुक् । 'त्रसंख्यायाः' इति पञ्चन्नादय आद्युदात्ताः । यत्तु इगन्तस्य उदाहृतम्—'दशहोता चतुर्होता' 'पञ्चहोता षड्ढोता सप्तहोता' । 'दिक्संख्ये संज्ञायाम्' इति सामास इति, तच्चिन्त्यम् ; 'दिक्संख्ये संज्ञायाम्' इति समासस्य द्विगुत्वाभावात् । लोकेऽपि सप्तर्षिशब्दे नायं स्वरः, द्विगुत्वाभावात्

---

1. सुबपेक्षत्वेन घ. ङ. इत्युक्तेः अत्रापि यण् न घ.
2. 'जसादिषु छन्दो वा वचनम्'
3. उत्तरपदादिरुदात्तः घ ङ

इति कैयटवचनाच्च । स्वरस्तु दशहोत्रादिशब्दानां व्यत्ययात् । अत एव 'पञ्चहोतृशब्दे दिवोदासादित्वात् पूर्वपदाद्युदात्तत्वम्' इति 'संख्यापूर्वो द्विगुः' इत्यत्र भाष्ये स्थितम् ॥

## [१९९] ॥ बह्वन्यतरस्याम् ॥ (6—2—30)

पूर्वसूत्रविषयेऽयं विकल्पः । 'बहुरत्निः' । 'बहुमास्यः' । 'बहुकपालः' । 'बहुभगालः' । 'बहुशरावः' । 'लङ्घिबंह्योर्नलोपश्च' इति उप्रत्ययान्तो बहुशब्दः । पक्षे समासस्वरः ॥

## [२००] ॥ दिष्टिवितस्त्योश्च ॥ (6—2—31)

इगन्तत्वात् प्राप्तं विकल्प्यते । 'पञ्चदिष्टिः' । 'पञ्चवितस्तिः' । 'द्विगोर्नित्यम्' इति मात्रचो लुक् ॥

## [२०१] ॥ महान्व्रीह्यपराह्णगृष्टीष्वासजाबालभारभारतहैलिहिलरौरवप्रवृद्धेषु ॥ (6—2—38)

महच्छब्दः प्रकृतिस्वरः व्रीह्यादिषु दशसु परतः । 'निरवपन्महाव्रीहीणाम्' । एवम् 'महापराह्णः' इत्यादि । 'महेष्वासः' । 'महाहैलिहिलम्' । 'वर्तमाने पृषद्बृहन्महत्' इति उणादौ महच्छब्दोऽन्तोदात्तो निपातित इति हरदत्तः[1] ।

1. इति हरदत्तः घ. नास्ति ।

व्रीह्यादिष्विति किम् ? 'महेन्द्रस्य' । 'सन्महत्' इति प्रतिपदोक्तकर्मधारय इह गृह्यते । तेन 'महद्व्रीहिः' इति षष्ठीतत्पुरुषे नायं स्वरः ॥

## [२०२] ॥ क्षुल्लकश्च वैश्वदेवे ॥ (6—2—39)

क्षुल्लकशब्दो महच्छब्दश्च प्रकृतिस्वरः वैश्वदेवे परे । 'क्षुल्लकवैश्वदेवः' । 'महावैश्वदेवः' । क्षुधं लाति इति क्षुल्लः । 'आतोऽनुपसर्गे कः' । ततः अज्ञातादिषु 'प्रागिवात् कः' ॥

## [२०३] ॥ उष्ट्रः सादिवाम्योः ॥ (6—2—40)

'प्रकृत्या' इत्येव । 'उष्ट्रसादी' । 'उष्ट्रवामी' । 'उषिखनिभ्यां कित्' इति ष्ट्रनि उष्ट्रः । कर्मधारयः षष्ठीतत्पुरुषो वेति वृत्तिः । आद्ये अश्वारोहे अश्वायां च प्रसिद्धयोः सादिवामिशब्दयोः उष्ट्रे गौणी वृत्तिरित्याहुः[1] ॥

## [२०४] ॥ कुरुगार्हपतरिक्तगुर्वसूतजरत्यश्लीलदृढरूपा पारेबडवा तैतिलकद्रूः पण्यकम्बलो दासीभाराणां च ॥ (6—2—42)

'कुरुगार्हपत' इत्यादीनि अष्टौ समासपदानि व्यस्तानि अत्र निर्दिश्यन्ते । तत्र आदितो द्वयोः षष्ठ्याः सौत्रो

1. इत्याशयः ख.

लुक् । ततः पञ्च 'एकवचनान्तानि[1] । षष्ठ्यर्थे च प्रथमैकवचनम् । 'दासीभाराणाम्' इति बहुवचननिर्देशात् आद्यर्थावसायः । एषां पूर्वपदं प्रकृतिस्वरम् । कुरूणां गार्हपतं 'कुरुगार्हपतम्' । 'कुग्रोरुच्च' इति कुप्रत्यये कुरुशब्दः ॥

## (वा) ॥ कुरुवृज्योर्गार्हपत इति वाच्यम् ॥

वृजीनां गार्हपतम् 'वृजिगार्हपतम्' । वृजी वर्जने । 'इगुपधात् किच्च' इति इन्प्रत्यये 'वृजिः' । 'रिक्तगुरुः' । 'असूतजरती' । 'अश्लीलदृढरूपा' । एते कर्मधारयाः । 'रिक्ते विभाषा' इति रिक्तस्य आदिरुदात्तः । असूताश्लीलयोः नञ्स्वरः । पारे बरडवेव 'पारेबडवा' । निपातनात् इवार्थे समासः । ङेरलुक् च । पारशब्दो घृतादिः । तैतिलानां कद्रूः 'तैतिलकद्रूः' । तिलशब्दान्मत्वर्थे इनिः । 'तिली' । पृषोदरादित्वात्तिशब्दस्य द्वित्वम् । ततोऽपत्येऽण् । 'नस्तद्धिते' इति टिलोपः । 'तैतिलः' ॥

## ॥ पण्यकम्बलः संज्ञायाम् ॥

इति वार्त्तिकम् । तत्र पण्यशब्दस्य 'अवद्यपण्यवर्यागर्ह्य' इति यदन्ततया 'द्वितीया कृत्याः' इत्येव सिद्धे संज्ञायामेवेति[2] नियमार्थं पण्यकम्बलग्रहणम् । अपर आह—कम्बल एवोत्तरपदे पण्यशब्दः प्रकृतिस्वरो यथा स्यात् । 'पण्यहस्ती' इत्यत्र मा भूदिति भाष्यम् । तद्वृत्तौ तु—" 'कृत्यतुल्याख्या अजात्या' इति प्रतिपदोक्तसमास एव द्वितीयाकृत्यास्वरः ; पण्यकम्बलशब्दे च नैवं समासः, किं तु 'विशेषणं विशेष्येण' इति । एवं च

1. प्रथमैकवचनानि ङ. 2. संज्ञायामेव नान्यत्रेति घ. ङ.

विध्यर्थमेव पण्यकम्बलग्रहणम् । 'संज्ञायाम्' इति वचनात् ततः अन्यत्र 'पण्यकम्बले न एष स्वरः । पण्यहस्त्यादौ प्रसक्तिरेव न'' इति स्थितम् । ननु 'अजात्या' इति प्रतिषेधसामर्थ्यात् 'विशेषणं विशेष्येण' इत्यप्यत्र समासो दुर्लभ इति चेत्—अत्राहुः—'अजात्या' इति न जातिप्रतिषेधार्थम्, किं तु न्याय-सिद्धार्थानुवादमात्रम् । न च अनुवादस्य सर्वथा नैष्फल्यम् ; गुणक्रियावाचिनामनियमेन पूर्वनिपातप्रसङ्गे कृत्यान्तस्य पूर्वनिपातार्थं सूत्रम् इति व्युत्पादनेन चारितार्थत्वात्—इति । दास्या भारः 'दासीभारः' । 'दंसेष्टो न आ च' इति टप्रत्यये 'टिड्ढ' इति ङीपि उदात्तनिवृत्तिस्वरेण दासीशब्देऽन्त उदात्तः । 'अस्यां देवहूत्याम्' । 'ओषधीः' । ओषः धीयतेऽस्याम् । 'कर्मण्यधिकरणे च' इति किः । उष दाहे । घञ् । ओषः । 'चन्द्रमाः' । 'चन्द्रे मो डित्' इत्यसिप्रत्ययः । चन्द्र इति रजतनाम । स इव मीयते 'चन्द्रमाः' । 'स्फायितञ्चि' इति रकि चन्द्रः । आकृतिगणोऽयम् । तेन 'भ्रातृव्याभिभूत्यै' 'देववीतये' इत्यपि सिद्धम् । 'भ्रातुर्व्यच्च' 'व्यन् सपत्ने' । भ्रातृव्यः ॥

## [२०५] ॥ चतुर्थी तदर्थे ॥ (6—2—43)

चतुर्थ्यन्तं प्रकृतिस्वरं चतुर्थ्यन्ताभिधेयं यत् तदर्थवाचिनि उत्तरपदे । यूपाय दारु 'यूपदारु' । यूपशब्द आद्युदात्तः । 'कुयुभ्याम्' इत्यत्र 'नित्' इत्यनुवृत्तेः ॥

## [२०६] ॥ अर्थे ॥ (6—2—44)

अर्थशब्दे उत्तरपदे चतुर्थ्यन्तं प्रकृतिस्वरम् । देवतायै इदम् 'देवतार्थम्' । तलन्तो देवताशब्दः । पूर्वेणैव सिद्धेऽयमारम्भो

ज्ञापयति 'पूर्वविधिः प्रकृतिविकृतिभाव[1] एव' इति । तेन 'महाराजबलाः[2]' । 'अश्वनेता[3]' इत्यादौ सत्यपि तादर्थ्ये अयं स्वरो न भवति ॥

## [२०७] ॥ क्ते च ॥ (6—2—45)

क्तान्ते च उत्तरपदे प्रकृतिस्वरं चतुर्थ्यन्तम् । 'गोहितम्'। 'गोरक्षितम्' ॥

## [२०८] ॥ कर्मधारयेऽनिष्ठा ॥ (6—2—46)

अनिष्ठान्तं प्रकृतिस्वरं क्तान्ते उत्तरपदे कर्मधारये । 'श्रेणीकृतः' । 'पूगकृतः' । 'श्रिञो नित्' इति औणादिको निः । 'श्रेणिः' । पूञो गक् । 'पूगः' । 'श्रेण्यादयः कृतादिभिः' इति प्रतिपदोक्तकर्मधारयस्य इह ग्रहणम् । तेन 'महानिरष्टो दक्षिणा दीयते' इत्यत्र न पूर्वपदप्रकृतिस्वरः इति 'महान् व्रीह्यपराह्ण' इत्यत्र भाष्यम् । इदं च शाखान्तरीयं वाक्यम् ; 'दीयते' इति वाक्यशेषात् । तैत्तिरीयके 'महानिरष्टो दक्षिणा समृद्ध्यै' इत्यादौ व्यत्ययेन पूर्वपदप्रकृतिस्वरः । अत एव अत्रैव वेदभाष्ये कथितम्—महानिरष्टः पीडितवृषणो गौः । अश्नोतेः निष्ठायाम् 'यस्य विभाषा' इति इट्प्रतिषेधः । कर्मधारयः । दासीभारादिः बहुव्रीहिर्वा—इति । अत्र श्रेण्यादिसमासग्रहणादेव 'महान् व्रीह्यपराह्ण' इत्यत्र प्रवृद्धग्रहणं सफलम् । अन्यथा 'महावृद्धः' इत्यत्र अनेनैव स्वरसिद्धेस्तद्वैफल्यात् । यत्तु स्वरमञ्जर्याम् 'नवनीतेनाभ्यङ्क्ते' इति प्रकृतसूत्रे उदाहृतम्, तच्चिन्त्यम् ;

1. -विषयः घ.
2. -बलिः ङ.
3. अश्वघासः घ.

श्रेण्यादिसमासस्यैव अत्र ग्रहणात् । नवशब्दस्य च श्रेण्यादिषु अपाठात् । 'श्रेण्यादयः पठ्यन्ते, कृतादिः आकृतिगणः' इति भाष्यात् । 'श्रेण्यादिषु च्व्यर्थवचनम्' इत्युक्तेः नवं च तन्नीतं च इति तत्र विग्रहासाङ्गत्याच्च । तस्मात् दासीभारादिः नवनीत-शब्द इति भाष्यरत्नावलीकृतः । युक्तं चैतत् ; वेदभाष्येऽपि— दासीभारादिरयम् । नवं नीतमस्य इति बहुव्रीहिर्वा—इत्युक्तेः । अनिष्ठा किम् ? 'कृताकृतम्' । 'क्तेन नञ्विशिष्टेनानञ्' इति समासः । 'अनिष्ठा' इत्यनुच्यमाने इहैव स्यात् ; अयं हि क्तसंशब्दनेन विहितः श्रेण्यादिसमासादपि प्रतिपदोक्तः ॥

## [२०९] ॥ ईषदन्यतरस्याम् ॥ (6—2—54)

इदं पूर्वपदं वा प्रकृतिस्वरम्[1] । 'ईषत्कडारः' । ईषच्छब्दः स्वरादिः फिट्स्वरेण अन्तोदात्तः । 'ईषद्भेदः' इति खलि परत्वात् कृत्स्वरः । 'ईषदकृता' इति प्रतिपदोक्त-समासस्यैव अत्र ग्रहणात् उपपदसमासे प्रसङ्ग एव न इत्यन्ये इति हरदत्तः ॥

## [२१०] ॥ हिरण्यपरिमाणं धने ॥ (6—2—55)

परिमाणविशिष्टहिरण्यवाचि प्रकृतिस्वरम् धनशब्दे उत्तरपदे । द्वयोः सुवर्णयोः समाहारः द्विसुवर्णं पात्रादि । तच्च तद्धनं च 'द्विसुर्णधनम्' । बहुव्रीहावपि परत्वादयं विकल्प इत्याहुः । परिमाणे किम् ? 'काञ्चनधनम्' । काञ्चनशब्दो हिरण्यवचनः, न तु परिमाणविशिष्टहिरण्यवचनः ॥

1. प्रकृत्या घ.

## [२११] ॥ प्रथमोऽचिरोपसंपत्तौ ॥ (6—2—56)

नूतनोपसंपत्तौ प्रथमशब्दः पूर्वपदं वा प्रकृतिस्वरम् । 'प्रथमवैयाकरणः' । संप्रति व्याकरणमध्येतुं प्रवृत्त इत्यर्थः । 'प्रथेरमच्' । प्रथमः ॥

## [२१२] ॥ कतरकतमौ कर्मधारये ॥ (6—2—57)

इमे पूर्वपदे वा प्रकृतिस्वरे । 'कतरकठः' । 'कतमकठः' । 'कतरकतमौ जातिपरिप्रश्ने' इति प्रतिपदोक्तसमासग्रहणादेव सिद्धे कर्मधारयग्रहणमुत्तरार्थम् । डतरच्डतमजन्तौ अन्तोदात्तौ ॥

## [२१३] ॥ आर्यो ब्राह्मणकुमारयोः ॥ (6—2—58)

वा प्रकृत्या । 'कर्मधारये' इति वर्तते । 'आर्यब्राह्मणः' । 'आर्यकुमारः' । आर्यशब्दो ण्यदन्तस्तित्स्वरः ॥

## [२१४] ॥ राजा च ॥ (6—2—59)

पूर्वपदं वा प्रकृतिस्वरं ब्राह्मणकुमारयोः परतः कर्मधारये । 'राजब्राह्मणः' । 'राजकुमारः' । राजन्शब्दो ब्राह्मणे लाक्षणिकः । कनिन्नन्तो राजन्शब्दः । यथासंख्यनिवृत्त्यर्थः उत्तरत्र राजमात्रानुवृत्त्यर्थश्च योगविभागः ॥

## [२१५] षष्ठी प्रत्येनसि ।। (6—2—60)

षष्ठ्यन्तो राजशब्दो वा प्रकृतिस्वरः प्रत्येनसि उत्तरपदे । 'राज्ञःप्रत्येनाः' । 'षष्ठ्या आक्रोशे' इत्यलुक् ।।

## [२१६] ।। ग्रामः शिल्पिनि ।। (6—2—62)

शिल्पिवाचिनि उत्तरपदे ग्रामशब्दो वा प्रकृत्या[1] । 'ग्राम-नापितः' । 'ग्रामकुलालः' । ग्रामशब्द आद्युदात्तः । ग्रामः किम् ? 'परमनापितः' । शिल्पिनि किम् ? 'ग्रामरथ्या' ।।

## [२१७] ।। राजा च प्रशंसायाम् ।। (6—2—63)

पूर्वपदं राजशब्दो वा प्रकृत्या शिल्पिवाचिनि उत्तरपदे परतः प्रशंसायाम् । 'राजनापितः' । 'राजकुलालः' । कर्मधारये राजगुणारोपेण उत्तरपदार्थस्य प्रशंसा । षष्ठीसमासे कर्मप्रवीणत्वात् राजार्हतया प्रशंसा ।।

## [२१८] ।। आदिरुदात्तः ।। (6—2—64)

व्याख्यातम् ।।

## [२१९] ।। सप्तमीहारिणौ धर्म्येऽहरणे ।। (6—2—65)

देयं स्वीकुर्वन् हारी । आवश्यके णिनिः । अनुवृत्त आचारो धर्मः । धर्मादनपेतः धर्मेण प्राप्यो वा 'धर्म्यः' । 'धर्मपथ्यर्थ'

1. प्रकृतिस्वरः ङ.

इति यत् । 'नौवयोधर्म' इति वा यत् । सप्तम्यन्तस्य हारिवाचिनश्च आदिरुदात्तः हरणशब्दात् अन्यस्मिन् धर्म्यवाचिनि उत्तरपदे । 'स्तूपेशाणाः' । 'मुकुटेकार्षापणाः' । 'संज्ञायाम्' इति सप्तमीसमासः । 'कारनाम्नि च' इति ङेरलुक् । 'याज्ञिकाश्वः' । क्वचित् अयमाचारः स्तूपादिषु शाणादि दातव्यम्, याज्ञिकनाम् अश्वादि । धर्म्ये इति किम् ? 'कर्मकरवर्धितकः' । मूले स्थूलः अग्रे सूक्ष्मः ओदनपिण्डो वर्धितकः कर्मकराय दीयते अन्यथा कर्म न कुर्यादिति, न त्वयं धर्म्यः । अहरणे इति किम् ? 'बाडबहरणम्' । बडबाया अयं बाडबः । तस्या गर्भाधानानन्तरं शरीरपुष्ट्यर्थं यद्दीयते तद्धरणम् । क्वचिच्च अयमाचारो व्यवस्थितः । हरणशब्दः कर्मसाधनः । तेन अस्मिन् स्वरे निषिद्धे कृत्स्वरापवादः 'अनो भावकर्मवचनः' इत्ययं स्वरो भवति । न च परत्वादेव अयं स्वरो भविष्यतीति किं हरणनिषेधेनेति वाच्यम् ; परमपि कृत्स्वरं बाधित्वा 'बाडबहार्यम्' इत्यादौ 'पूर्वविप्रतिषेधेन हारिस्वर एव' इति ज्ञापनार्थत्वात्[1] । अहरण इति प्रतिषेधः—येन केनचिल्लक्षणेन प्राप्तस्वरस्य हारिस्वरो बाधकः—इति ज्ञापयति ॥

## [२२०] ॥ युक्ते च ॥ (6—2—66)

समाहितो यः कर्तव्ये तत्परः स युक्तः । युज समाधौ इत्यतः क्तः । युक्तवाचिनि समासे पूर्वपदस्य आदिरुदात्तः । 'गोवल्लवः' । 'अश्ववल्लवः' । वल्लवः पालकः । गां सङ्ख्ष्टे 'गोसंख्यः' । 'समि ख्यः' इति कः । अत्र थाथादिस्वरात् पूर्वविप्रतिषेधेन अयं स्वर इति वार्त्तिकम् ॥

---

1. ज्ञापनार्थत्वादिति घ. 2. विवेकः क.

## [२२१] ॥ विभाषाध्यक्षे ॥ (6—2—67)

पूर्वपदस्य आदिरुदात्तः । 'अश्वाध्यक्षः' । अध्यक्षशब्दस्य समासे 'युक्ते च' इति पूर्वेण प्राप्तस्य विकल्पः ॥

## [२२२] ॥ शिल्पिनि चाकृञः ॥ (6—2—68)

शिल्पिवाचिनि समासे अणन्ते उत्तरपदे पूर्वपदस्य आदिरुदात्तः, सोऽण् कृञः परो न चेत् । 'तन्तुवायः' । 'ह्वावामश्च' इत्यण । 'मन्यवेऽयस्तापम्' 'वीणावादङ्गणकम्' इत्यादौ व्यत्ययात् अन्तोदात्तत्वम । अकृञः किम् ? 'अयस्कारः' । 'वर्णाय हिरण्यकारम्' । 'युक्ते च' इत्येव सिद्धे वचनमिदं कृञः प्रतिषेधार्थमिति हरदत्तः ॥

## [२२३] ॥ पापं च शिल्पिनि ॥ (6—2—68)

पापस्य आदिरुदात्तः शिल्पिवाचिनि उत्तरपदे । 'पापनापितः' । 'पापकुलालः' । 'पापाणके कुत्सितैः' इति प्रतिपदोक्तसमास इह गृह्यते । तेन 'पापनापितः' इति षष्ठीसमासे समासस्वर एव ॥

## [२२४] ॥ गोत्रान्तेवासिमाणवब्राह्मणेषु क्षेपे ॥ (6—2—69)

क्षेपवाचिनि समासे पूर्वपदस्य आदिरुदात्तः अपत्यान्तेवासिनो र्माणवब्राह्मणयोश्च परतः । 'भार्यासौश्रुतः' । सुश्रुतोऽपत्य

'सौश्रुतः' । सः भार्याप्रधानतया क्षिप्यते । 'ओदनपाणिनीयाः' । पाणिनेः शिष्याः पाणिनीयाः । ये तत्प्रोक्ते ग्रन्थे श्रद्धायामसत्यामपि ओदनलाभाय तदन्तेवासिनः, त एवं क्षिप्यन्ते । एवम् 'कुमारीदाक्षाः' 'कम्बलपारायणीयाः[1]' इत्यादि । 'भिक्षामाणवः' । भिक्षां लप्स्ये इति यो माणवको भवति सः । 'भयब्राह्मणः' । यो राजदण्डादिभयेन ब्राह्मणाचारं करोति । माणवब्राह्मणयोरपत्यवाचित्वेन प्रसिद्ध्यभावात् पृथक्करणम् । 'तस्येदम्' इत्यणन्तयोर्ग्रहणम्, निपातनाच्च माणवे णत्वम् इत्यन्ये ॥

## [२२५] ॥ अङ्गानि मैरेये ॥ (6—2—70)

मैरेयशब्दे उत्तरपदे तदर्थाङ्गवाचिनां पूर्वपदानाम् आदिरुदात्तः । 'गुडमैरेयम्' । सुराव्यतिरिक्तं सर्वं मद्यं मैरेयम् । तच्च गुडेन निष्पाद्यमिति गुडस्य तदङ्गत्वम् ॥

## [२२६] ॥ भक्ताख्यास्तदर्थेषु ॥ (6—2—71)

अन्नविशेषवाचिनाम् आदिरुदात्तः तदर्थवाचिषु उत्तरपदेषु । 'भिक्षाकंसः' । 'श्राणाकंसः[3]' । चतुर्थीसमासः । तत्र प्रकृतिविकृतिभाव एवेति पक्षे षष्ठीसमास[4] एवेति हरदत्तः । आख्याग्रहणमन्नविशेषवाचिपरिग्रहाय ॥

---

1. कम्बलचारयणीयाः घ.
2. पृथग्ग्रहणम् क. ङ.
3. ग्रासकंसः घ.
4. चतुर्थीसमासः ङ.

## [२२७] ॥ गोबिडालसिंहसैन्धवेषूपमाने ॥

(6—2—72)

उपमानवाचिषु गवादिषु उत्तरपदेषु पूर्वपदस्य आदिरुदात्तः । धान्यं गौरिव 'धान्यगवः' । व्याघ्रादिः । गवाकृत्या स्थितं धान्यादिकमुच्यते । एवमुत्तरत्रापि ज्ञेयम् । 'भिक्षाबिडालः' । 'तृणसिंहः' । 'सक्तुसैन्धवः' ॥

## [२२८] ॥ गोतन्तियवं पाले ॥ (6—2—78)

गवादीनाम् आदिरुदात्तः पालशब्दे उत्तरपदे । 'गोपालः' । 'पुष्ट्यै गोपालम्' इत्यत्र व्यत्ययात् । 'तन्तिपालः' । तनोतेः क्तिनि तन्तिः—वत्सानां बन्धनरज्जुः । 'यवपालः' ॥

## [२२९] ॥ युक्तारोह्यादयश्च ॥ (6—2—81)

एषां पूर्वपदस्य आदिरुदात्तः । अत्र 'युक्तारोही' 'आगतारोही' इत्यादयः केचन णिन्यन्ताः पठिताः । ते 'णिनि' इत्यस्य उदाहरणार्थाः । केचित्तु—यत्र युक्तादीन्येव पूर्वपदानि आरोह्यादीन्येव उत्तरपदानि तत्रैव यथा स्यादिति नियमार्थः पाठः —इति आहुरिति वृत्तौ । तेन 'वृक्षारोही' 'युक्ताध्यायी' इत्यादौ न । 'आगतमत्स्यः' । बहुव्रीहिः कर्मधारयो वा । 'क्षीरहोता' । 'भगिनीभर्ता' । याजकादी । 'ग्रामगोधुक्' ।

'अश्वत्रिरात्रः' । 'व्युष्टित्रिरात्रः' । 'गर्गत्रिरात्रः' । 'गणवादः' । इमे षष्ठीसमासाः । 'एकशितिपात्' । त्रिपदबहुव्रीहिः । 'संख्यासुपूर्वस्य' इति पादशब्दान्तलोपः । यदत्र वक्तव्यम्, तत् 'अनुदात्तं पदम्' इत्यत्र अवोचम् ॥

॥ पात्रेसमितादयश्च ॥ एतेऽपि युक्तारोह्यादयः । संपूर्वात् इणो गत्यर्थात् कर्तरि क्तः । समितः संगतः । 'पात्रेसमितः' । मकार द्वित्वपाठस्तु प्रामादिक इत्याहुः इति भाष्यरत्नावल्याम् । " 'अधिक-शतवर्षः' तु न सिध्यति, कर्तव्योऽत्र यत्नः" इति समर्थसूत्रे भाष्यम् । अयमाशयः—अधिकं शतं वर्षाणि यस्य इति त्रिपदे बहुव्रीहौ 'अधिकग्रणं चालुकि' इति अधिकशब्दस्य संख्या-संज्ञायां 'तद्धितार्थ' इति अधिकशतयोः तत्पुरुषे सतिशिष्टत्वा-द्बहुव्रीहिस्वरं बाधित्वा तत्पुरुषान्तोदात्तत्वं प्राप्नोतीति । तस्मात् युक्तारोह्यादिषु द्रष्टव्योऽयमिति कैयटः ॥

## [२३०] ॥ ग्रामेऽनिवसन्तः ॥ (6—2—84)

निवसन्ति अस्मिन्निति निवसन्तः । अधिकरणे औणादिको झच् । 'अनिवसन्तः' इति च्छेदः । ग्रामशब्दे उत्तरपदे पूर्व-पदस्य आदिरुदात्तः न चेन्निवसन्तवाची ग्रामशब्दः । 'मल्लग्रामः' । समूहेऽत्र ग्रामशब्दः । 'देवग्रामः' । देवस्वामिकत्वमत्र विव-क्षितम्, न तु देवनिवसन्तत्वम् इति भवति स्वरः । अनि-वसन्तः किम् ? 'दाक्षिग्रामः' । यत्र दाक्षयो वसन्ति ॥

## [२३१] ॥ घोषादिषु च ॥ (6—2—85)

पूर्वपदस्य आदिरुदात्तः । 'दाक्षिघोषः' ।

'घोषप्लुवौ ह्रदाश्वत्थपिशङ्गकबरीतृणाः ।
[1]शलली शिलिपमुरयः कूटः शालेत्ययं गणः ॥'

'अनिवसन्तः' इत्यस्य असंबन्धार्थो योगविभागः । तेन निवसन्तवाचिष्वपि घोषादिषु अयं स्वरः । अनिवसन्तानुवृत्तिमते तु शब्दादिवाचिष्वेव घोषादिषु अयं स्वरः । ततो[2] योगविभागो वैचित्र्यार्थः ॥

## [२३२] ॥ छात्र्यादयः[3] शालायाम् ॥
(6—2—86)

एषाम् आदिरुदात्तः । 'छात्रिशाला[4]' । 'छात्रिशालम्' इत्यादौ 'विभाषा सेना' इति क्लीबत्वपक्षेऽपि 'तत्पुरुषे शालायाम्' इत्युत्तरपदाद्युदात्तत्वात् पूर्वविप्रतिषेधेन अयमेव स्वरः । ऐलिगा[5]ण्डिव्याडिआपिशलिआखण्डिआखादिगोमि ॥

## [२३३] ॥ प्रस्थेऽवृद्धमकर्क्यादीनाम् ॥
(6—2—87)

'मालादीनां च' इति आरम्भसामर्थ्यात् 'अवृद्धम्' इति च्छेदः । कर्क्यादिभिन्नस्य अवृद्धस्य आदिरुदात्तः प्रस्थशब्दे उत्तरपदे । 'इन्द्रप्रस्थः' । 'तिलप्रस्थः' । कर्कीमखीमकरीकर्कन्धूशमीकरीराकटुककुवलबदराः । अमी कर्क्यादयः ॥

---

1. शल्मली- घ.
2. ततः घ. नास्ति ।
3. रात्र्यादयः घ.
4. रात्रिशाला घ.
5. -भाण्डि- ङ.

## [२३४] ॥ मालादीनां च ॥ (6—2—88)

प्रस्थे उत्तरपदे आदिरुदात्तः । 'मालाप्रस्थः । शोणा द्राक्षा ध्राक्षी काञ्ची एका । वृद्धार्थमिदम् । 'एका' 'शोणा' इत्यनयोः 'एङ् प्राचां देशे' इति वृद्धत्वम् ॥

## [२३५] ॥ अमहन्नवं नगरेऽनुदीचाम् ॥ (6—2—89)

महन्नवभिन्नस्य पूर्वपदस्य आदिरुदात्तः नगरशब्दे उत्तरपदे, तच्चेन्नगरमुदीचां न भवति । 'विराटनगरम्' । अमहन्नवेति किम् ? 'महानगरम्' । 'नवनगरम्' । उदीचां तु 'नन्दिनगरम्[1]' ॥

## [२३६] ॥ अर्मे चावर्णं द्व्यच्त्र्यच् ॥ (6—2—90)

अवर्णान्तस्य द्व्यचः त्र्यचश्च आदिरुदात्तः अर्मशब्दे उत्तरपदे । 'दत्तार्मम्' । 'कुक्कुटार्मम्' । अवर्णं किम् ? 'बृहदर्मम्' । "अनित्यत्वात् इह 'स्वरविधौ व्यञ्जनमविद्यमानवत्' इति न प्रवर्तते" इति हरदत्तः । 'अमहन्नवम्' इत्येव । 'महार्मम्' । 'नवार्मम्' ॥

## [२३७] ॥ न भूताधिकसंजीवमद्राश्मकज्जलम् ॥ (6—2—91)

पूर्वसूत्रप्राप्तं निषिध्यते । 'भूतार्मम्' । 'अधिकार्मम्' । 'सञ्जीवार्मम्' । 'मद्राश्मार्मम्' । "मद्राश्मग्रहणं संघातविगृहीतार्थम्' । 'मद्रार्मम्' । 'अश्मार्मम्' " इत्यप्युदाहृतं वृत्तौ ।

1. नदीनगरम् घ.

तत्र 'अश्मार्मम्' इत्यनुदाहरणम् ; अश्मशब्दस्य नान्तत्वेन प्राप्त्यभावात् । न च नलोपे सति अवर्णान्तत्वम् ; 'नलोपः सुप्स्वर' इति नलोपस्य असिद्धत्वात् । अत एव " 'पञ्चार्मम्' इत्यत्र नलोपस्य असिद्धत्वान्नायं स्वरः" इति 'नलोपः सुप्स्वर' इत्यत्र वृत्तौ । मद्राश्मशब्दस्तु 'अनोऽश्मायस्सरसां जातिसंज्ञयोः' इत्यचि अवर्णान्त एव । 'मद्राश्मग्रहणं संघातविगृहीतार्थम्' इति वचनमेव मिथ्या ; मुनित्रयानुक्तेः' इति[1] हरदत्तः । 'कज्जलार्मम्' ।

## (वा) ॥ आद्युदात्तप्रकरणे दिवोदासादीनां छन्दस्युपसंख्यानम् ॥

'दिवोदासाय गायत' । 'दिवश्च दासे' इत्यलुक् ॥

## [२३८] ॥ अन्तः ॥ (6—2—92)

अधिकारः[2] ॥

## [२३९] ॥ सर्वं गुणकार्त्स्न्ये ॥ (6—2—93)

गुणकार्त्स्न्यवृत्तेः सर्वशब्दस्य अन्त उदात्तः । 'सर्वश्वेतः' । 'सर्वमहान्' । 'पूर्वकाल' इति समासः । इह " 'सर्वशुद्धवालः' इत्यत्र सर्वश्चासौ शुद्धश्च इति समासः । तत्र अनेन सर्वस्य अन्त उदात्तः । ततः सर्वशुद्धो वालो यस्य इति बहुव्रीहिः । पूर्वपदप्रकृतिस्वरः" इति केचित् । एतच्च अवग्रहविरुद्धम् । यदि च बहुव्रीहावपि एतद्योगप्रवृत्तिः, तदा त्रिपदबहुव्रीह्यभ्युपगमेन अत्र स्वरसिद्धिः । अवग्रहे च न दोषः ॥

1. ऋषित्रयानुक्तेरित्यपरे इति घ.
2. अधिकारोऽयम् ङ.

[२४०] ॥ संज्ञायां गिरिनिकाययोः ॥ (6—2—94)

पूर्वपदस्य अन्त उदात्तः । 'अञ्जनागिरिः' । 'वनगिर्योः' इति दीर्घः । 'शिल्पिनिकायः' ॥

[२४१] ॥ कुमार्यां वयसि ॥ (6—2—95)

पूर्वपदस्य अन्त उदात्तः । 'वृद्धकुमारी' । अत्र कुमारीशब्दः पुंसंयोगाभावपरः, न तु प्रथमवयोवचन इति वृद्धशब्देन सामानाधिकरण्यात् विशेषणसमासः । 'पुंवत् कर्मधारय' इति पुंवद्भावः । न च कुमारीशब्दस्य वयःपरत्वाभावे 'वयसि' इत्यनन्वयः ; समस्यमानपदान्तरेण चेद्वयो गम्यते इति तदर्थात् । अत्र च वृद्धपदेन वयःप्रतीतेः । यत्र तु पदान्तरेण न वयोऽन्तरप्रतीतिः, तत्र नैव स्वरः । 'परमकुमारी' ॥

[२४२] ॥ उदकेऽकेवले ॥ (6—2—96)

अकेवलं द्रव्यान्तरसंपृक्तम्, तद्वाचिनि समासे पूर्वपदस्य अन्त उदात्तः उदकशब्दे उत्तरपदे । 'गुडोदकम्' । परत्वात् कृते स्वरे एकादेशः । स च 'स्वरितो वानुदात्तपदादौ' इति पक्षे स्वरितः । अकेवले किम् ? 'शीतोदकम्' ॥

[२४३] ॥ द्विगौ क्रतौ ॥ (6—2—97)

क्रतुवाचिनि समासे पूर्वपदस्य अन्त उदात्तः द्विगावुत्तरपदे । गर्गाणां त्रिरात्रः 'गर्गत्रिरात्रः' । तिसृणां रात्रीणां समाहारः 'त्रिरात्रः' । 'अहःसर्वैकदेश' इत्यच् ॥

## [२४४] ॥ सभायां नपुंसके ॥ (6—2—98)

नपुंसके समासे पूर्वपदस्य अन्त उदात्तः सभाशब्दे परे । गोपालसभम्' । 'अशाला च' इति क्लीबत्वम् ॥

## [२४५] ॥ पुरे प्राचाम् ॥ (6—2—99)

पूर्वपदस्य अन्त उदात्तः प्राचां देशे पुरे परे । 'दत्तपुरम्' । प्राचां किम् ? 'कार्तपुरम्' । 'उदपुरमन्नेन' ॥

## [२४६] ॥ अरिष्टगौडपूर्वे च ॥ (6--2—100)

अस्मिन् समासे पूर्वपदस्य अन्त उदात्तः पुरशब्दे । 'अरिष्टपुरम्' । 'गौडपुरम्' । 'अरिष्टगौडयोः' इति वक्तव्ये पूर्वग्रहणम् अरिष्टगौडौ पूर्वौ यस्मिन् समासे इति बहुव्रीहिलाभाय । तेन 'अरिष्टाश्रितपुरम्' 'गौडभृत्यपुरम्' इत्यत्रापि अरिष्टगौडयोरयं स्वरः सिद्धः ॥

## [२४७] ॥ न हास्तिनफलकमार्देयाः ॥ (6—2—101)

'पुरे प्राचाम्' इत्यस्य निषेधः । 'हास्तिनपुरम्' । 'फलकपुरम्' । 'मार्देयपुरम्' । मृदोरपत्यं मार्देयः । शुभ्रादिः । 'ढे लोपोऽकद्र्वाः' ॥

## [२४८] ॥ कुसूलकूपकुम्भशालं बिले ॥

(6—2—102)

एषामन्त उदात्तः । 'कुसूलबिलम्' । 'कूपबिलम्' । 'कुम्भबिलम्[1]' । 'शालाबिलम्[2]' । लिङ्गविशिष्टग्रहणात् 'कुसूलीबिलम्' ॥

## [२४९] ॥ दिक्शब्दा ग्रामजनपदाख्यानचानराटेषु ॥

(6—2—130)

दिक्शब्द इति कालवाचिनामपि ग्रहणम् ; दिशि दृष्टः शब्दः इत्याश्रयणात् । तेषामन्त उदात्तः ग्रामजनपदाख्यानार्थेषु चानराटशब्दे च उत्तरपदेषु । 'पूर्वेषुकामशमी' । 'दिक्संख्ये संज्ञायाम्' इति समासः । जनपद—'पूर्वपाञ्चालाः' । 'पूर्वापरप्रथम' इति समासः । आख्यान—'पूर्वयायातः' । ययातिमधिकृत्य कृतो ग्रन्थः 'यायातः' । ततः कर्मधारयः । अत्र पूर्वशब्दः काले । 'पूर्वचानराटः' ॥

## [२५०] ॥ आचार्योपसर्जनश्चान्तेवासिनि ॥

(6—2—104)

दिक्शब्दानां अन्त उदात्तः आचार्योपसर्जनकान्तेवासिनि उत्तरपदे । सूत्रे प्रथमा सप्तम्यर्थे । 'पूर्वपाणिनीयाः' । पाणिनेः छात्राः 'पाणिनीयाः' । अत्र शिष्याः प्रधानं आचार्य उपसर्जनं शाब्दबोधे । आचार्योपसर्जनं किम् ? 'पूर्वशिष्याः' ॥

---

1. इदं ख. नास्ति । 2. इदं घ. नास्ति ।

## [२५१] ॥ उत्तरपदवृद्धौ सर्वं च ॥ (6—2—105)

'उत्तरपदस्य' इत्यधिकृत्य या वृद्धिर्विहिता तद्वति उत्तरपदे सर्वशब्दस्य दिक्शब्दानां च अन्त उदात्तः । 'सर्वपाञ्चालकः' 'पूर्वपाञ्चालकः' । 'अवृद्धादपि बहुवचनविषयात्' इति जनपद-लक्षणो वुञ् । 'सुसर्वार्धदिक्शब्देभ्यो जनपदस्य' इति तदन्त-विधिः । 'सुसर्वार्धाज्जनपदस्य' 'दिशो मद्राणाम्' इत्युत्तरपदवृद्धिः अधिकारविज्ञानात् 'सर्ववैद्यः' 'सर्वभासः' इत्यादौ नैष स्वरः ॥

## (वा) ॥ पूर्वपदान्तोदात्तप्रकरणे मरुद्वृधादीनां छन्दस्युपसंख्यानम् ॥

'उत्तरपदादिः[1]' इत्यनुवर्तमाने—

## [२५२] ॥ कंसमजशूर्पपाय्यकाण्डं द्विगौ ॥ (6—2—122)

द्विगुसमासे एतानि उदात्तानि[2] । 'द्विकंसः' । आर्हीयस्य ठकः 'अध्यर्ध' इति लुक् । 'द्विमजः[3]' । पूर्ववत् ठको लुक् । 'द्विशूर्पः' । 'शूर्पादञन्यतरस्याम्' इत्यञः ठञो वा लुक् । 'द्विपाय्यम्' । पाय्यशब्दो मानवाची 'पाय्यसान्नाय्य' इति निपातितः । ततः ठञो लुक् । द्वे काण्डे प्रमाणमस्य 'द्विकाण्डम्' । 'प्रमाणे लो द्विगोर्नित्यम्' इति लुक् ॥

---

1. उत्तरपदादिः ङ. नास्ति । 3. द्विमन्थः ङ.
2. दिगावुत्तरपदानामेषांमादिरुदात्तः ङ.

## [२५३] ॥ तत्पुरुषे शालायां नपुंसके ।
(6—2—123)

शालान्ते नपुंसके तत्पुरुषे उत्तरपदस्य आ
'द्विजशालम्' । 'विभाषा सेनासुरा' इति क्लीबत्वम्

## [२५४] कन्था च ॥ (6—2—124)

नपुंसके तत्पुरुषे कन्थाशब्दस्य उत्तरपदस्य
सुशमस्य अपत्यं सौशमिः । तस्य कन्था 'सौश
'संज्ञायां कन्थोशीनरेषु' इति क्लीबत्वम् ॥

## [२५५] आदिश्चिहणादीनाम् ॥ (5—2–

क्लीबे कन्थान्ते तत्पुरुषे एषाम् आदिरुदात्तः ।
पूर्वपदाद्युदात्तार्थम् । 'चिहणकन्थम्' ।

चिहणो [1]मन्थरश्चैव मधुरो वैतुलस्तथा ।
भवेत् पटत्को [2]दैवाहिः कर्णं कुक्कुट
चिक्कणश्चिक्कणेत्यन्ये त एते चिहणादयः

## [२५६] ॥ चेलखेटकटुककाण्डं गर्हाय
(6—2—126)

एषाम् उत्तरपदानाम् आदिरुदात्तो गर्हायाम् ।
'पुत्रचेलम्' । चेलवत् तुच्छम् इत्यर्थः । 'उपानत्खेटम्

1. मरसश्चैवमस्रो क.　2. वैङाहिकर्णिः क. वैङ

तद्वद्दुर्बला उपानत् । 'दधिकटुकम्' । कटुकमस्वादु । 'भूतकाण्डम्' । काण्डं शरः, तद्वत् सत्त्वपीडाकरं भूतम् । व्याघ्रादय एते ॥

## [२५७] ॥ चीरमुपमानम् ॥ (6—2—127)

अस्य उत्तरपदस्य आदिरुदात्तः । वस्त्रं चीरमिव 'वस्त्रचीरम्' । व्याघ्रादिः ॥

## [२५८] ॥ पललसूपशाकं मिश्रे ॥ (6--2—128)

एषाम् आदिरुदात्तो मिश्रवाचिनि तत्पुरुषे । गुडेन मिश्रं पललम् 'गुडपललम्' । 'घृतसूपः' । 'घृतशाकम्' । 'भक्ष्येण मिश्रीकरणम्' इति समासः ॥

## [२५९] कूलसूदस्थलकर्षाः संज्ञायाम् ॥ (6—2—129)

एषाम् उत्तरपदानाम् आदिरुदात्तः । 'दाक्षिकूलम्' । 'भाजीसूदम्' । 'असम्मृष्टोऽसि हव्यसूदः' । 'हव्यानि हृदयानि सूदयति पाचयतीति 'हव्यसूदः', अग्निविशेषस्य नाम । षूद क्षरणे । क्षरणं पाकविशेषः । 'कर्मण्यण्'' इति वेदभाष्यम् । 'नाडायनस्थली' । 'दाक्षिकर्षः' । ग्रामविशेषस्य एताः संज्ञाः । 'भाजी' 'स्थली' इति 'जानपद' इति ङीष् ॥

## [२६०] ॥ अकर्मधारये राज्यम् ॥ (6—2—130)

राज्यस्य उत्तरपदस्य आदिरुदात्तः कर्मधारयभिन्ने तत्पुरुषे । 'ब्राह्मणराज्यम्' । 'पितरो यमराज्ये' ॥

## (वा) ॥ चेलराज्यादिस्वरात् अव्ययस्वरः पूर्वविप्रतिषेधेन ॥

'कुचेलम्' । 'कुराज्यम्' । आदिशब्दात् 'वर्ग्यादयश्च' इति वक्ष्यमाणस्वरो गृह्यत इत्याहुः । 'कुवर्ग्यः' इत्यादि ॥

## [२६१] ॥ वर्ग्यादयश्च ॥ (6—2—131)

एषाम् उत्तरपदानाम् आदिरुदात्तः पूर्वविषये । 'वासुदेव-वर्ग्यः' । 'वर्ग्यादयः प्रतिपदं गणे[1] न पठिताः । दिगादिषु तु वर्ग, पूग, गण, इत्यादयो ये पठिताः त एव यत्प्रत्ययान्ता वर्ग्यादय इति इह प्रतिपत्तव्याः' इति वृत्तौ ॥

## [२६२] ॥ पुत्रः पुम्भ्यः ॥ (6—2—132)

पुंशब्देभ्य उत्तरपदस्य पुत्रस्य आदिरुदात्तः । 'दामकपुत्रः' । लिङ्गविशिष्टग्रहणात् पुत्रीशब्देऽपि अयं स्वरः । 'कुसूलीबिलम्' 'नाडायनस्थली' इत्यादिवत् । 'सूतपुत्री' । शार्ङ्गरवादिङीनन्तः पुत्रीशब्दः । 'सूतोग्रराजभोजकुलमेरुभ्यो दुहितुः पुत्रड्वा' इति विहितस्तु पुत्रशब्दो न अनेन गृह्यते, सानुबन्धकत्वात् । 'सूतपुत्री' । समासान्तस्वरः । एवं विस्पष्टे स्वरभेदे 'स्वरभेदो दुरुपपाद इति पुत्रडादेशवार्त्तिकं नारभ्यम्' इत्यादि शार्ङ्गरवादिसूत्रकौस्तुभोक्ति-श्चिन्त्या । पुम्भ्यः किम् ? 'प्रमुदे कुमारीपुत्रम्' ॥

## [२६३] ॥ नाचार्यराजर्त्विक्संयुक्तज्ञात्याख्येभ्यः ॥ (6—2—133)

संयुक्ताः—स्त्रीसंबधिनः स्यालादयः । ज्ञातयः—पितृसंबन्धिनो बान्धवाः । आख्याग्रहणस्य आचार्यादिभिः प्रत्येकं संबन्धात्

1. प्रातिपदिका गणे सू. घ.

पर्यायविशेषयोरपि ग्रहणम् । एतेभ्यः परस्य पुत्रस्य आदिर्न उदात्तः । 'आचार्यपुत्रः' । 'उपाध्यायपुत्रः' । 'शाकटायनपुत्रः' । 'शतेन राजपुत्रैः' । एवमितरत्रापि उदाहार्यम् ॥

## [२६४] ॥ चूर्णादीन्यप्राणिषष्ठ्याः ॥ (6—2—134)

अप्राणिवाचिनः षष्ठ्यन्तात् परेषां एषाम् आदिरुदात्तः । 'मुद्गचूर्णम्' । प्राणिषष्ठ्यास्तु 'मत्स्यचूर्णम्' । 'चूर्णादीनि अप्राण्युपग्रहात्' इति पाठान्तरम् । तत्रापि उपग्रहशब्देन षष्ठ्यन्तमेव पूर्वाचार्यप्रसिद्ध्या गृह्यत इति वृत्तौ ॥

'चूर्णादिश्चूर्णकरिपकरिवाः शाखिनस्तथा ।
शाकटिश्च[1] तथा द्राक्षा भवेतां कुस्तकुन्दमौ[2] ॥

दलपश्चमसी च स्याच्चणकश्चङ्कणेत्यपि ।
वृत्तावमी प्रपठिताश्चौळश्चेति त्रयोदश ॥'

## [२६५] ॥ षट् च काण्डादीनि ॥ (6—2—135)

'काण्डं गर्हायाम्' इत्यारभ्य ये प्रागुक्ताः काण्डचीरपललसूपशाककूलशब्दाः षट्, अप्राणिषष्ठ्याः परेषाम् एषाम् आदिरुदात्तः । 'शरकाण्डम्' । 'कुशचीरम्' । 'लवणपललम्' । 'मुद्गसूपः' । 'कटुकशाकः' । 'नदीकूलम्' ॥

## [२६६] ॥ कुण्डं वनम् ॥ (6—2—136)

वनार्थकस्य कुण्डस्य उत्तरपदस्य आदिरुदात्तः । 'शरकुण्डम्' रसमुदायः । वनं किम् ? 'मृत्कुण्डम्' । भाजनविशेषः ।

---

1. शाकटाश्च क. ङ. 2. -कुन्दुमौ ख.

कुण्डशब्दः समुदायभाजनविशेषयोस्तटाकादिशब्दवद्विशिष्टाधारे जले च वर्तते । वनशब्दोऽपि समुदायजलयोः । तत्र 'वनम्' इति विशेषणात् भाजनवचनकुण्डशब्दनिवृत्तावपि जलवचनकुण्डशब्देऽतिप्रसङ्ग एवेति तं वारयितुं वार्त्तिकम्—

॥ कुण्डाद्युदात्तत्वे तत्समुदायग्रहणम् ॥

इति । तच्छब्देन च अत्र समस्यमानपूर्वपदार्थो गृह्यते । समुदायवाची अत्र वनशब्दः, न तु उदकार्थ इत्यर्थः । तेन 'मृत्कुण्डः' इत्यत्र उदकवचनेऽपि नातिप्रसङ्ग इति केचित् । अन्ये तु तत्समुदायशब्देन वनसमुदायो गृह्यते । तेन वनसमुदाये वाच्ये कुण्डशब्दस्य स्वरः, न तु वनमात्रे इति वार्त्तिकाशयमाहुः ॥

## [२६७] ॥ प्रकृत्या भगालम् ॥ (6—2—137)

भगालार्थं उत्तरपदं प्रकृतिस्वरम् । 'कुम्भीभगालम्' । 'कुम्भीकपालम्' । 'कुम्भीनदालम्' । भगालादयो मध्योदात्ताः; 'लघावन्ते' इति फिट्सूत्रात् ॥

॥ इति तत्पुरुषस्वरः ॥

## ॥ अथ अव्ययीभावस्वरः ॥

## [२६८] ॥ परिप्रत्युपापा वर्ज्यमानाहोरात्रावयवेषु ॥
(6—2—33)

एते वर्ज्यमानवाचिनि अहोरात्रावयववाचिनि च उत्तरपदे प्रकृतिस्वरा भवन्ति । अव्ययीभावार्थोऽयमारम्भः । तत्पुरुषे तु 'तत्पुरुषे तुल्यार्थ' इति सिद्धः । बहुव्रीहावपि 'बहुव्रीहौ प्रकृत्या' इति । 'परित्रिगर्तं वृष्टो देवः' । 'अपत्रिगर्तम्' । 'अपपरी वर्जने' इति कर्मप्रवचनीयसंज्ञायाम् 'पञ्चम्यपाङ्परिभिः' इति पञ्चमी । 'अपपरिबहिरञ्चवः पञ्चम्या' इत्यव्ययीभावः । 'प्रतिपूर्वाह्णम्' । 'लक्षणेनाभिप्रती' इत्यव्ययीभावः । 'उपपूर्वाह्णम्' । सामीप्ये अव्ययीभावः । 'प्रतिपूर्वरात्रः' । 'उपापररात्रम्' । तत्र अपपरी वर्जने वर्तेते इत्येतयोर्वर्ज्यमान उदाहृतः, नेतरयोः । अहोरात्रावयवा अपि तयोर्वर्ज्यमाना एव इति पृथङ्नोदाहृताः ॥

## [२६९] ॥ कूलतीरतूलमूलशालाक्षसममव्ययीभावे ॥
(6—2—121)

एषाम् उत्तरपदानाम् आदिरुदात्तः अव्ययीभावे । 'अनुकूलम्' । 'अनुतीरम्' । 'अनुमूलम्' । 'अनुतूलम्' । 'अन्वक्षम्' । 'प्रत्यक्षम्' । 'प्रतिपरसमनुभ्योऽक्ष्णः' इत्यच् समासान्तः । 'परिप्रत्युपापाः' इत्यतः परत्वात् 'पर्यक्षम्' इत्यत्र अयमेव स्वरः । 'सुषमम्' । 'विषमम्' । 'दुःषमम्' । समस्य शोभनत्वम्, विगतत्वम्, दुष्टत्वम्, इति विग्रहमाहुः । तिष्ठद्गुप्रभृतित्वात् एषामव्ययीभावत्वम् । 'सुविनिर्दुर्भ्यः सुपिसूतिसमाः' इति षत्वम् । तस्य असिद्धत्वात् समशब्द एव अयम् । " 'दहति पुण्यसमं भवति यदि न दहति पापसमम्' । [1]इमावपि तिष्ठद्गुप्रभृतिषु

---

1. उभावपि ख.

पठितौ । पुण्यानुरूपम्, पापानुरूपम् इत्यर्थः" इति वेदभाष्यम् । अव्ययीभावे इति किम् ? 'सहस्राक्षः' । 'बहुव्रीहौ सक्थ्यक्ष्णोः' इति षचि चित्स्वरः । 'अस्याः पृथिव्या अध्यक्षम्' । 'विषम आलभेत विषमाः' । तत्पुरुषत्वात् इह अव्ययपूर्वपदप्रकृतिस्वर इत्याहुः । यत्तु—'परोक्षम्' इत्यत्र अनेन उत्तरपदाद्युदात्तत्वम् इति, तच्चिन्त्यम् ; 'परोक्षे लिट्' इत्यत्र हि भाष्ये परोक्षशब्द इत्थं व्युत्पादितः—

'परोभावः परस्याक्षि परोक्षे लिटि दृश्यताम् ।
उत्वं वादेः परादक्ष्णः सिद्धं वास्मान्निपातनात् ॥' इति ।

तत्र कैयटः—अक्ष्णः परमिति विग्रहे मयूरव्यंसकादित्वात् समासः । 'अच्प्रत्यन्ववपूर्वात्' इत्यत्र योगविभागात् अच् समासान्तः । अत एव निपातनाद्वा[1] 'प्रतिपरसमनुभ्योऽक्ष्णः' इत्यच् । स यद्यपि अव्ययीभावे विधीयते, तथापि परशब्दस्य अक्षिशब्देन अव्ययीभावासंभवात् समासान्तरे विज्ञायते—इति । वृत्तिविषये अक्षिशब्दः सर्वेन्द्रियवचनः, न चक्षुर्वचनः । अन्यथा इन्द्रियान्तरविज्ञातं परोक्षमापद्येत । एवं च 'अक्ष्णोऽदर्शनात्' इत्येव अच् समासान्त इति हरदत्तः । एवं च परोक्षशब्दस्य अव्ययीभावत्वाभावात् कथमत्र अयं स्वरः ? केचित्तु—अव्ययीभावाधिकारे 'प्रतिपरसम्' इत्यज्विधिसामर्थ्यात् परोक्षशब्दस्यापि अव्ययीभावत्वं विज्ञायते—इति । 'तेष्वेव परोक्षं जुहोति' इत्यत्र वेदभाष्ये तु—अक्षाण्यतीत्य वर्तत इति 'अव्ययं विभक्ति' इत्यादिना अत्ययेऽव्ययीभावः इति स्थितम् । यद्वा 'सिद्धं वास्मान्निपातनात्' इत्यत्र 'निर्भागः समुदाय इन्द्रियागोचरार्थवाची निपात्यते' इति कैयटोक्तेः अखण्डपरोक्षशब्दे 'लघावन्ते' इति मध्योदात्तता ॥

॥ इति अव्ययीभावस्वरः ॥

1. यद्वा घ. अधिकम् ।

## ॥ अथ द्वन्द्वस्वरः ॥

## ॥ राजन्यबहुवचनद्वन्द्वेऽन्धकवृष्णिषु ॥
(6—2—34)

नां बहुवचनान्तानां यो द्वन्द्वः अन्धकवृष्णिषु
पदप्रकृतिस्वरः । 'श्वाफल्कचैत्रकाः' । 'कृष्यन्धक'
'शिनिवासुदेवाः' । शिनिशब्द आद्युदात्तः तदपत्येषु
अन्धकवृष्णीनां क्षत्त्रियत्वाव्यभिचारात् राजन्यग्रहणे
यग्रहणम् अभिषिक्तक्षत्त्रियवंश्यत्वलाभाय । तेनेह न,
। द्वीपे भवा द्वैप्याः । 'द्वीपादनुसमुद्रं यञ्' ।
यनाः' । एतेऽन्धकवृष्णिवंश्यराजन्याः, न तु अभि-
न इति किम् ? 'संकर्षणवासुदेवौ' । द्वन्द्व इति
माराः 'वृष्णिकुमाराः' । अन्धकवृष्णिषु किम् ?
ौ यान्ति' ॥

## ] ॥ संख्या ॥ (6—2—35)

ं प्रकृतिस्वरं द्वन्द्वे । 'एकादश च मे त्रयोदश
दश च इति द्वन्द्वः । 'प्रागेकादशभ्यः'
इण्भीका' इति कन्नन्त एकशब्दः । 'त्रेस्त्रयः'
त्तो निपात्यत इत्याहुः । 'सप्तविंशतिः'
'लिङ्गमशिष्यम्' इति न क्लीबत्वम् ।
ध्यमपदलोपिसमासाश्रयणे तु पूर्वपदप्रकृति-
स्थितम् ॥

## [२७२] ॥ आचार्योपसर्जनश्चान्तेवासी ॥

(6—2—36)

आचार्योपसर्जनकान्तेवासिवाचकसर्वावयवकद्वन्द्वे पूर्वपदं प्रकृतिस्वरम् । 'आपिशलिपाणिनीयाः' । आपिशल्या अपत्यमापिशलिः । तस्य छात्राः 'आपिशलाः' । 'इञश्च' इत्यण् । पाणिनेः छात्राः 'पाणिनीयाः' । आचार्योपसर्जनकान्तेवासिवचनत्वमवयवद्वारा द्वन्द्वस्य विशेषणम्, न तु पूर्वपदस्य । तेन यत्र पूर्वपदमात्रं तथाभूतं तत्र नैष स्वरः । 'पाणिनीयदेवदत्तौ' ॥

## [२७३] ॥ कार्तकौजपादयश्च ॥ (6—2—37)

एषु द्वन्द्वेषु पूर्वपदं प्रकृतिस्वरम् । 'कार्तकौजपौ' । कृतकुजपाभ्याम् ऋष्यण् । इह याज्यानुवाक्याशब्दः पठितः । यजेः ण्यति 'यजयाच' इति न कुत्वम् । तित्स्वरितः । टाबादि । 'याज्या' । 'समानी याज्यानुवाक्ये भवतः', 'पितृणां याज्यानुवाक्याभिः' इत्यादौ व्यत्ययात् अन्तस्वरितः । 'दोषावस्तःशब्दो द्वन्द्वः । कार्तकौजपादिः । रात्रावहनि च इत्यर्थः[1] । निपातेन एतेन निपाताद्युदात्तत्वम्' इति 'दोषावस्तर्धिया' इत्यत्र वेदभाष्यम् । 'यत्सायम्प्रातः' । कार्तकौजपादयो विस्तरभयान्न लिख्यन्ते ॥

## [२७४] ॥ देवताद्वन्द्वे च ॥ (6—2—141)

अत्र पूर्वोत्तरपदे युगपत् प्रकृतिस्वरे स्तः । 'इन्द्रावरुणयोरहम्' । 'तावब्रूतामग्नीषोमौ' । 'इन्द्राबृहस्पती' । 'ऋत्रेन्द्र'

---

1. इत्यर्थे निपातितः ख.

इति रन्नन्तः इन्द्रशब्दो निपातितः । उनन्नन्तो वरुणशब्दः । अग्निशब्दो व्युत्पादितः । मन्नन्तः सोमशब्दः । बृहस्पतिशब्दे वनस्पत्यादित्वात् द्वौ उदात्तौ । 'मित्रावरुणा शरदा' इत्यत्र षाष्ठमामन्त्रिताद्युदात्तत्वम् । 'आ नो मित्रावरुणा' इत्यादौ आष्टमिको निघातः । यत्तु स्वरमञ्जर्याम्—यत्रोभयोरेकस्मिन् हविषि देवतात्वं तत्रैव अयं युगपत् प्रकृतिस्वरः, नान्यत्र, यथा 'सूर्याचन्द्रमसौ धाता'—इति, यच्च व्याख्यातम्—न ह्यत्र अनयोरेकस्मिन् हविषि मिलितयोर्देवतात्वं संभवति, सृष्टिप्रस्तावनादिति भावः । न चैवम् 'देवताद्वन्द्वे च' इति आनङपि अत्र न स्यात् इति वाच्यम् ; स्वरविधौ एवं नियमाश्रयणात्—इति, तदुभयं निष्प्रमाणकम् ; मुनित्रयानुक्तेः । वृत्त्यादावपि अस्य अर्थस्य अदर्शनात् । 'नोत्तरपदेऽनुदात्तादौ' इति निषेधेनैव उक्तलक्ष्यनिर्वाहाच्च । एवं नियमाश्रणे 'द्यावापृथिवी सहास्ताम्', 'मित्रावरुणौ त्वोत्तरतः परिधत्ताम्' इत्यादौ वेदे लोके च एतत्स्वराभावप्रसङ्गाच्च । अत्र प्रकरणे द्युप्रभृतीनामेकस्मिन् हविषि देवतात्वासंभवात् । एतेन 'देवताद्वन्द्वे च' इति आनङ्विधाविव एकहविर्भागित्वादिना प्रसिद्धसाहचर्यदेवतायुगवाचिनि द्वन्द्व एव अयं स्वर इति 'सूर्याचन्द्रमसौ' इत्यत्र न दोषः' इति स्वरमञ्जर्यभिप्रायवर्णनमपास्तम् । तत्र हि " 'आनङ् ऋतो द्वन्द्वे' इति प्रकृते पुनः 'देवताद्वन्द्वे च' इति द्वन्द्वग्रहणमुक्तदेवताद्वन्द्वविशेषपरिग्रहाय । तेन 'ब्रह्मप्रजापती' इत्यादौ न आनङ्" इति आकरे स्थितम् । न ह्येवं प्रकृते किञ्चिन्नियामकमस्ति । अत एव अत्र वृत्त्यादौ नायमर्थः प्रदर्शितः । अत एव च 'नोत्तरपदेऽनुदात्तादौ' इत्यत्र 'उत्तरपदग्रहणाभावे सति अनुदात्तादित्वं द्वन्द्वविशेषणं स्यात् । ततश्च 'चन्द्रसूर्यौ' इत्यादौ अयं निषेधः स्यात्, द्वन्द्वस्य अनुदात्तादित्वात्' इति हरदत्तः । अत्रापि द्वन्द्वविशेषपरिग्रहे चन्द्रसूर्ययोरेकहविर्भागित्वेन प्रसिद्ध्यभावात् 'तत्र निषेधः स्यात्'

इत्यनुपपन्नम् । अत एव आनङपि अत्र न कृतः । अपि च एवं विवक्षायामपि 'सूर्याचन्द्रमसौ' इत्यत्र न दोष इति निरासः अयुक्तः[1] ; 'सूर्याचन्द्रमोभ्यां वेहतमालभेत' इत्यापस्तम्बसूत्रेण तयोरपि एकहविर्भागित्वात् । 'ता सूर्याचन्द्रमसा विश्वभृत्तमा महत्' इत्यादितत्पशुयाज्यादिरूपैकमन्त्रस्तुत्यत्वाच्च इति ॥

## [२७५] ॥ नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु ॥ (6—2—142)

पृथिव्यादिभिन्ने अनुदात्तादौ उत्तरपदे देवताद्वन्द्वस्वरो न । 'इन्द्राग्नी वा एतस्य' । 'इन्द्रवायू हि' । 'कृपावा' इत्युणन्तो वायुशब्दः । उत्तरपदे इति किम् ? 'अनुदात्तादौ' इत्येतदुत्तरपदविशेषणं यथा स्यात्, द्वन्द्वविशेषण मा भूदिति । तथा हि सति 'मित्रावरुणौ' 'चन्द्रसूर्यौ' इत्यत्रापि निषेधः प्रसज्येत । अपृथिव्यादिष्विति किम् ? 'द्यावापृथिवी स्ताम्' । 'दिवो द्यावा' इत्यत्र द्यावाशब्द आद्युदात्तो निपातितः । 'प्रथेष्ष्विवन् संप्रसारणं च' । षित्त्वात् ङीषि 'पृथिवी' । 'सोमारुद्रा' । 'रोदेर्णिलुक् च' इति रकि रुद्रशब्दः । 'इन्द्रापूषणौ' । 'श्वन्नुक्षन्' इत्यादौ पूषन्शब्दोऽन्तोदात्तो निपातितः । 'सोमापूषभ्यां जनत्' इत्यादौ व्यत्ययेन अन्तोदात्तः । 'अपृथिवी' इत्यादिपर्युदासो लिङ्गम् 'स्वरविधौ व्यञ्जनमविद्यमानवत्' इत्यत्र । " 'अनुदात्तादेश्च' इत्यञ्बाधनार्थो बिल्वादिभ्योऽण्विधिर्लिङ्गम्' इति परिभाषावृत्तौ । "'शुक्रामन्थिनावगृह्णन्' । 'ऋज्वेन्द्र' इत्यत्र शुक्रशब्दोऽन्तोदात्तो निपातितः । मन्थोऽस्य अस्तीति इन्, 'मन्थी' "

1. अयुक्तः ख. नास्ति ।

इति स्वरमञ्जर्याम् ; शुक्रमन्थिशब्दयोरिह ग्रहविशेषवचनत्वम्, न तु देवतावचनत्वम् इति प्राप्तिरेव न इति चिन्त्यम् । उभयपदप्रकृतिस्वरत्वं तु अस्य वनस्पत्यादित्वात् ॥ तथा हि—

## [२७६] ॥ उभे वनस्पत्यादिषु युगपत् ॥

(6—2—140)

'प्रकृत्या' इति वर्तते । 'देवो वनस्पतिः' । 'नब्विषयस्य' इति वनस्यादिरुदात्तः । पातेः डतिः पतिः । पारस्करादित्वात् सुट् । 'बृहस्पतिर्नः परिपातु पश्चात्' । 'वर्तमाने पृषद्बृहत्' इति अतिप्रत्ययान्तो बृहच्छब्दोऽन्तोदात्तः । तस्य अत्र केचित् आद्युदात्तत्वं वर्णयन्तीति वृत्तौ । 'तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च' । 'कृत्वा शचीपतिः' । शचेः क्तिन्नन्तात् 'कृदिकारादक्तिनः' इति ङीषि 'शची' । शार्ङ्गरवादिषु पठतां तु ङीनन्तत्वान् आद्युदात्तः । 'तनूनपात्' । 'कृषिचमितनि' इति ऊप्रत्यये तनूशब्दः । तस्य आद्युदात्तत्वं निपातनात् । न पाति न पातयतीति वा 'नपात्' । क्विबन्तः । 'नभ्राण्णपात्' इत्यत्र आद्युदात्तो निपातितः । तन्वा नपात् 'तनूनपात्' । 'नराशꣳसः' । नरा अस्मिन्नासीनाः शंसन्ति, नरा एनं शंसन्तीति वा व्युत्पत्त्या देशविशेषः, अग्निर्वा । नॄ नये । 'ऋदोरप्' बाहुलकात् कर्तरि 'नरः' । कर्मण्यधिकरणे वा घञि 'शंसः' । निपातनाद्दीर्घः । 'शुनःशेपः' । शुन इव शेपोऽस्य । 'शेपपुच्छलाङ्गूलेषु' इति षष्ठ्या अलुक् । श्वन्शब्दः 'श्वन्नुक्षन्' इति कनिनन्तः । शेपशब्दः सिट्त्वात् आद्युदात्तः । 'शण्डामर्कौ' । 'उभौ घञन्तौ' इति स्वरमञ्जर्याम् । "शडि रुजायाम् । पचाद्यच् । 'शण्डः' । प्रासादिः । मर्चयतेः 'इण-

भीका' इति कनि 'मर्कः' " इति हरदत्तादयः। 'तृष्टावरूत्री'। तृषेः क्ते निपातनान्नेट्। 'तृष्टः'। 'निष्ठा च द्व्यच्' इत्याद्युदात्तः। प्रसितादिसूत्रेण अन्तोदात्तः, 'वरूत्री'। 'अन्येषामपि' इति दीर्घः। 'बभ्राविश्ववयसौ'। लबि अवस्रंसने। पचाद्यचि अन्तोदात्तः। निपातनाल्लस्य बः। विश्वानि वयांसि अस्य 'विश्ववयाः'। 'बहुव्रीहौ विश्वम्' इति विश्वशब्देऽन्त उदात्तः। प्राग्वद्दीर्घः। 'मर्मृत्युः'। मृङः 'अन्येभ्योऽपि' इति विच्। 'मर्'। 'भुजिमृङ्भ्यां युक्त्युकौ'। 'मृत्युः'। इह द्वन्द्वाना-मदेवतार्थः अनुदात्ताद्युत्तरपदार्थश्च पाठः॥

॥ इति द्वन्द्वस्वरः॥

---

## ॥ अथ बहुव्रीह्यादिस्वरापवादः॥

### [२७७] ॥ वनं समासे॥ (6—2—178)

उपसर्गात् परस्य वनस्य अन्त उदात्तः समासे। 'यदि वा तावत् प्रवणम्'। 'प्रावणेभिः सजोषसः'। 'प्रनि-रन्तश्शर' इति णत्वम्। 'निपातस्य च' इति 'प्रावणेभिः' इत्यत्र सांहितो दीर्घः। अत्र अव्ययपूर्वपदप्रकृतिस्वरः प्राप्तः। 'अपवनम्' 'परिवनम्' इत्यत्र 'परिप्रत्युपापाः' इत्यव्ययीभाव-स्वरस्यापि अयमपवादः। समासग्रहणं समासमात्रे यथा स्यात्, बहुव्रीहिपदानुवृत्तिशङ्का[1] मा भूत् इति॥

1. -पदानुषक्तिशङ्का क.

## [२७८] ॥ अन्तः ॥ (6—2—179)

पञ्चम्यर्थे प्रथमा । अन्तश्शब्दात् परस्य वनस्य अन्त उदात्तः । 'अन्तर्वणो देशः' । पूर्ववण्णत्वम् । अनुपसर्गार्थमिदम् ॥

## [२७९] ॥ अन्तश्च ॥ (6—2—180)

उपसर्गात् परस्य[1] अन्तशब्दस्य अन्त उदात्तः । 'प्रान्तः' । 'पर्यन्तः' । बहुव्रीहिः प्रादिसमासो वा । 'समन्तं पर्यवद्यति समन्तमेव' । 'उपान्ते तस्य व्यतिषजेत्' ॥

## [२८०] न निविभ्याम् ॥ (6—2—181)

पूर्वसूत्रेण उक्तस्य निषेधः । 'न्यन्तः' । 'व्यन्तान् करोति' । पूर्वपदप्रकृतिस्वरः । यणादेशे 'उदात्तस्वरितयोः' इति स्वरितत्वम् ॥

## [२८१] ॥ परेरभितोभावि मण्डलम् ॥ (6—2—182)

अभितः उभयतो भवतीति अभितोभावी । णिनिः । परेरुत्तरस्य अभितोभवनस्वभावकूलादिवाचिनो मण्डलशब्दस्य अन्त उदात्तः । 'परिकूलम्' । 'परिमण्डलम्' । बहुव्रीहिः प्रादिसमासोऽव्ययीभावो वा । अव्ययीभावे 'परिप्रत्युपापाः' इति स्वरो बोध्यः । 'ऋषभौ परिमरौ' । 'परितः[2] उत्तराधरयोर्मरौ ययोस्तौ

---

1. उत्तरस्य घ. 2. परितः मरौ ययोस्तौ घ.

परिमरौ, मृतानुजौ मृतपूर्वजौ वा । प्रकृतसूत्रेण अन्तोदात्तः' इति वेदभाष्यम् । एवम् 'देवानां परिषूतमसि' इत्यत्रापि । परिषूतं परिगृहीतम्[1] ॥

## [२८२] ॥ प्रादस्वाङ्गं संज्ञायाम् ॥

(6—2—183)

प्रात् परस्य अस्वाङ्गवाचिनोऽन्त उदात्तो नाम्नि[2] । 'प्रग्रहम्' । 'प्रद्वारम्' । बहुव्रीहिः प्रादिसमासो वा । अस्वाङ्गं किम् ? 'प्रपदम्' ॥

## [२८३] ॥ निरुदकादीनि च ॥ (6—2—184)

एषामन्त उदात्तः । 'निरुदकम्' 'निर्मशकम्' इत्यादि । बहुव्रीहिः प्रादिसमासो वा ॥

॥ परेर्हस्तपादकेशकर्षाः संज्ञायाम् ॥ इति गणसूत्रम् । 'परिहस्तः' इत्यादि । हरिरिव केशो यस्य 'हरिकेशः' । 'हरिकेशायोपवीतिने' इत्यत्र पूर्वपदप्रकृतिस्वर एव दृश्यते । आकृतिगणोऽयम् । तेन "'सा द्विरूपा वशाभवत्' इत्यत्र द्विरूपाशब्दस्य अवाश्रृङ्ग शब्दस्य 'निर्मन्थ्यं क्षुधो रूपम्' इत्यादौ निर्मन्थ्यादिशब्दानां च निरुदकादित्वम्" इति वेदभाष्यम् उपपन्नम् ॥

---

1. अस्मिंश्च पक्षे प्रवृद्धादित्वादन्तोदात्तः ङ. अधिकम् ।
2. नाम्नि घ. नास्ति ।

## [२८४] अभेर्मुखम् ॥ (6—2—185)

अभेः परस्य[1] मुखस्य अन्त उदात्तः । 'अभिमुखम्' । बहुव्रीहिः प्रादिसमासो वा । 'उपसर्गात् स्वाङ्गं ध्रुवम्' इति सिद्धे वचनम् अबहुव्रीह्यर्थम् अध्रुवार्थम् अस्वाङ्गार्थं च[2] । 'अभिमुखा शाला' ॥

## [२८५] ॥ अपाच्च ॥ (6—21—86)

'मुखमन्तोदात्तम्' इत्येव । 'अपमुखम्' । अव्ययीभावोऽपि अत्र प्रयोजयति । तत्र हि 'परिप्रत्युपापाः' इति पूर्वपद-प्रकृतिस्वर[3] आरब्धः ॥

## [२८६] ॥ स्फिगपूतवीणाञ्जोऽध्वकुक्षिसीर-नामनाम च ॥ (6—2—187)

अपात् परेषामेषामन्त उदात्तः । 'अपस्फिगम्' । 'अपपूतम्' । 'अपवीणम्' । 'अपाञ्जः' । 'अपाध्वा' । 'उपसर्गादध्वनः' इत्यच् समासान्तो न कृतः ; अनित्यत्वात् । अध्वग्रहणमेव च अनित्यत्वे लिङ्गम् । अन्यथा चित्त्वादेव अन्तोदात्तत्वे सिद्धे तद्ग्रहणवैयर्थ्यात् । 'अपकुक्षि' । 'अपसीरम्' । 'अपलाङ्गलम्' । 'अपनाम' । सर्वत्र प्रादिसमासो बहुव्रीहिः अव्ययीभावो वा । 'उपसर्गात् स्वाङ्गम्' इति सिद्धे स्फिगपूतकुक्षिग्रहणं पूर्वपद-बहुव्रीह्याद्यर्थम् । नामग्रहणं सीरशब्देनैव संबध्यते, न तु स्फिगादिभिः ; स्फिगपूतकुक्षीणां पृथग्ग्रहणात् ॥

---

1. परस्य घ. नास्ति ।
2. बहुव्रीह्यर्थं स्वाङ्गार्थं ध्रुवार्थं च घ.
3. -प्रकृतिस्वरार्थः घ.

## [२८७] ॥ अधेरुपरिस्थम् ॥ (6—2—188)

अधेः परस्य उपरिस्थवाचिनोऽन्त उदात्तः । 'अधिदन्तः' । 'अधिकर्णः' । अध्यारूढो दन्त इति प्रादिसमासः । दन्तस्य उपरि योऽन्यो दन्तो जायते स उच्यते । उपरिस्थं किम् ? 'यदधिषवणे' ॥

## [२८८] ॥ अनोरप्रधानकनीयसी ॥ (6—2—189)

अनोः परस्य अप्रधानवाचिनः कनीयसश्च अन्त उदात्तः । अनुगतो ज्येष्ठम् 'अनुज्येष्ठः' । 'अत्यादयः' इति समासः । 'पित्रा सोममनुष्वधं मदाय' । स्वधा अन्नम् । सोमविशेषणमेतत् । सुषामादित्वात् षत्वम् । 'अनूकाशमेवैतानि' । अनुगतः कनीयान् 'अनुकनीयान्' । प्रधानार्थं कनीयश्शब्दग्रहणम् ॥

## [२८९] ॥ पुरुषश्चान्वादिष्टः ॥ (6—2—190)

अनोः परस्य अन्वादिष्टवाचिनः पुरुषस्य अन्त उदात्तः । 'अनुपुरुषः' । अन्वादिष्टः—अप्रधानशिष्टः, अन्वाचित इति यावत् । कस्मिंश्चित् प्राक्कथिते योऽन्यः पश्चात् कथ्यते स वा[1] ॥

## [२९०] ॥ अतेरकृत्पदम्[2] ॥ (6—2—191)

अतेः परस्य अकृदन्तस्य पदशब्दस्य अन्त उदात्तः । 'अत्यङ्कुशो नागः' । '[3]अतिपदा शक्करी' । इह अव्याप्त्यतिव्याप्ति-

---

1. एवम् क.
   सर्वम् ख.
2. -पदे घ.
3. त्रिपदा घ.

परिहाराय[1] 'अकृतपदम्' इत्यपनीय 'अतेर्धातुलोपे इति वक्तव्यम्' इति वार्तिकम् । यथान्यासे तु कारकमतिक्रान्तः 'अतिकारकः' इत्यत्र अव्याप्तिः । शोभनो गार्ग्यः 'अतिगार्ग्यः' इत्यत्र अतिव्याप्तिश्च । अत्यङ्कुशादौ वृत्तिविषये अतिशब्दोऽतिक्रान्तार्थवृत्तिरिति क्रमेरप्रयोग एव लोपः ॥

## [२९१] ॥ नेरनिधाने ॥ (6—2—192)

निधानमप्रकाशता । तद्भिन्नार्थान्नेः परस्य उत्तरपदस्य अन्त उदात्तः । '[2]निर्मूलं तृणम्' । बहुव्रीहिः प्रादिसमासो वा । 'निवात एषामभये स्याम' । निर्गतो वातो यस्मात्तन्निवातम् । 'वातोऽपि[3] यत्र स्पन्दितुं न शक्नोति तत्र भयरहितस्थले[4] वयं स्याम वर्तेमहि' इति वेदभाष्यम् ॥

॥ इति समासस्वरप्रकरणम् ॥

॥ हरिः ओम् ॥

---

1. -वारणाय घ. ङ.
2. निर्मूलः ङ.
3. अपि क. नास्ति ।
4. -रहिते देशे घ. ङ.

# ॥ अथ फिट्सूत्राणि ॥

## ॥ अथ प्रथमः पादः ॥

एवं धातुप्रत्ययसमाससम्बन्धिनः स्वराः कथिताः ।
अर्थात् स्वरोऽपि विदितस्तत एव प्रातिपदिकानाम् ॥
अथ यत् फिट्सूत्राभिधमुदितं शन्तनुमहर्षिणा शास्त्रम् ।
तदिदानीं व्याचक्षे तदेकवाक्यं हि पाणिनीयेन ॥
सूत्राण्यष्टाशीतिस्तत्र च चरणास्तु चत्वारः ।

यद्यपि पाणिनीयेऽपि कृत्तद्धितप्रत्ययबलात् सुज्ञानः प्रातिपदिकस्वरः, समासस्वरस्तु साक्षादेव व्युत्पादितः, तथापि तत्रैव विशेषबोधकत्वात् शान्तनवशास्त्रस्य तदेकवाक्यत्वम् । तथा हि—कनिष्ठज्येष्ठशब्दौ इष्ठन्नन्ततया आद्युदात्तौ पाणिनीये व्युत्पादितौ । शान्तनवे तु तयोर्वयसि अन्तोदात्तत्वं विहितम् 'ज्येष्ठकनिष्ठयोर्वयसि' इति । प्रयोगश्चैवम् 'ज्येष्ठस्य ज्यैष्ठिनेयस्य' इत्यादौ । एवमुणादीनामव्युत्पत्तिपक्षे औणादिकशब्दानां शान्तनवेनैव स्वरनिर्वाहः । व्युत्पत्तिपक्षेऽपि ये उणादौ साक्षान्न व्युत्पादिताः तेषां शान्तनवमन्तरेण न सुगमः स्वरः । शान्तनवमपि समासतिङ्स्वरादिसिद्धये पाणिनीयशास्त्रमपेक्षते । एवमनयोरेकवाक्यतामभिप्रेत्यैव भाष्ये 'हलन्त्यम्' इत्यत्र स्वर्शब्दे रेफस्य इत्सञ्ज्ञामाशङ्क्य 'न्यङ्स्वरौ स्वरितौ' इति स्वरितकरणसामर्थ्यान्न भवतीति परिहृतम् । कर्तृभेदेऽपि सूत्रभाष्यवार्त्तिकानामिव न ऐकशास्त्र्यं विरुद्धम् । एवं च उभयोर्विरोधे विशेषेण सामान्यस्य सङ्कोचः । यथा 'ज्येष्ठकनिष्ठयोर्वयसि' इत्यनेन 'ञ्नित्यादिर्नित्यम्' इत्यस्य । यथा वा 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' इत्यादिभिः पाणिनीयैः 'फिषोऽन्त उदात्तः' इति शान्तनवस्य बहुव्रीह्यादिभिन्नप्रातिपदिकविषयतया

सङ्कोचः । एवं भूयान् विषय उत्तरत्र व्यक्तीभविष्यति[1] । अत्यन्तविरोधे तु विकल्प एव । क्वचिदन्यलभ्याभिधानमपि कर्तृभेदान्न दोषाय । अत एव " 'उञ्छादीनां च' 'घृतादीनां च', 'वृषादीनां च' 'ग्रामादीनां च', इत्यनयोर्युगलयोरन्तस्य आदेश्च उदात्तत्वविधायिनोरन्यतरेण इष्टसिद्धावपि युगलान्तरप्रणयनं कर्तृभेदान्न दोषाय" इति 'वृषादीनां च' इत्यत्र मनोरमायां स्थितमिति दिक् ॥

## [२९२] ॥ फिषोऽन्त उदात्तः ॥ (फि. १)

'फिट्' इति प्रातिपदिकस्य शान्तनवी संज्ञा । 'त्रिरुच्चैः' । 'नीचैर्देवा निवृश्चत' ॥

## [२९३] ॥ पाटलापालङ्काम्बासागरार्थानाम् ॥ (फि. २)

'अन्त उदात्तः' इत्यापादपरिसमाप्तेरनुवर्तते । अर्थशब्दः प्रत्येकं सम्बध्यते । 'पाटला' । 'सुरूपा' । 'आपालङ्को वृक्षविशेषः' । स्वरकौमुद्यामदादिरयं पठितः । आरग्वधः इति पर्यायः । 'माता यद्वीरम्' । 'सागरः' । 'समुद्र इव हि कामः' । सिन्धुशब्दस्तु आद्युदात्तः । 'स्यन्देः सम्प्रसारणं धश्च' इत्युप्रत्ययविधौ 'नित्' इत्यनुवृत्तेः । 'यः सप्त सिन्धून्' । पूर्वेणैव सिद्धे बाधकबाधनार्थमिदं प्रकरणम् । तत्र आद्ययोः 'लघावन्ते' इति गुरोरुदात्तत्वं प्राप्तम् । सागरार्थेऽप्येवम् । 'उनर्वन्नन्तानाम्' इत्याद्युदात्तत्वम् 'माता' इत्यत्र प्राप्तम् ॥

---

1. व्यक्तीकरिष्यति घ.

## [२९४] ॥ गेहार्थानामस्त्रियाम् ॥ (फि. ३)

'गेहम्'। 'गृहम्'। 'यस्य वै द्वौ पुण्यौ गृहे वसतः'। 'नब्विषयस्य' इति प्राप्तमाद्युदात्तत्वम्। वेश्मन्शब्दे मनिन्नन्तत्वान्नित्स्वरः। 'उतो वेश्मेव दृश्यते'। व्यत्ययो वा। स्त्रियां तु 'यथा शालायै पक्षसी'। अत एव पर्युदासात् अयमाद्युदात्तः॥

## [२९५] ॥ गुदस्य च ॥ (फि. ४)

'गुदस्य मनो मे'। 'अस्त्रियाम्' इत्येव। 'गुदाभिर्ऋतून्'। अत्र 'स्वाङ्गशिटामदन्तानाम्' इत्यादिरुदात्तः। न च टापि कृते अदन्तत्वाभावः; अन्तरङ्गत्वात् ततः पूर्वमेव स्वरप्रवृत्तेः। गुद पुरीषोत्सर्गे। इगुपधलक्षणः कः। 'गुदः'॥

## [२९६] ॥ ध्यपूर्वस्य स्त्रीविषयस्य ॥ (फि. ५)

नित्यस्त्रीलिङ्गस्य शब्दस्य धकारयकारपूर्वो योऽच् अन्त्यः स उदात्तः। 'मेधां म इन्द्रः'। 'गोधा कालका'। 'स्त्रीविषयवर्ण' इति प्राप्ते। 'यस्य छायामृतम्'। 'जायामानीय'। 'माया मायिनाम्'। 'यान्तस्यान्त्यात् पूर्वम्' इति प्राप्ते। स्त्री किम्? 'ते ये बाह्याः'। विषयस्य किम्? 'क्षत्रियासि'। उभयत्र 'यान्तस्यान्त्यात् पूर्वम्' इति स्वरः॥

## [२९७] ॥ खान्तस्याश्मादेः ॥ (फि. ६)

शकारमकारादिभिन्नस्य खान्तस्य अन्त उदात्तः । 'शमितुर्यन्नखेषु' । 'स्वाङ्गशिटाम्' इति प्राप्तम् । 'यदुखा यदुखामुपदधाति' । भाण्डविशेष उखा । तस्य कृत्रिमत्वात् 'खय्युवर्णं कृत्रिमाख्या चेत्' इति प्राप्तम् इत्याहुः । 'सुखम्' । 'दुःखम्' । 'नञ्विषयस्य' इति प्राप्तम् । श्मादेस्तु—'शिखामनु' । अन्तरङ्गत्वाट्टापः पूर्वम् 'स्वाङ्गशिटाम्' इति स्वरः । 'मुखाय स्वाहा' ॥

## [२९८] ॥ हिष्ठवत्सरतिशत्थान्तानाम् ॥ (फि. ७)

हिष्ठान्तानाम्—अतिशयेन बहुलः 'बंहिष्ठः' । इष्ठन्नन्तत्वात् आद्युदात्तत्वं प्राप्तम् । 'यद्वंहिष्ठम्' इत्यादौ व्यत्ययः । वत्सरान्तानाम्—'संवत्सरोऽसि परिवत्सरोऽसि' । अव्ययपूर्वपदप्रकृतिस्वरः प्राप्त इत्याहुः । उणादौ 'अशेः सरः' इति प्रकरणे 'वसेश्च संपूर्वाच्चित्' इति चित्त्वोक्तिसामर्थ्यादपि अत्र अन्तोदात्तत्वं सिद्धम् । वत्सरशब्दोऽपि अन्तोदात्तः पठ्यते 'वत्सरेण नमस्करोमि' । 'वत्सरोऽसि' । 'तस्य ते वसन्तः शिरः' इत्यादौ तद्व्यत्ययात् । 'वसेश्च' इति सरप्रत्ययान्ततया[1] मध्योदात्तत्वौचित्यात् । व्यपदेशिवद्भावेन वत्सरस्यापि वत्सरान्तत्वात् प्रकृतसूत्रेणैव अन्तोदात्तत्वम् इत्यन्ये । त्यन्तानाम्—'सप्तत्यै स्वाहा' । 'अशीत्यै स्वाहा' । 'उदात्तयणः' इति [2]विभक्तेरुदात्तता । शदन्तानाम्—'चत्वारिंशते' । 'पञ्चाशते' । अत्र उभयत्र

1. तस्य क. अधिकम् । 2. विभक्तिरुदात्ता घ. क.

'लघावन्ते' इति प्राप्तम् । थान्तानाम्—'अवभृथः' । 'प्रभृथस्यायोः' । अव्ययपूर्वपदप्रकृतिस्वरोऽत्र बाध्यत इत्याहुः । थाथादिसूत्रेणापि इदं सिद्धम् ॥

## [२९९] ॥ दक्षिणस्य साधौ ॥ (फि. ८)

साधुः—प्रवीणः । अन्यत्र 'लघावन्ते' इति गुरुरुदात्तः । 'दक्षिणः सरळोदारपरच्छन्दानुवर्तिषु' ॥

## [३००] ॥ स्वाङ्गाख्यायामादिर्वा ॥ (फि. ९)

'दक्षिणस्य' इत्येव । पक्षेऽन्त उदात्तः । 'दक्षिणो बाहुः' । आख्यायां किम् ? प्रत्यङ्मुखमासीनस्य सव्यः पाणिर्दक्षिणो भवति ॥

## [३०१] ॥ छन्दसि च ॥ (फि. १०)

दक्षिणस्य पर्यायेण आद्यन्तौ उदात्तौ । अस्वाङ्गार्थमिदम् । 'दक्षिणो युक्तः' । 'दक्षिणा दिक्' । वेदभाष्ये तु 'आ प्रयच्छ दक्षिणादोत सव्यात्' इत्यादौ 'दक्षिणा दिगाख्यायाम्' इति आद्युदात्तत्वविधायि किञ्चित् सूत्रं लिखितम् । तदिदानीन्तनफिट्सूत्रवृत्तिषु न दृष्टम् । 'छन्दसि च' इत्यनेन गतार्थं च । उणादौ 'द्रुदक्षिभ्यामिनन्' इति इनन्नन्तो दक्षिणशब्दो व्युत्पादितः ॥

## [३०२] ॥ कृष्णस्यामृगाख्या चेत् ॥ (फि. ११)

'छन्दसि' 'अन्तः' इत्येव । 'कृष्णानां व्रीहीणाम्' । 'कृष्णो नोनाव' । मृगाख्यायां तु 'कृष्णोऽस्याखरेष्ठः' 'कृष्णा रात्रियै' । 'वर्णानां तणाति' इत्याद्युदात्तत्वम् । लोकेऽप्येवम् ॥

## [३०३] ॥ वा नामधेयस्य ॥ (फि. १२)

'कृष्णस्य' इत्येव । 'कृष्णो नाम कश्चित्' । पक्षे आदिरुदात्तः । उणादौ 'कृषेर्वर्णे' इति नक्प्रत्यये अन्तोदात्तः कृष्णशब्दो व्युत्पादितः ॥

## [३०४] ॥ शुक्लगौरयोरादिः ॥ (फि. १३)

'नामधेयस्य' इति वर्तते । 'वा' इति निवृत्तमित्येके । अनुवर्तत इति युक्तम् ; 'सरो गौरो यथा पिबत्' 'गौरमारण्यम्' 'गौरः पुरुषराजाय' इत्यादौ अन्तोदात्तत्वदर्शनात् इत्यपरे । शुक्लगौरशब्दौ उणादौ 'ऋज्रेन्द्र' इति सूत्रेण[1] रन्नन्तौ निपातितौ । 'उपाद्व्यजजिनम्' इत्यत्र तु 'गुरी उद्यमने इत्यतः पचाद्यचि तदन्तात् प्रज्ञाद्यण् गौरः' इति हरदत्तः ॥

## [३०५] ॥ अङ्गुष्ठोदकबकवशानां छन्दसि ॥ (फि. १४)

'अन्त उदात्तः' इत्येव । 'सर्वास्वङ्गुष्ठम्' । 'स्वाङ्गानामकुर्वादीनाम्' इति द्वितीयस्य उदात्तत्वं प्राप्तम् । 'तस्मादुदकमुच्यते' । कर्दमादित्वात् आद्यद्वितीययोः पर्यायेण उदात्तत्वे प्राप्ते । 'बको वै दाल्भ्यः' । 'प्राणिनां कुपूर्वम्' इति कवर्गात् पूर्वस्य उदात्तत्वे प्राप्ते । 'वशा मेषा अपसृष्टासः' । वशाग्रहणं 'छन्दस्येव' इति नियमार्थम् । तेन लोके अयमाद्युदात्त इत्याहुः । 'सुपि स्थः'

---

1. सूत्रेण घ. नास्ति ।

इति कः । 'अम्बाम्ब' इति षत्वम् । 'अङ्गुष्ठः' । कुन्नन्त उदकशब्दः ; कुन्प्रकरणे 'उदकं च' इत्युणादिसूत्रात् । तत्र 'अयमन्तोदात्तो निपात्यते' इति स्वरमञ्जर्याम् । तच्चिन्त्यम् ॥

## [३०६] ॥ पृष्ठस्य च ॥ (फि. १५)

छन्दसि अन्त उदात्तः । 'पृष्ठे निर्नद्धः' । स्वाङ्गमिति प्राप्तम् ॥

## [३०७] ॥ वा भाषायाम् ॥ (फि. १६)

'पृष्ठस्य' इत्येव । उणादौ 'तिथपृष्ठ' इति थगन्तोऽयं निपातितः । 'मृष्टस्य च वा भाषायाम्' इति केचित् पठन्ति ॥

## [३०८] ॥ अर्जुनस्य तृणाख्यायाम्[1] ॥ (फि. १७)

अन्त उदात्तः । वृक्षविशेषे तु 'उनर्वन्नन्तानाम्' इत्याद्युदात्तः । उणादावपि 'अर्जेर्णिलुक् च' इति उनन्नन्तमर्जुनशब्दं व्युत्पाद्य 'तृणाख्यायां चित्' इति सूत्रेण[2] तृणे चिद्वद्भाव उनन्प्रत्ययस्य[3] उक्तः ॥

---

1. तृणाख्या चेत् ख.
2. सूत्रेण घ. नास्ति ।
3. उनन्प्रत्ययस्य घ. नास्ति ।

## [३०९] ॥ अर्यस्य स्वाम्याख्या चेत् ॥

(फि. १८)

'अग्ने विश्वान्यर्य आ'। 'समर्ये आ विदधे वर्धमानः'। 'अर्यः स्वामिवैश्ययोः'। वैश्ये तु 'यच्छूद्रे यदर्ये' इत्यत्र 'यान्तस्यान्त्यात् पूर्वम्' इत्याद्युदात्तत्वम्[1] 'यतोऽनावः', इति च न; व्यत्ययात् ॥

## [३१०] ॥ आशाया अदिगाख्या चेत् ॥

(फि. १९)

'आशायै जामिम्'। आशा—तृष्णा। दिगाख्यायां तु अत एव ज्ञापकात् आद्युदात्तत्वम्। 'आशानां त्वाशापालेभ्यः' 'तमाशाब्रवीत्' इत्यादौ तु क्वचित् अन्तस्य क्वचित् आदेश्च उदात्तत्वमाशाशब्दे श्रूयते, तत्तु व्यत्ययेन। तत्र हि 'आशाशब्दो लिफ्सावाची' इति वेदभाष्यम्। आङ्पूर्वादशेः पचाद्यच्। 'आशा' ॥

## [३११] ॥ नक्षत्राणामाब्विषयाणाम् ॥

(फि. २०)

'आश्लेषा नक्षत्रम्'। 'अनूराधाः'। 'लघावन्ते' इति प्राप्ते। 'विशाखे' इत्यत्र व्यत्ययः। ज्येष्ठा श्रविष्ठा धनिष्ठाः। इष्ठन्नन्तत्वात् आद्युदात्तत्वे प्राप्ते। 'स एतमिन्द्राय ज्येष्ठायै' 'वसुभ्यः स्वाहा श्रविष्ठाभ्यः' इत्यत्र तु व्यत्ययः। 'विषय-ग्रहणम् आश्लेषासु जाताः 'आश्लेषाः' इत्यत्रापि यथा स्यात्' इति

1. इत्याद्युदात्तः क. ङ.

स्वरकौमुद्याम् । एतेन विषयग्रहणं नित्याबन्तत्वलाभार्थं न भवतीति द्योतितम् । तेन अनूराधाशब्देऽपि अयं स्वरः । स हि पुंलिङ्गोऽपि । 'अनूराधान् हविषा वर्धयन्तः' ॥

## [३१२] ॥ न कपूर्वस्य कृत्तिकाख्या चेत् ॥ (फि. २१)

कवर्गः पूर्व आदिमो वर्णो यस्य आबन्तस्य तस्य न अन्त उदात्त इति केचिद्व्याचख्युः । अन्ये तु—कवर्गपूर्वो य आप् तदन्तस्य इति । आद्यमते 'कृत्तिका नक्षत्रम्' इत्येवोदाहरणम् । द्वितीये तु 'आर्यिका[1]' 'बहुलिका' इत्याद्यपि । कृत्तिका किम् ? 'विशाखाभ्यः[2]' । आख्या किम् ? कृत्तिकासु जाता माणविका[3] 'कृत्तिका' ॥

## [३१३] ॥ घृतादीनां च ॥ (फि. २२)

'तद्घृतमभवत्' । 'रजतꣳहिरण्यम्' । 'नब्विषयस्य' इति प्राप्ते । 'श्वेतमालभेत' । 'वर्णानां तणति' इति प्राप्तम् । आकृतिगणोऽयम् । 'अश्वक्रतुशब्दो[3] घृतादिः' इति 'प्लक्षादिभ्योऽण्' इत्यत्र हरदत्तः ॥

## [३१४] ॥ ज्येष्ठकनिष्ठयोर्वयसि ॥ (फि. २३)

'ज्येष्ठं पुत्रं धनेन' । 'कनिष्ठस्य कानिष्ठिनेयस्य' । वयसि किम् ? 'ज्येष्ठश्च मन्त्रः' । 'कनिष्ठं धनानाम्' ॥

---

1. 'अनूराधिका' घ.
2. 'मघाभ्यः' । घ. ख.
3. माठविका घ.
4. अश्वतुङ्गशब्दः क. श्वेतशब्दः ख.

## [३१५] ॥ बिल्वतिष्ययोः स्वरितो वा ॥

(फि. २४)

पक्षेऽन्त उदात्तः । 'बिल्वं उदतिष्ठत्' । 'तिष्यो नक्षत्रम्' । तुष्यतेः 'अघ्न्यादयश्च' इति यकि इत्वे तिष्यः ॥

॥ इति प्रथमः पादः ॥

---

॥ अथ द्वितीयः पादः ॥

## [३१६] ॥ अथादिः प्राक् शकटेः ॥

(फि. २५)

'शकटिशकट्योः' इत्यतः प्राक् 'आदिः' इत्यधिक्रियते 'उदात्तः' इत्यधिक्रियत[1] एव ॥

## [३१७] ॥ ह्रस्वान्तस्य स्त्रीविषयस्य ॥

(फि. २३)

आदिरुदात्तः[2] । 'दितिं च रास्वादितिमुरुष्य' । 'भूमिर्भूम्ना' । उणादौ 'भुवः कित्' इति मिप्रत्ययान्तो[3] भूमिशब्दो निष्पादितः[4] । 'वेदिश्च भवतः' । 'हनू अधिषवणे' । 'अवनिः' । ह्रस्व इति किम् ? 'नदीनाम्' । स्त्री किम् ? 'अग्निः' । विषयस्य किम् ? 'बहुः' ॥

---

1. अनुवर्तते घ.
2. आदिरुदात्तः घ. नास्ति ।
3. मिप्रत्ययः घ.
4. भूमिशब्दो निष्पादितः घ. नास्ति ।

## [३१८] ॥ नब्विषयस्यानिसन्तस्य ॥

(फि. २७)

नप्—नपुंसकम्[1] । 'धनानि शक्रः' । 'हिरण्यमुपास्य' । 'नब्विषयोऽपि मांसशब्दोऽन्तोदात्तः ; 'मनेर्दीर्घश्च' इति सप्रत्ययान्तत्वात्' इति 'कर्मण्यण्' इत्यत्र कैयटः । 'मांसम्म उपनतिः' । इसन्तस्य तु 'सर्पिरभवत्' । 'इदं हविः' । 'नब्विषयस्य' इति किम् ? वस्त्रम् । 'वस्त्रमस्त्रियाम्" इति स्वरकौमुद्याम् । वस्तुतस्तु 'ऋज्रेन्द्र' इति रन्नन्ततया निपातनात् अद्युदात्त एव वज्रशब्दः[2] । अत एव प्रयोगः—'वज्रो वा आज्यम्' । तस्मात् 'शुक्लानां च कृष्णानां च' इति प्रत्युदाहार्यम् ॥

## [३१९] ॥ तृणधान्यानां च द्व्यषाम् ॥

(फि. २८)

द्व्यचाम् इत्यर्थः । तृणवाचिनाम्—'काशाः' । 'कुशाः' । 'दर्भाणां महत्' । 'यद्दर्भाः' इत्यादौ व्यत्ययः । धान्यानाम्—'तिलाश्च मे' । यत्तु 'तिलशब्दो घृतादिः' इति 'अलाबूतिल' इति कटज्विधौ हरदत्तादिभिरुक्तम्, तत् आपाततः ; उक्तप्रयोगविरोधात् । अत एव 'यवमाषतिलशब्दाः 'तृणधान्यानां च' इत्याद्युदात्ताः' इति 'फलपाकशुषामुपसंख्यानम्' इत्यत्र हरदत्त एवाह । 'दलिभ्यां भः' । 'दर्भः' । 'व्रीहयश्च मे' 'मुद्गाश्च मे' इत्यादौ व्यत्ययः । 'व्रीहिमुद्गशब्दौ घृतादी' इति तु 'बिल्वादिभ्योऽण्' इत्यत्र हरदत्तः । द्व्यषां किम् ? 'गोधूमाश्च मे' । 'लवावन्ते' इत्यूकार उदात्तः ॥

---

1. क्लीबः घ. वज्रशब्दः घ. नास्ति ।

## [३२०] ॥ त्रः संख्यायाः ॥ (फि. २९)

नान्तायाः—'पञ्च वा एते'। 'नव वै'। सप्तन्-अष्टन्शब्दौ घृतादी। 'सप्त ग्राम्याः'। 'अष्टौ हवींषि'। रेफान्तायाः—'चतुष्टय्य आपः'। तयपूङीपोरनुदात्तत्वात् चतुश्शब्दस्वरः। 'चतुष्कपाला भवन्ति'। 'इगन्तकाल' इति पूर्वपदप्रकृतिस्वरः। विभक्तिपरस्य चतुर्शब्दस्य 'चतुरनडुहो-रामुदात्तः', 'चतुरः शसि', 'षट्त्रिचतुर्भ्यो हलादिः' 'झल्युपोत्तमम्' इत्येते स्वराः सतिशिष्टत्वाद्भवन्ति ॥

## [३२१] ॥ स्वाङ्गशिटामदन्तानाम् ॥ (फि. ३०)

स्वाङ्गवाचिनाम्—'ओष्ठाभ्यां स्वाहा' 'मुखाय स्वाहा' इत्यादि। पार्श्वशब्दस्तु अन्तोदात्तः पठ्यते। 'पार्श्वाभ्यां स्वाहा'। स हि 'स्पृशेः श्वण्शुनौ पृ च' इति श्वण्प्रत्ययान्तः। 'जङ्घाभ्यां स्वाहा'। उणादौ 'अच् तस्य जङ्घ च' इत्यचि प्रत्यये अयं व्युत्पन्नः। शिट्—सर्वनाम, तेषां यथा—'सर्वस्याप्त्यै' 'विश्वस्य परिभू'। उभशब्दो घृतादित्वात् अन्तोदात्तः, व्यत्ययाद्वा। 'यदुभौ विमुच्य'। 'उभाभ्यां प्रातः'। उभयशब्दे तु परत्वात् 'यान्तस्यान्त्यात् पूर्वम्' इति स्वरः[1]। 'उभादुदात्तो नित्यम्' इति वा मध्योदात्तत्वम्। 'उभये वा एते'। डतरच्डतमचोश्चित्त्वसामर्थ्यात्तदन्तस्य अन्तोदात्तत्वम्। 'यतरस्मिन्त्संमृज्यात्'। 'अथ कतम एते'। 'यदीतरं यदीतरम्'। उभयशब्दवत् अन्यशब्देऽन्तोदात्तत्वम्[2]। 'यदन्योऽन्यम्'। 'नान्येषां पशूनाम्'। एवमन्यतरशब्देऽपि। 'अन्यतरं वा.

1. स्वरः क. नास्ति। 2. अन्यशब्दः। अदन्तानां किम्? घ.

एते ' । 'स्वत्त्वसमसिमेत्यनुच्चानि' इति वक्ष्यते । एवं पूर्वादयोऽपि उदाहार्याः । अदन्तानां किम् ? 'बाहुभ्याꣳस्वाहा ॥'

## [३२२] ॥ प्राणिनां कुपूर्वम् ॥ (फि॰ ३१)

कवर्गात् पूर्व आदिरुदात्तः । [1]प्राणिवाचिनाम्—'हꣳसो वृकः' । 'शुकेषु मे हरिमाणम्' । कुपूर्वं किम् ? 'वराहोऽयम्' । 'मर्कटः' । 'नकुलः' 'व्याघ्रः' इत्यादौ नैष स्वरो [2]दृश्यते । 'प्राणिनां च कुपूर्वाणाम्' इति क्वचित् पाठः । कवर्गात् ये पूर्वे तन्मध्ये आदिरुदात्तः इति तदर्थमाहुः । 'आमि सर्वनाम्नः' इति सुडभावः सौत्रः ॥

## [३२३] ॥ स्वय्युवर्णं कृत्रिमाख्या चेत् ॥ (फि॰ ३२)

खयि परे पूर्वमुवर्णमुदात्तम् । 'कन्दुकः' ॥

## [३२४] ॥ उनर्वन्नन्तानाम् ॥ (फि॰ ३३.)

उनशब्दान्तानाम्—'वरुणो वै' । 'अर्जुनाय स्वाहा' । ऋवर्णान्तानाम्—'सह स्वस्राम्बिकया' । वन्नन्तानाम्—'पीवानः पुत्राः' ॥

## [३२५] ॥ वर्णानां तणतिनितान्तानाम् ॥ (फि॰ ३४)

तशब्दान्तानाम्—'रोहिताय स्वाहा' । 'एतः[3]' । णशब्दान्तानाम्—'हरिणाः' । उणादौ 'श्यास्त्याहृञ्विभ्य इनच'

1. प्राणिवाचिनाम् घ. नास्ति ।
2. दृश्यते घ. नास्ति ।
3. सहस्रं परस्तादेतमिति घ.

इति हरिणशब्दो व्युत्पन्नः । 'शोणाय स्वाहा' । [1]अरुणशब्दस्तु अन्तोदात्तः 'अरुणया पिङ्गाक्ष्या' 'अरुणाय स्वाहा' इत्यादौ, तत् उणादौ 'अर्तेश्च' इति उनन्प्रत्ययविधौ 'चित्' इति अनुवृत्तिसामर्थ्यात्[2] इति बोध्यम् । तिशब्दान्तानाम्—'शितिककुत्' । 'शितिभसत्' । बहुव्रीहौ पूर्वपदप्रकृतिस्वरः । निशब्दान्तानाम्— 'तेषां पृश्निर्धर्मधुगासीत्' । तकारान्तानाम्—'हरित्' । 'हरितो रथे' 'हरितः सूर्यस्य' इत्यादौ व्यत्ययः । उणादौ 'हसृरोहियोषिभ्यः' इति हरिच्छब्दो व्युत्पन्नः ॥

## [३२६] ॥ ह्रस्वान्तस्य ह्रस्वमनृत्ताच्छील्ये ॥ (फि. ३५)

ह्रस्वान्तस्य आदिभूतमृकारभिन्नं ह्रस्वमुदात्तं स्यात्[3] ताच्छील्ये । 'मुनिः' । अनृत् किम् ? 'नृशंसः' । ताच्छील्ये किम् ? 'जसः[4]' ॥

## [३२७] ॥ अक्षस्यादेवनस्य ॥ (फि. ३६)

'यथाक्षोऽनुपाक्तः' । अदेवनस्य किम् ? 'अक्षैर्मा दीव्यः' । 'पञ्चाक्षान् प्रयच्छति' । सप्रत्ययान्तोऽक्षशब्दः ; 'अशेर्देवने' इत्युणादिसूत्रात् ॥

## [३२८] ॥ अर्धस्यासमद्योतने ॥ (फि. ३७)

'अर्धो ग्रामस्य' । 'तस्माद्दक्षिणोऽर्धः' । समांशवाची तु अन्तोदात्त एव । 'अर्धं पिप्पल्याः' । 'अर्धं नार्धं बर्हिष-

---

1. अरुणस्य त्वन्तोदात्तत्वम् दृश्यते क. अनुवृत्तेः घ.
3. स्यात् घ. नास्ति ।
4. जडः ङ.

स्तृणीयात्' । 'पुंस्यर्धोऽर्धं समेंऽशके' । अर्धो वा एतस्य । 'अर्धो वा एष आत्मनः' इत्यादौ समांशवाचित्वे व्यत्ययेन पुंस्त्वम्, असमांशवाचित्वे व्यत्ययेन अन्तोदात्तत्वमिति बोध्यम् । ऋधेः पचाद्यचि अर्धः ॥

## [३२९] ॥ पीतद्र्वर्थानाम् ॥ (फि. ३८)

पीतद्रुः सरलो देवदारुः ॥

## [३३०] ॥ ग्रामादीनां च ॥ (फि. ३९)

'ग्रामे मनसा' । 'पुरुषस्य विद्म' । 'शूरो वा पृत्सु' । आकृतिगणोऽयम् ॥

## [३३१] ॥ स्फिगन्तस्योपेमयनामधेयस्य ॥ (फि. ४०)

स्फिगिति लुपः संज्ञा । 'लुबन्तस्य' इत्येव क्वचित् पाठः । चञ्चेव 'चञ्चा' । 'इवे प्रतिकृतौ' इति कनो 'लुम्मनुष्ये' इति लुप् । 'रौद्रेणानीकेन' । "रौद्रगण इव क्रूरो रौद्रः । 'संज्ञायाम्' इति कनः 'देवपथादिभ्यश्च' इति लुप् । 'संज्ञाया-मुपमानम्' इति 'स्फिगन्तस्य' इति वा आद्युदात्तत्वम्" इति वेदभाष्यम् ॥

## [३३२] ॥ न वृक्षपर्वतविशेषव्याघ्रसिंहमहिषाणाम् ॥ (फि. ४१)

पूर्वसूत्रप्राप्तं निषिध्यते । ताल इव 'तालः' । एवं 'मेरुः' 'व्याघ्रः' 'सिंहः' 'महिषः' । 'न व्याघ्रमहिषसिंहवृक्षपर्वतानाम्' इति पाठान्तरम् ॥

## [३३३] ॥ राजविशेषस्य यमन्वाख्या चेत् ॥
(फि. ४२)

वृद्धः शब्दो यमन्वा इत्याहुः । 'आङ्गः' उदाहरणम् । 'अङ्गाः' प्रत्युदाहरणम् । 'यमन्वा चेत्' इत्येव क्वचित् पाठः । केचित् 'राजशब्दस्य यमन्वा चेत्' इति पठित्वा 'स्फिगन्त' इति सूत्रमनुवर्त्य आङ्ग इवायमाङ्गः, सौह्मः इत्युदाहरन्ति ॥

## [३३४] ॥ लघावन्ते द्वयोश्च बह्वषो गुरुः ॥
(फि. ४३)

अन्ते लघौ द्वयोश्च लघ्वोः सतोः बह्वच्कस्य गुरुरुदात्तः । 'कल्याणः' । "अत्र आदिग्रहणानुवृत्तावपि गुरूणां मध्ये य आदिरिति व्याख्यानात् वृषाकपिशब्दे व्यपदेशिवद्भावेन आदिमे आकारेऽपि सिद्धः स्वरः । अत एव 'वृषाकप्यग्नि' इति सूत्रे वृत्त्यादिग्रन्था उपपद्यन्ते" इति कौस्तुभे स्थितम् । 'वृषाकप्यग्नि' इति ङीब्विधौ हि "वृषाकपिशब्दः 'लघावन्ते' इति मध्योदात्तः । तत्र ऐकारस्य उदात्तविधेः प्रयोजनम् । अन्यथा 'वृषाकपायी' इत्यत्र उपोत्तमस्य उदात्तत्वासिद्धेः । अग्न्यादिशब्दास्तु अन्तोदात्ताः । तेषु नोदात्तविधेः प्रयोजनम् । तं विनापि 'अग्नायी' 'कुसितायी' इत्यादौ स्थानिवद्भावेन उपोत्तमस्य उदात्तत्वसिद्धेः" इति वृत्त्यादौ स्थितम् । मनोरमायां तु "अत्र सूत्रे आदिग्रहणं न संबध्यत एव । सारङ्गकल्माषशब्दौ 'लघावन्ते' इति मध्योदात्तौ इति 'अन्यतो ङीष्' इति सूत्रे हरदत्तोक्तेः । गुरूणां मध्ये य अदिरिति व्याख्यानेऽपि तदसिद्धेः" इत्युक्तम् । युक्तं चैतत् ; 'सारङ्गास्त्रयः' । 'कल्माषग्रीवः' इत्यादौ मध्योदात्तत्वश्रवणात् । 'वृषाकपेरङ्कृते' इत्यादावपि इष्टसिद्धेश्च । एवं च अनेकगुरुसत्त्वे पर्यायेण गुरूणामुदात्तत्वमिति बोध्यम् ॥

## [३३५] ॥ स्त्रीविषयवर्णाक्षुपूर्वाणाम् ॥

(फि. ४४)

'वर्णानामक्षुपूर्वाणाम्' इति [1]क्वाचित्कोऽपपाठः । स्त्रीविषये—'मल्लिका' । 'पिपीलिकाः प्रशादेन' इत्यत्र व्यत्ययः । वर्ण—'श्वेनी[2]' 'हरिणी' इति कौस्तुभादौ । 'हरिणी सती' । स्वरकौमुद्यां तु 'पिशङ्गः' इत्युदाहृतम् । 'पिशङ्गास्त्रयः' इत्यादौ व्यत्ययः । अक्षुशब्दात् पूर्वोऽस्ति येषां ते अक्षुपूर्वाः । 'तरक्षुः' । 'तरक्षुः कृष्णःश्वा' इत्यत्र व्यत्ययः ॥

## [३३६] ॥ शकुनीनां च लघु पूर्वम् ॥

(फि. ४५)

पूर्वं लघु उदात्तम् । 'कुक्कुटः' 'तित्तिरिः' इत्याद्युदाहरन्ति । 'स तित्तिरिः' इत्यत्र अन्तोदात्तत्वैव[3] दृश्यते । 'तिरतेः सन्वत्तुक्चाभ्यासस्य' इति किप्रत्ययान्तस्तित्तिरिशब्दः[4] प्रत्ययस्वरेण अन्तोदात्तः । सन्वद्भावेन आद्युदात्तत्वं तु न भवति ; बाहुलकात् इति 'अनुदात्तादेरञ्' इत्यादौ हरदत्तः ॥

## [३३७] ॥ नर्तुप्राण्याख्यायाम् ॥ (फि. ४६)

येन केनचित् प्राप्तमाद्युदात्तत्वं निषिध्यते इत्याहुः । 'वसन्तेनर्तुना' । '[5]कृकलासः शकुनिः' । 'लघावन्ते' इति प्राप्तम् । " 'लघावन्ते' इति प्राप्तस्यैव[6] अयं निषेधः" इति क्वचित्[7] फिट्सूत्रवृत्तौ ॥

---

1. क्वचित् पाठः घ.
2. श्वेतहरिणी क. घ.
3. अन्तोदात्ततयैव श्रूयते घ.
4. किप्रत्यये तित्तिरिशब्दः घ.
5. किलासः क.
6. प्राप्तस्य क. नास्ति ।
7. क्वचित् घ. नास्ति ।

## [३३८] ॥ धान्यानां च वृद्धक्षान्तानाम् ॥

(फि. ४७)

कान्तानाम्—'श्यामाकाः' । षान्तानाम्—'माषाः' इति कौस्तुभादौ सर्वत्रोदाहृतम् । तच्चिन्त्यम् ; 'उशीरदाशेर' इत्यादितार्तीयसूत्रेण 'तृणधान्यानां च द्व्यषाम्' इत्यनेन च द्वयोः स्वरस्य सिद्धत्वात् । सर्वैरपि अनयोस्तत्र उदाहृतत्वाच्च । तस्मादन्यदिह उदाहार्यम् ॥

## [३३९] ॥ जनपदशब्दानामषन्तानाम् ॥

(फि. ४८)

'केकयाः' । अषन्तानां किम् ? 'दरत्' ॥

## [३४०] ॥ हयादीनामसंयुक्तलान्तानामन्तः पूर्वं वा ॥ (फि. ४९)

'हय्' इति हलः संज्ञा । हलादीनामसंयुक्तलान्तानामादिरन्तस्तत्पूर्वं वोदात्तः । 'पललम्' । 'शललम्' । असंयुक्तेति किम् ? 'मल्लः' ॥

## [३४१] ॥ इगन्तानां च द्व्यषाम् ॥

(फि. ५०)

आदिरुदात्तः । 'कृषिः' इति कौस्तुभादौ । अत्र सूत्रे स्वरकौमुद्यामप्येवम् । 'कुरुगार्हपत' इत्यत्र [1]स्वरमञ्जरीस्वरकौमुद्योस्तु 'जनपदशब्दानाम्' 'अन्तः पूर्वं वा' इति च अनुवर्त्य सूत्रं व्याख्यातम् । 'काशयः' । 'चेदयः' । 'कुरवः' इत्युदाहृतम् ॥

॥ इति फिट्सूत्रेषु द्वितीयः पादः ॥

1. पदमञ्जरी- घ.

## ॥ अथ फिट्सूत्रेषु तृतीयः पादः ॥

### [३४२] ॥ अथ द्वितीयं प्रागीषात् ॥
(फि॰ ५१)

'ईषान्तस्य हयादेः' इत्यतः प्राग्द्वितीयाधिकारः ॥

### [३४३] ॥ त्र्यषां प्राङ्मकरात् ॥ (फि॰ ५२)

'मकरवरूथ' इत्यतः प्राक् 'त्र्यषाम्' इत्यधिकारः ॥

### [३४४] ॥ स्वाङ्गानामकुर्वादीनाम् ॥ (फि॰ ५३)

कवर्गरेफवकारादीनि वर्जयित्वा त्र्यचां स्वाङ्गवाचिनां द्वितीयमुदात्तम् । 'ललाटाय स्वाहा' । 'तस्माद्रराटे' । कपिलकादिः । 'त्रिंशदस्या जघनम्' । उणादौ 'हन्तेः शरीरावयवे द्वे च' इति सूत्रेण अच्प्रत्ययान्तोऽयम्[1] । 'उपस्थ इन्द्रं स्थविरम्' उपस्थशब्द उत्सङ्गवाची । अत एव 'अदित्यास्त्वोपस्थे सादयामि' इत्यत्र 'स्वाङ्गानामकुर्वादीनाम्' इति द्वितीयमुदात्तम्' इति वेदभाष्यम् । 'विश्वेषां देवानां जठरम्' । 'समुद्र उदरम्' । उणादौ[2] 'उदि दृणातेरजलौ पूर्वपदान्तलोपश्च' इत्युदरशब्दो व्युत्पन्नः । तत्र अचि अन्तोदात्तत्वमपि स्थितम् । कुर्वादीनां तु—'कपोलः' 'कीकसाभ्यः स्वाहा' । 'रसना' । 'वदनम्' । प्रत्युदाहरणे 'स्वाङ्गशिटाम्' इत्यादिरुदात्तः । कपोलशब्दस्तु उणादौ ओलजन्तो व्युत्पादितः । 'कपिगण्डिगण्डिकटिपटिभ्य ओलच्' ॥

1. व्युत्पन्नः क. अधिकम् । 2. उणादौ क. नास्ति ।

## [३४५] ॥ मादीनां च ॥ (फि. ५४)

त्र्यचां मकारादीनां द्वितीयमुदात्तम् । 'मलयः' । उणादौ 'वलिमलितनिभ्यः कयन्' । 'मलयः' नित्स्वरेण आद्युदात्त इति स्थितम् । मकरशब्दे तु 'मकरवरूथ' इति आदेर्द्वितीयस्य वा उदात्तत्वम् ; विशेषविधानात् ॥

## [३४६] ॥ सादीनां शाकानाम् ॥ (फि. ५५)

'सादीनाम्' इति दन्त्योष्मादिपदम् । 'सुवर्चला[1]' । तालव्योष्मादीत्यन्ये । 'शीतला' । 'शतपुष्पा' ॥

## [३४७] ॥ पान्तानां गुर्वादीनाम् ॥ (फि. ५६)

'कश्यपः' । 'कच्छपः' । 'आतपः' । 'पादपः' । 'आतपाय स्वाहा' इत्यत्र व्यत्ययः । पान्तानां किम् ? 'गर्दभे न्यमार्ट्' । लघ्वादीनां तु—'कुणपः' । 'एष ह वै कुणपमत्ति' इत्यत्र 'छन्दसि च' इति द्वितीयमुदात्तम् । 'सम्प्रोदश्च कटच्' इत्यत्र कैयटः—"सर्षपशब्दस्य 'सादीनां शाकानाम्' इत्याद्युदात्तत्वे प्राप्ते परत्वात् 'अथ द्वितीयं प्रागीषात्' इत्यनुवर्तमाने 'पान्तानां गुर्वादीनाम्' इति मध्योदात्तत्वम्" इति । 'सादीनां शाकानाम्' इत्यस्यापि 'अथ द्वितीयम्' इत्यधिकार एव दर्शनाच्चिन्त्यमेतत् ॥

---

1. सुवर्चाः लता । घ.

## [३४८] ॥ युतान्यण्यन्तानाम् ॥ (फि. ५७)

युतान्तानाम्—'अयुतं च नियुतं च'। अन्यन्तानाम्—'धमनिः'। 'साशनिरभवत्'। अण्यन्तानाम्—'यदरण्योः समारूढः'। 'तरणिर्भ्राजमानः'॥

## [३४९] ॥ मकरवरूथपारेवतवितस्तिक्ष्वाजिद्राक्षाकालोमाकाष्ठाकाशीनामादिर्वा ॥[1] (फि. ५८)

पक्षे द्वितीयमुदात्तम्। 'नाक्रो मकरः'। 'वरूथं पुरस्ताद्वरूथीयः'। 'तं काले काले'। 'काष्ठां गच्छत'। [2]वकुलकलापोष्ट्रशब्दा अपि क्वचित् पठ्यन्ते ॥

## [३५०] ॥ छन्दसि च ॥ (फि. ५९)

लक्ष्यानुसारेण आदिर्द्वितीयो वा उदात्तः। 'नासिकाभ्याᳪस्वाहा'। 'स्वाङ्गानामकुर्वादीनाम्' इति द्वितीयस्य उदात्तत्वं प्राप्तम् ॥

## [३५१] ॥ कर्दमादीनां च ॥ (फि. ६०)

आदिर्द्वितीयो वा उदात्तः। 'कर्दमः'। 'कुलटा'। 'उदकम्'। 'कलिकर्द्योरमः'। 'कलमः'। 'कर्दमः'। इत्युणादौ ॥

---

1. द्राक्षाकालोमकल्माषकाशीयानामादिर्वा क. 2. वकुट- ङ.

## [३५२] ॥ सुगन्धितेजनस्य ते वा ॥ (फि. ६१)

अस्य आदिर्द्वितीयस्तेशब्दश्च इति त्रयः पर्यायेण उदात्ताः । 'ता॒सु॑गन्धितेजने' । 'सुगन्धितेजनस्य च' इति केचित् पठन्ति । आदिर्द्वितीयो वा उदात्तः इति तस्यार्थः ॥

## [३५३] ॥ नपः फलान्तानाम् ॥ (फि. ६२)

नपुंसकानां फलान्तानाम् आदिर्द्वितीयो वा उदात्तः । 'राजादनफलम्' । केचित्तु 'लो फो नपः' इति सूत्रं पठन्तो नपुंसकस्य फकारात् परो लशब्द उदात्त इति व्याचक्षाणाः 'फलण्डुफलम्[1]' इत्युदाहरन्ति ॥

## [३५४] ॥ यान्तस्यान्त्यात् पूर्वम् ॥ (फि. ६३)

'कुलायः' । 'ग॒व॒यमा॑र॒ण्यम्' इत्यत्र व्यत्ययः ॥

## [३५५] ॥ आन्तस्य नालघुनी ॥ (फि. ६४)

नाशब्दो लघु च उदात्ते स्याताम् । 'सनाथा सभा' । केचित्तु 'आन्तस्य नालघुनि' इति ह्रस्वान्तं पठन्तः, द्वौ नञौ प्रकृतमर्थं बोधयतः[2], आकारान्तस्य अन्त्यात् पूर्वमुदात्तं लघ्वेव चेत्तद्भवतीति व्याख्याय 'सुधा' 'मुधा' इत्युदाहरन्ति ॥

---

1. फलम्, मधुफलम् क. 2. सूचयतः घ, ङ.

[३५६] ॥ शिंशुमारोदुम्बरबलीवर्दोष्ट्रार-
पुरूरवसां च ॥ (फि. ६५)

अन्त्यात् पूर्वं द्वितीयं वा उदात्तम् । 'सिन्धोः शिंशुमारः'। 'शिंशुमारस्त८ ह य एवम्' इत्यत्र व्यत्ययेन आद्युदात्तः । शिंशुमारशब्द एवायम्, एकदेशविकृतस्य अनन्यत्वात् । 'ऊर्वा उदुम्बरः' 'पुरूरवा घृतेन' ॥

[३५७] ॥ साङ्काश्यकाम्पिल्यनासिक्यदार्वाघाटानाम् ॥
(फि. ६६)

'एषामन्त्यात् पूर्वं द्वितीयं वा उदात्तम्' इति स्वरकौमुद्यां व्याख्यातम् । कौस्तुभादावपि एवम् । षष्ठे 'नस् नासिकाया यत्तस्क्षुद्रेषु' इत्यत्र 'यति वर्णनगरयोर्न' इति वार्त्तिकं नारम्भणीयम्[1] ; परिमुखादिपाठात् ञ्ये 'नासिक्यो वर्णः' इति सिद्धेः । संकाशादिपाठात् ण्ये 'नासिक्यं नगरम्' इति सिद्धेः—इति भाष्ये स्थितम् । तत्र यति सति तित्स्वरेण अन्तस्वरितत्वम्, ञ्ये आद्युदात्तत्वम्, ण्ये तु अन्तोदात्तत्वम्, इति स्वरभेदमाशङ्क्य कैयटादिभिः परिहृतम् 'फिषि राजन्यसाङ्काश्यकाम्पिल्यनासिक्यदार्वाघाटानामादिर्वा अन्तो वा' इति प्रतिपदं स्वरविधेराद्यन्तोदात्तत्वाभ्यामेव पर्यायेण भाव्यमिति न स्वरभेदः—इति । प्रकृतसूत्रस्यैव पाठान्तरमिदं कैयटादिभिः क्वचिद्दृष्टम् इति कल्प्यम् । तिल्यशिक्यसूत्रेऽपि राजन्यशब्दपाठात् तत्सूत्रविधेयस्वरितोऽनेन विकल्प्यते इति च कल्प्यम् । अत्र मते दार्वाघाटशब्दे अन्तोदात्तत्वं सिद्धम् ॥

1. न कर्तव्यम् क. ङ.

## [३५८] ॥ ईषान्तस्य हयादेरादिर्वा ॥ (फि. ६७)

पक्षेऽन्त उदात्तः । 'हलीषा' । 'लाङ्गलीषा' । केचित्तु ईषशब्दान्तस्य इति व्याख्याय 'करीषम्' 'शिरीषम्' इत्युदाहरन्ति ॥

## [३५९] ॥ उशीरदाशेरकपालपलालशैवालश्यामाक-शरीरशरावहृदयहिरण्यारण्यापत्यदेवराणाम् ॥ (फि. ६८)

एषामादिरुदात्तः । 'श्यामाकाश्च मे' इत्यत्र व्यत्ययेन मध्योदात्तत्वम् । 'शरीरं वा एतदग्नेः' । 'हृदयस्याग्रेऽवद्यति' । 'हिरण्यमुपास्य' । 'यामरण्ये' । उशीरशरावपलालग्रहणं 'लघावन्ते' इत्यस्य बाधनाय । शरीरदाशेरादीनामपि मध्यगुरूणाम् 'लघावन्ते' इत्यत्र आदिग्रहणासम्बन्धात् मध्योदात्तता पक्षे मा भूदिति अत्र ग्रहणम्[1] । हृदयग्रहणम् 'स्वाङ्गानामकुर्वादीनाम्' इत्येतद्बाधितुम् । देवरग्रहणम् 'नर्तुप्राण्याख्यायाम्' इति 'लघावन्ते' इत्यस्य निषेधे प्राप्ते ॥

## [३६०] ॥ महिष्यषाढयोर्जायेष्टकाख्या चेत् ॥ (फि. ६९)

आदिरुदात्तः । उणादौ 'अविमह्योष्टिषच्' इति टिषचि महिषीशब्दे अन्तोदात्तत्वं प्राप्तम् । सहेः क्ते 'साढः' । 'साढ्यै साढ्वासाढेति निगमे' इति निपातितः । ततो नञ्तत्पुरुषः । न सहन्ते अषाढाः । तथा च ब्राह्मणम्—'यन्नासहन्त' । 'तदषाढाः' इति । तत्राप्यव्ययपूर्वपदप्रकृतिस्वरेण प्राप्तमाद्युदात्त-

1. अत्र ग्रहणम् ख. नास्ति ।

त्वम् इष्टकाख्यायामेव इति नियम्यते । तेन अन्यत्र समासान्तोदात्तत्वमेव । 'भूरिति महिषी' । 'अषाढासि सहमाना' जायेत्यादि किम्? 'सिंहीरसि महिषीरसि' 'अषाढा नक्षत्रम्' 'यासामषाढाः' ॥

॥ इति फिट्सूत्रेषु तृतीयः पादः ॥

---

॥ अथ फिट्सूत्रेषु चतुर्थः पादः ॥

## [३६१] ॥ शकटिशकट्योरक्षरमक्षरम्पर्यायेण ॥
(फि. ७०)

अनयोस्त्रयोऽप्यचः पर्यायेणोदात्ताः । द्वितीय ईदन्तः 'शकटीरिव सर्जति' ॥

## [३६२] ॥ गोष्ठजस्य ब्राह्मणनामधेयस्य ॥
(फि. ७१)

अक्षरमक्षरं पर्यायेणोदात्तम् । ब्राह्मणादन्यत्र तु कृदुत्तर-पदप्रकृतिस्वरेण अन्तोदात्तः । गोष्ठजः शूद्रः[1] ॥

## [३६३] ॥ पारावतस्योपोत्तमवर्जम् ॥ (फि. ७२)

अस्य उपोत्तमवर्जमचः क्रमेण उदात्ताः ॥

---

1. अन्यतरस्यां वा यदि ते ... क. ... अधिकम् ।

[३६४] ॥ धूम्रजानुमुञ्जकेशकालवालस्थालीपाकाना-मधूजलस्थानाम् ॥ (फि. ७३)

एषां चतुर्णां धूम्रभृतींश्चतुरो वर्जयित्वा शिष्टा अचः क्रमेण उदात्ताः । 'धूम्रजानुः' । 'मुञ्जकेशः' । 'कालवालः' । 'स्थालीपाकः' । 'काकवालः[1]' इति पाठान्तरम् । अन्ये तु 'अधूमुकास्थानाम्' इति पठित्वा आदिवर्जमितरे अच उदात्ताः इति व्याचक्षते । आस्मन् पक्षे 'आदिवर्जम्' इत्येव सुवचम् 'उपोत्तमवर्जम्' इतिवत् ॥

[३६५] ॥ कपिकेशहरिकेशयोश्छन्दसि ॥ (फि. ७४)

'अक्षरमक्षरं पर्यायेण' 'उदात्तम्' इत्येव । 'हरिकेशायोपवीतिने' । केचित्तु 'अच्छन्दसि' इति पठन्ति । पाणिनीये तु हरिकेशशब्दो निरुदकादिषु पठितः ॥

[३६६] ॥ न्यङ्स्वरौ स्वरितौ ॥ (फि. ७५)

'न्यङ्ङग्निः' । 'स्वरेति' । 'स्वरादिनिपातम्' इत्यव्ययं स्वरशब्दः । निपूर्वादञ्चेः क्विनि न्यङ् । यत्तु 'सुवरभि विख्यैषम्' इत्यत्र 'सुक्रतुः कृपा सुवः' इत्यत्र च वेदभाष्यम्— सुष्ठु श्रेयांसि गमयति 'सुवः' । अतेः 'अन्येभ्योऽपि दृश्यते' इति विच् । तन्वादित्वात् उवङादेशः । 'न्यङ्स्वरौ स्वरितौ' इति स्वरितत्वम् इति, तच्चिन्त्यम् ; रूपभेदेन अस्य सूत्रस्य तत्र अप्रवृत्तेः । प्रवृत्तौ वा 'अनुदात्तं पदम्' इत्यादेरनुदात्तत्वप्रसङ्गात्,

1. 'कालपाल:' घ.

उदात्तस्वरितयोः समावेशायोगादिति । 'सुवरित्याह' इत्यादौ अन्त्यस्य सन्नतरत्वविरोधाच्च । अनुदात्तस्यैव सन्नतरविधानात् । तस्मात् अव्ययपूर्वपदप्रकृतिस्वरेण दासीभारादित्वाद्वा[1] सुशब्दस्य उदात्तत्वे ततः परस्य 'अनुदात्तं पदम्' इत्यनुदात्तस्य 'उदात्तादनुदात्तस्य' इति स्वरितत्वं बोध्यम् ॥

## [३६७] ॥ न्यर्बुदव्यल्कशयोरादिः ॥ (फि. ७६)

'स्वरितः' इत्येव । 'न्यर्बुदं च' । 'पाकदूर्वा व्यल्कशा' ॥

## [३६८] ॥ तिल्यशिक्यमर्त्यकाश्मर्यधान्यकन्या-राजन्यमनुष्याणामन्तः ॥ (फि. ७७)

स्वरितः स्यात् । तिलानां भवनं क्षेत्रम् 'तिल्यम्' । 'विभाषा तिलमाष' इति यत् । 'यतोऽनावः' इति प्राप्तम् । 'स्रंसेः शिः कुट् किच्च' इति यति 'शिक्यम्' । 'मतजनहलात्' इति यति 'मर्त्यम्' । 'दधातेर्धन्नुट् च' । 'धान्यम्' । अघ्न्यादियगन्तः कन्याशब्दः । राजन्यमनुष्ययोस्तु यदन्तयोस्तित्स्वरेण सिद्धः स्वरितः । 'शिक्यमभ्युपदधाति' । 'मर्त्यमन्ववास्यति' । केचित् अमुम् अत्र न पठन्ति । 'काश्मर्यमपश्यन्' । 'धान्यमसि' । 'कन्येव तुन्ना' । 'राजन्यो वज्रस्य' । 'मनुष्याणामन्नम्' ॥

## [३६९] ॥ बिल्वबर्स्ववीर्याणि छन्दसि ॥ (फि. ७८)

अन्तस्वरितानि । 'ततो बिल्वः' । 'मृदम्बर्स्वैभिः' । वीरयतेः अचो यति 'वीर्यम्' । 'वीर्यं वृङ्क्ते' । 'बिल्वतिष्य[2]' इति केचित् पठन्ति ॥

---

1. सुचरशब्दे का. आधिक्य । 2. 'बिल्वभक्ष्य' क. ङ.

## [३७०] ॥ त्वत्त्वसमसिमेत्यनुच्चानि ॥ ( फि. ७९ )

अनुदात्ता इत्यर्थः । साहचर्यात् समस्य सर्वनाम्नो ग्रहणम् । ‘नभन्तामन्यके समे’ । [1]समेत्यतुल्यपर्याये । तुल्यपर्याये तु फिट्स्वरः । ‘यत्सर्वतः समं प्रत्येव तिष्ठति’ । संवत्सरपर्यायस्तु ‘स्त्रीविषय’ इत्याद्युदात्तः । ‘शतꣳ समाः’ । ‘सिमाद एनत्वत्समेत्यनुच्चानि’ इति पाठान्तरम् । अत्र पक्षे ‘अथो या अमूरितराः[2]’ इत्यत्र व्यत्ययः । ‘अथो एनं प्रथमेनैव’ ॥

## [३७१] ॥ सिमस्याथर्वणेऽन्त उदात्तः ॥ ( फि. ८० )

‘आथर्वणे’ इति प्रायिकम्, तत्र दृष्टस्य इत्येवम्परं वा । तेन ‘वासस्तनुते सिमस्मै’ इत्यत्रापि अन्तोदात्तत्वम् इत्याहुः ॥

## [३७२] ॥ निपाता आद्युदात्ताः ॥ ( फि. ८१ )

‘अस्तु श्रौषडिति’ । ‘स्वाहा यज्ञम्’ ॥

## [३७३] ॥ उपसर्गाश्चाभिवर्जम् ॥ ( फि. ८२ )

“अभिशब्द एवादिषु पठितव्यः । तेन ‘अभि भ्रातृव्यान्’ इत्यादौ अन्तोदात्तत्वं तस्य सिध्यति । ‘परास्य भ्रातृव्यः’ इत्यादौ उपसर्गाणां निपातत्वादेव आद्युदात्तत्वं सिद्धम् । एवं च सूत्रमिदं मास्तु” इति मनोरमायाम् ॥

---

1. समेत्यतुल्यपर्याये ङ. नास्ति ।
2. या अमूः’ इत्यादौ व्यत्ययात् अदसोऽन्तोदात्तत्वम् क. ख.

## [३७४] ॥ एवादीनामन्तः ॥ (फि. ८३)

निपाताद्युदात्तत्वापवादः । 'एवमादीनाम्' इति पाठान्तरम् । 'स एव'। 'य एवम्'। 'कुवित्सु नः' । षष्ठे 'सहस्य सः' इति प्रकरणे सहशब्द आद्युदात्त इति प्राञ्चः । कौस्तुभादौ "सहशब्द[1] एवादिपाठात् अन्तोदात्तः । अत एव 'ते मित्रसूरिभिः सह' इत्यादौ तस्य अन्तोदात्तत्वं दृश्यते । प्राचां तु वचनं चिन्त्यम्" इत्युक्तम् । स्वरकौमुद्यां तु 'सहशब्दस्य एवादिष्वपाठात् अयुक्तमिदम् । वेदे तु व्यत्ययात् अन्तोदात्तत्वम्' इति स्थितम् । तैत्तिरीयके 'सह प्रथमौ गृह्येते' इत्यादौ बहुशोऽन्तोदात्त एवायं दृश्यते । 'सह वै देवानाम्' इत्यत्र आद्युदात्तोऽपि ॥

## [३७५] ॥ वावादीनामुभावुदात्तौ ॥ (फि. ८४.)

'वावैतदाह' । उभौग्रहणम् 'अनुदात्तं पदम्' इत्यस्य[2] बाधनायेत्याहुः । 'वावादीनामुभौ' इत्यन्तमेव सूत्रम् इति केचित् ॥

## [३७६] ॥ चादयोऽनुदात्ताः ॥ (फि. ८५.)

'वाजश्च मे प्रसवश्च मे' 'न ह स्म वै' इत्यादि ॥

## [३७७] ॥ यथेति पादान्ते ॥ (फि. ८६)

अनुदात्तः[3] । तन्नेमिमृभवो यथा' । 'पुरा जीवगृभो यथा' । पादान्त इति[4] किम् ? 'यथा नो अदितिः' ।

---

1. -शब्दः क. नास्ति ।
2. इति प्रवृत्त्यभावाय घ.
3. अनुदात्तम् घ.
4. इति घ. नास्ति ।

'[1]इन्द्र क्रतुं न आभर पिता पुत्रेभ्यो यथा' इत्यत्र व्यत्ययेन आद्युदात्तता । यत्तु स्वरमञ्जर्यां थालन्तत्वात् यथाशब्दे लित्स्वरमाशङ्क्य अध्यापकप्रसिद्धिमात्रेण अस्य अत्र सर्वानुदात्ततेति, तत् एतत्सूत्रापरिज्ञानात् ॥

## [ ३७८ ] ॥ प्रकारादिद्विरुक्तौ परस्यान्त उदात्तः ॥ ( फि. ८७ )

'प्रकारे गुणवचनस्य' इत्यारभ्य या द्विरुक्तिर्विहिता, तत्र परभागस्य[2] अन्त उदात्तः । 'पटुपटुः[3]' । 'द्वन्द्वमन्यासु' । 'द्वन्द्वं रहस्य[4]' इति सूत्रेण अत्र द्विर्वचनादिकं निपातितम् । 'वयं यथायथम्' । 'यथा स्वे यथायथम्' इति निपात्यते । पाणिनीयेऽपि 'कर्मधारयवदुत्तरेषु' इत्यधिकारात् कर्मधारयवद्भावेन[5] समासान्तोदात्तत्वप्रवृत्तेः सिद्धमत्र अन्तोदात्तत्वम् ॥

## [ ३७९ ] ॥ शेषं सर्वमनुदात्तम् ॥ ( फि. ८८ )

शेषं[6]—द्विरुक्तस्य परमित्यर्थः । 'प्रप्रायम्' । 'दिवे दिवे' । 'अनुदात्तं च' इति सूत्रेण पाणिनीयेऽपि[7] अत्र[8] अनुदात्तत्वं सिद्धम् ॥

॥ इति फिट्सूत्रेषु चतुर्थः पादः ॥

---

1. इन्द्र.....आद्युदात्तता क. नास्ति ।
2. परस्य भागस्य घ.
3. पटुः पटुः घ.
4. रहस्यमर्यादेति द्विर्वचन- घ.
5. यवत्त्वेन घ.
6. शेषमित्यादि क. ङ.
7. पाणिनीयेनापि घ.
8. अत्र घ. नास्ति ।

## ॥ अथ सर्वानुदात्तप्रकरणम् ॥

अथ सर्वानुदात्तत्वं सुबन्तपदसंश्रयम्[1] ।
सम्प्राप्तमानुपूर्व्येण सप्रपञ्चं निरूप्यते ॥

### [३८०] ॥ इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ ॥
(2—4—32)

किञ्चित् कार्यं विधातुमुपात्तस्य कार्यान्तरं विधातुं पुनरुपादानमन्वादेशः । तद्विषयस्य इदमस्तृतीयादौ विभक्तौ परतः[2] अशादेशो भवति, स च अनुदात्तः । 'आभ्याम्' 'एभिः' इत्युदाहरणम् । यद्यपि 'हलि लोपः' इति इदम[3] इद्रूपस्य लोपे त्यदाद्यत्वादौ च अनन्वादेश इव [4]अशादेशं विनैव 'आभ्याम्' इत्यादिरूपं सिद्धम्, अजादौ [5]तु टायामोसि च 'द्वितीयाटौस्स्वेनः' इत्येनादेशेन अशादेशो बाधितः ; तथापि अज्ञाताद्यर्थविवक्षायाम् 'अव्ययसर्वनाम्ताम्' इत्यकचि साकच्कस्यापि इदंशब्दस्य अन्वादेशे 'आभ्याम्' इत्याद्येव रूपं यथा स्यात् इत्यशादेशविधिः । अन्यथा 'हलि लोपः' इत्यत्र 'अनाप्यकः' इत्यतः 'अकः' इत्यधिकारात् साकच्कस्य इदम इद्रूपलोपाभावेन अनन्वादेश इव 'इमकाभ्याम्' 'इमकैः' इत्यादिरूपं प्रसज्येत । तदुक्तम् 'आदेशग्रहणं साकच्कार्थम्' इति । शिद्ग्रहणं सर्वादेशार्थम् । न च त्यदाद्यत्वेनैव अन्त्यस्य अकाररूपतया सामर्थ्यात् अयमकारः सर्वादेशो भविष्यतीति वाच्यम् ; यतो[6] दीर्घादिव्यावृत्त्यर्थम् अकारस्यापि अकारविधिः स्यात् । अनुस्वारनिवृत्त्यर्थम् 'मो राजि

---

1. सुबन्तं पदसंश्रयम् क.
2. परतः घ. नास्ति ।
3. इदमः घ. नास्ति ।
4. आदेशं क.
5. तु क. नास्ति ।
6. अतः घ.

समः कौ[1]' इति मकारस्य मकारविधिवत् । स्यादेतत्— अशादेशस्य अनुदात्तविधिरनर्थकः ; 'ऊडिदम्पदादि' इति विभक्तेरुदात्तत्वे शेषनिघातेनैव अशोऽनुदात्तत्वसिद्धेरिति । सत्यम् ; 'आभ्याम्' इत्यादिपदं सर्वानुदात्तं यथा स्यात् इत्यशादेशानुदात्तत्वविधिः । तथा च सर्वानुदात्तं तत् पठ्यते—'तदेभ्योऽब्रवीत्', 'तदेषां वृङ्क्ते', 'स एवास्मा अन्नं प्रयच्छति', 'तयैवैष्वमृतमदधात्', 'स एवास्मिन् तेजः' इत्यादौ । अथ 'अशनुदात्तः' इति वचनात् कथं सर्वानुदात्तलाभः[2] ? अत्र षष्ठे कैयटहरदत्तादयः—'ऊडिदम्' इत्यत्र 'अन्तोदात्तात्' इत्यनुवर्तते । अशोऽनुदात्तत्वे विहिते तु अन्तोदात्तत्वाभावेन 'ऊडिदम्' इति विभक्त्युदात्तत्वस्य 'आभ्याम्' इत्यादावप्रवृत्तौ 'अनुदात्तौ सुप्पितौ' इति विभक्तेरप्यनुदात्तत्वात् 'आभ्याम्' इति पदं कृत्स्नमनुदात्तम् इति । 'सावेकाचः' इति विभक्त्युदात्तत्वं तु अन्वादेशे 'आभ्याम्' इत्यादौ भवति न वेति प्रागेव चिन्तितम्[3] । स्वरमञ्जर्यां तु 'शैषनिघातेनैव सिद्धेऽशादेशानुदात्तत्वविधिसामर्थ्यादेव[4] 'आभ्याम्' इत्यादौ 'ऊडिदम्' इति विभक्त्युदात्तत्वं न' इति स्थितम् । अनन्वादेशे तु 'ऊडिदम्' इति विभक्तिरुदात्तैव । 'अस्मिन्नेव तल्लोके' । 'अस्माल्लोकात्' ॥

## [३८१] ॥ एतदस्त्रतसोस्त्रतसौ चानुदात्तौ ॥
(2—4—33)

एतदोऽन्वादेशविषयस्य अशादेशोऽनुदात्तो भवति त्रतसोः परतः ; त्रतसौ च अनुदात्तौ भवतः । 'एतस्मिन् ग्रामे सुखं

---

1. कौ घ. नास्ति ।
2. सर्वानुदात्तत्वलाभः क.
3. विहितम् घ.
4. एव घ. नास्ति ।

वसामः, [1]अतोऽत्र युक्ता अधीमहे'। 'एतस्माच्छात्राच्छन्दोऽधीष्व, अथातो व्याकरणमपि[2] अधीष्व'। इह 'अत्र' 'अतः' इति पदद्वयं सर्वानुदात्तम्। एतच्छब्दात् त्रतसोः सतोः 'एतदोऽन्' इति पाञ्चमिकेनैव सूत्रेण आदेशः[3] सिद्धः। स तु आन्तर्यादुदात्तः प्राप्त इति तस्य अनुदात्तत्वार्थमत्र पुनर्वचनम्। 'त्रतसोः' इति[4] वचनं निमित्तभावार्थम्। अन्यथा अन्वाचये चो[5] विज्ञायेत। ततश्च एतदः सर्वत्र अशादेशोऽनुदात्तः, यत्र च[6] त्रतसौ पश्यति तत्र तौ च[7] अनुदात्तौ इत्यर्थः स्यात्। अथ 'त्रतसौ चानुदात्तौ' इति किमर्थम्? यतस्त्रतसोः परतः प्रकृतेर्लित्स्वरे कृते शेषनिघातेन प्रत्ययस्य अनुदात्तत्वे सति अशोऽनुदात्तस्य प्रवृत्त्यैव 'अत्र' 'अतः' इत्यनयोः सर्वानुदात्तत्वं सिद्धम् इति चेत्—मैवम्; येननाप्राप्तिन्यायेन अपवादत्वान्नित्यत्वाच्च लित्स्वरात् पूर्वमादेशे अनुदात्ते कृते तद्विधानसामर्थ्यात् पश्चादपि अत्र लित्स्वराप्रवृत्तेः। ततश्च अपवादस्य तस्य अप्रवृत्तौ उत्सर्गः प्रत्ययस्वर एव त्रतसोः स्यात्। यथा 'गोष्पदप्रम्' इत्यत्र 'वर्षप्रमाण ऊलोपश्चास्यान्यतरस्याम्' इति णमुलूलोपयोः सहविधानात् लित्स्वराप्रवृत्तौ प्रत्ययाद्युदात्तत्वे सति कृदुत्तरपदप्रकृतिस्वरेण अन्तोदात्तं पदम्। तस्मात् 'त्रतसौ चानुदात्तौ' इति वक्तव्यम्—इति भाष्यादौ। अन्वादेशात् अन्यत्र तु लित्स्वरेण 'अत्र' 'अतः' इति पदद्वयमाद्युदात्तम्। 'किमत्र भद्रम्'। 'अत्रा ते भद्रा रशना अपश्यम'। 'अत्र पितरो यथाभागं मन्दध्वम्'। 'अतः परं नान्यदणीयसꣳ हि'। 'अतः समुद्रा गिरयश्च सर्वे'॥

---

1. अथो घ.
2. अपि घ. नास्ति।
3. अशादेशः क.
4. त्रतसोरिति। त्रतसोरिति घ.
5. चैवं घ.
6. च क. नास्ति।
7. च क. नास्ति।

## [३८२] ॥ द्वितीयाटौस्स्वेनः ॥ (2—4—34)

मण्डूकप्लुतिन्यायात् इदंशब्दोऽनुवर्तते । द्वितीयायां टौसोश्च परतः इदमेतदोरेनादेशो भवति अन्वादेशे, स च अनुदात्तः । 'एनं पवयति' । 'प्रिययैवैनौ[1]' । 'स एवैनान्' । 'ऋष्नोत्येनेन' । 'य एनयोरनुलोमं च' । आन्तर्यात् एनादेशोऽन्तोदात्तः प्राप्त इति तस्य अनुदात्तविधिः । सुबप्यनुदात्तः इति सर्वानुदात्तं पदम् ॥

## (वा) ॥ एनदिति नपुंसकैकवचने वक्तव्यम् ॥

'य उ चैनदेवं वेद' । 'स्वमोर्नपुंसकात्' इति [2]स्वमोर्लुक् । एनादेशे तु सति एनम् इति स्यात् ॥

## [३८३] ॥ अनुदात्तं च ॥ (8—1—3)

द्विरुक्तस्य परं रूपमनुदात्ताच्कं स्यात् । अनुदात्तोऽस्य अस्तीति अनुदात्तम् । अर्श आद्यच् । द्विरुक्तपर[3]रूपसामानाधिकरण्यानुरोधात् । 'मासिमासि पृष्ठानि' 'प्रप्रायमग्निः' इत्यादि । आद्ये 'नित्यवीप्सयोः' इति द्विर्वचनञ्च । अन्यत्र 'प्रसमुपोदः - पादपूरणे' इति । आद्ये मासिशब्दे 'ऊडिदम्पदादि' इति विभक्तिरुदात्ता । इदं च आम्रेडितानुदात्तत्वम् 'नित्यवीप्सयोः' [4]इत्यादिपञ्चसूत्रीविहितद्विर्वचनविषयम् ।

1. -नौ तनुवा क.
2. स्वमोः घ. नास्ति ।
3. -रूप- घ. नास्ति ।
4. इति पञ्च- क.

'एकं बहुव्रीहिवत्' इत्यादिषट्सूत्रीसम्बन्धिद्विर्वचने तु 'एकं बहुव्रीहिवत्' 'कर्मधारयवदुत्तरेषु' इति सूत्रद्वयविहितबहुव्रीहिकर्मधारयवद्भावप्राप्तसमासस्वरेण इदमनुदात्तत्वं बाध्यते । यद्यपि बहुव्रीहिवत्त्वे प्रयोजनम् 'सुब्लोपपुंवद्भावौ' इति वार्त्तिकेन 'एकैको वै जनतायामिन्द्रः' इत्यादौ सुब्लोपः, 'आबाधे च' इति सूत्रेण द्विरुक्ते 'गतगता' इत्यादौ पूर्वपदे पुंवद्भावश्च बहुव्रीहिवद्भावस्य प्रयोजनम् इत्युक्तम्, न तु स्वरः । प्रत्युत 'सर्वनामस्वरसमासान्तेषु दोषः' इति वार्त्तिकान्तरेण 'एकैकस्मात्[1]' इत्यादौ 'न बहुव्रीहौ' इति सर्वनामसंज्ञानिषेधः, 'न न करोति' 'सु सु जातः' इत्यादौ 'आबाधे' इति द्विर्वचनेन 'नञ्सुभ्याम्' इत्युत्तरपदाद्युदात्तत्वम्[2], 'ऋगृक्' 'पूः पूः' इत्यादौ 'ऋक्पूः[3]' इति समासान्तश्च भवतीत्येवंतात्पर्यकेण बहुव्रीहिवद्भावात् स्वरो[4] नेष्यत इति दर्शितम् । 'सर्वनामस्वरसमासान्तेषु दोषः' इति वार्त्तिकं प्रत्याचक्षाणेनापि भगवता भाष्यकृता "स्वरसमासान्तयोरपि न दोषः । प्रकृतं समासग्रहणम् अनुवर्तते । तेन बहुव्रीहिं विशेषयिष्यामः—समासो यो बहुव्रीहिः—इति । तेन आतिदेशिकबहुव्रीहौ तौ न भविष्यतः' इति वदता बहुव्रीहिवद्भावेन स्वरो नेष्यत इत्येव दर्शितम् । तथापि 'स्वरसमासान्तयोरपि प्रकृतं समासग्रहणम् अनुवर्तते' इति भाष्यस्य—'नञ्सुभ्याम्' इति स्वरविधौ 'बहुव्रीहाविदमेतत्तद्भ्यः' इत्यतः बहुव्रीहिग्रहणे वर्तमाने 'वनं समासे' इत्यतः[5] सिंहावलोकनन्यायेन समासग्रहणसम्बन्धात् समासाधिकारविहितबहुव्रीहावेवैष[6] स्वरो नान्यत्र—इति तात्पर्यं वर्णयित्वा "'बहुव्रीहौ प्रकृत्या' इत्यत्र समासग्रहणासम्बन्धात् तत्सूत्रविधेयः स्वरः समासस्वरश्च बहुव्रीहिवद्भावात् प्रवर्तत एव । तेन

1. एकैकस्मै क.
2. उत्तरपदान्तोदात्तत्वम् क.
3. ऋक्पूरब्धूः पथामानक्षे घ.
4. बहुव्रीहिद्भावस्वरः क.
5. 'वनं समासे' इत्यतः क. नास्ति ।
6. एव सः क.

'न न करोति' इत्यादौ आम्रेडितानुदात्तत्वं बहुव्रीहिवद्भावात्[1] प्राप्तः समासस्वरो बाधते। तमपि बाधित्वा बहुव्रीहिस्वरोऽवतिष्ठते" इति 'एकं बहुव्रीहिवत्' इत्यत्र हरदत्तादिभिः[2] प्रतिपादनात् बहुव्रीहि-[3]वत्त्वप्राप्तस्वरेण इदमनुदात्तत्वं बाध्यत इत्युक्तम् इति न विरोधः। नन्वेवं बहुव्रीहिवद्भावविषये पूर्वपदं प्रकृतिस्वरमेव। आम्रेडितं तु शेषनिघातेन अनुदात्तम् इति पर्यवसन्नम्। तच्च आम्रेडितानु-दात्तत्वेनैव सिद्धम् इति बहुव्रीहिवद्भावात् स्वरे न कश्चिद्भेदः। एवं च 'स्वरविधौ प्रकृतं समासग्रहणम् अनुवर्तते' इति भाष्यस्य 'बहुव्रीहौ प्रकृत्या' इत्यत्रापि समासग्रहणम् अनुवर्तते--इत्यपि तात्पर्यं[4] कल्प्यताम्। किमिति तत्र समासग्रहणासम्बन्धो हरदत्तादिभिरभ्युपगत इति? अत्र प्रतिभाति—यदि 'बहुव्रीहौ प्रकृत्या' इत्यत्र समासग्रहणम् अनुवर्त्येत, तदा बहुव्रीहिव-द्भावेन तत्स्वराप्रवृत्तावपि सामासान्तोदात्तत्वं प्रवर्तेत, तस्यापि बहुव्रीहौ दृष्टत्वात्। ततश्च 'एकैको वै जनतायाम्' इत्यादौ आम्रेडितान्तोदात्तत्वमत्र[5] स्यात्। यद्युच्येत—'समासस्य' इत्यत्रापि 'अन्तोदात्तादुत्तरपदात्' इत्यतः समासग्रहणसम्बन्धात् न तत्स्वरस्य बहुव्रीहिवद्भावेन प्रवृत्तिः इति, तर्हि 'कर्म-धारयवदुत्तरेषु' इत्यतिदेशेनापि समासस्वराप्रवृत्तिप्रसङ्गे भाष्यादि[6]-विरोधः। तस्माद्बहुव्रीहिवद्भावप्राप्तं[7] समासान्तोदात्तत्वं बाधितुम् 'बहुव्रीहौ प्रकृत्या' इत्यस्यापि अतिदेशः स्वीकार्यः। तदर्थम् 'बहुव्रीहौ प्रकृत्या' इत्यत्र समासग्रहणासंबन्धो हरदत्तादिभिरभ्युपगत इति। बहुव्रीहिवदतिदेशस्य पुंवद्भावोऽपि प्रयोजनम् इत्युक्तम्। तेन 'एकैकयास्तुतया' इत्यादौ अवग्रहे पूर्वपदं ह्रस्वान्तं

---

1. -भावप्राप्तसमास- घ.
2. हरदत्तादिभिः घ. नास्ति।
3. -वद्भावप्राप्त- क.
4. अपि तात्पर्यं घ. नास्ति।
5. अत्र क. नास्ति।
6. -आदि- क. नास्ति।
7. -प्राप्तसमास- घ.

पठितव्यम् इति विशेष [1]इति हरदत्तादयः । तैत्तिरीयास्तु अत्र 'एकया' इति यान्तं पूर्वपदमवगृह्णन्ति । 'यदेकमेक॰ सम्भरेत्' 'एकयैकयोत्सर्गं मिमीते' इत्यादौ बहुव्रीहिवद्भावेन सुब्लुगभावो व्यत्ययः[2] । एवम् 'प्रकारे गुणवचनस्य' इत्यादिसूत्रविहितद्विर्वचने कर्मधारयवद्भावेन[3] समासान्तोदात्तत्वमेव, नाम्रेडितानुदात्तत्वम् । यथा 'भागधेयैनैवैनान् यथायथं कल्पयाति' । 'वयं यथायथं वि परि दधावहे' । 'द्वादश द्वन्द्वानि' । 'द्वन्द्वमन्यासु चितीषु' । 'यथास्वे यथायथम्' इति सूत्रेण यथायथशब्दो निपातितः । यथाशब्दस्य द्विर्वचनं नपुंसकत्वं च निपात्यम् । 'द्वन्द्वं रहस्यमर्यादावचन' इति द्वन्द्वशब्दो निपातितः । तत्र द्विशब्दस्य द्विर्वचनं पूर्वोत्तरपदान्त्ययोः अम्भावः अकारश्च नपुंसकत्वं च निपात्यत इत्याहुः । तदुक्तम् 'कर्मधारयवद्भावे प्रयोजनम् सुब्लोपपुंवद्भावान्तोदात्तत्वानि' इति । यत्तु[4] 'प्रकारे गुणवचनस्य' इति सूत्रस्थैः 'आनुपूर्व्ये द्वे भवतः' इत्यादिवार्त्तिकैर्द्विर्वचनम्, तत्र आम्रेडितानुदात्तत्वमेव ; 'कर्मधारयवदुत्तरेषु' इत्यस्य वार्त्तिकेषु असम्बन्धात् । अत एव 'मूले मूले स्थूलाः[5]' इत्यादिषु [6]तत्तद्वार्त्तिकोदाहरणेषु भाष्यदर्शितेषु सुब्लुगभावः । 'परस्परम्' 'इतरेतरम्' इत्यादौ समासान्तोदात्तत्वमेव[7] ; 'कर्मव्यतिहारे सर्वनाम्नो द्वे भवत इति वक्तव्यम्' 'समासवच्च बहुलम्' इति तद्द्विर्वचनविधिवार्त्तिकेन समासवद्भावविधानात् । यत्तु 'अहिरहिः' 'बुध्यस्व बुध्यस्व' इति द्विर्वचनं 'चापले' इति वार्त्तिकगम्यम्, तत्र न आम्रेडितानुदात्तत्वम् । तद्धि न शास्त्रीयं द्विर्वचनम् ; किं तु परप्रत्यायनाय क्रियमाणोऽनेकस्वतन्त्रपदप्रयोगः । अत एव तत्र

---

1. इति हरदत्तादयः.....मिमीते इत्यादौ घ. नास्ति ।
2. व्यत्ययात् घ.
3. -वत्त्वेन घ.
4. यत्तु...वार्त्तिकेषु घ. नास्ति।
5. स्थूलः घ.
6. तद्वार्त्तिक- क.
7. इति क.

भाष्यम्—'नावश्यं द्वे एव, यावद्भिः शब्दैः सोऽवगम्यते[1] तावन्तः प्रयोक्तव्याः । 'अहिरहिरहिः बुध्यस्व बुध्यस्व बुध्यस्व' इति । तस्मात्तत्र नाम्रेडितानुदात्तत्वम्, किं तु यथाप्राप्तः[2] स्वर इत्येषा दिक् ॥

युष्मदस्मदोः [3]षष्ठीचतुर्थीद्वितीयास्थयोर्वांनावादय आदेशाः तेऽनुदात्ताः । तद्विधौ 'अनुदात्तं सर्वमपादादौ' इत्यनुवृत्तेर्वाक्यभेदेन तेषामनुदात्तत्वविधानात्, एकेनैव वाक्येन अनुदात्तत्वविशिष्टानां तेषां विधानाद्वा । 'या वामिन्द्रावरुणा' । 'अहन्नावुभयोः' । 'यद्वो वयम्' । 'मानस्तोके' । 'नमस्ते रुद्र मन्यवे । 'आयुर्मे पाहि' । 'इषे त्वोर्जे त्वा' । 'इह मा सन्तं पाहि' ननु 'ते ते वाचं सुवन्ताम्' 'मा मा हिꣳसीः' इत्यादौ आद्ययोः तेमाशब्दयोः कथमनिघातः ? नेमौ युष्मदस्मदादेशौ, किं तु तेशब्दो[4] जसन्तः एकादेशस्वरेण उदात्तः । माशब्दस्तु निपात आद्युदात्तः ॥

## [३८४] ॥ तिङो गोत्रादीनि कुत्सनाभीक्ष्ण्ययोः ॥
(8—1—27)

अत्र 'तिङो गोत्रादीनि' इत्ययमंशो विधिः । 'कुत्सनाभीक्ष्ण्ययोः' इत्यंशः परिभाषा ; योगविभागात् । तत्र परिभाषांशः परिभाषाप्रकरण एव व्याख्यातः । विध्यंशस्य अयमर्थः—[5]तिङन्तात्

---

1. गम्यते
2. प्राप्तएवस्वरः इतीयं दिक्
3. द्वितीया' इत्यादिसूत्रविहिता ये वान्नावादय आदेशास्तेऽनुदात्ताः घ.
4. तच्छब्दः ङ.
5. कुत्सनाभीक्ष्ण्यविषयाणि गोत्रादीन्यनुदात्तानि भवन्तीति । जल्पति जल्पति गोत्रम् । 'नित्यवीप्सयोः' इति द्विर्वचनम् । विवाहादौ पुनः पुनर्गोत्रं कथयतीत्यर्थः । एतद्वचो निषिद्धत्वात् कुत्सितम् । गोत्रबुव...घ.

पराणि कुत्सनाभीक्ष्ण्यविषयाणि गोत्रादीनि अनुदात्तानि भवन्ति—इति । 'जल्पतिगोत्रम्' । । 'जल्पतिब्रुवम्' । भोजनाद्यर्थं गोत्रं ख्यापयतीत्यर्थः । एतच्च कुत्सितम्,

'न भोजनार्थं स्वे विप्रः कुलगोत्रे निवेदयेत् ।'

इति स्मरणात् । ब्रूतेरचि निपातनात् वच्यादेशगुणयोरभावे ब्रुवशब्दः कुत्सनावचनः । आभीक्ष्ण्ये—'जल्पति जल्पति गोत्रम्' । 'नित्यवीप्सयोः' इति द्विर्वचनम् । विवाहादौ पुनः पुनः गोत्रं कथयतीत्यर्थः । एतच्च अनिषिद्धत्वात् अकुत्सितम् । गोत्रब्रुव-[1]वचन[2]प्रहसनप्रकथनप्रायप्रचक्षणादयो गोत्रादयः ॥

॥ वा नाम ॥ इति गणसूत्रम् । तिङन्तात् परम् 'नाम' इत्येतत् वा निहन्यते । 'जल्पति नाम' । पक्षे आद्युदात्तः ॥

## [३८५] ॥ पूजनात् पूजितमनुदात्तम् ॥

(8—1—67)

एतावदेव सूत्रम् । 'काष्ठादिभ्यः' इति तु वार्तिके दृष्टम् वृत्तिकृता सूत्रे प्रक्षिप्य पठितम् । पूजनवचनात् काष्ठादेः परं[3] पूजितवचनं सुबन्तं[4] अनुदात्तं भवति । उत्तरसूत्रे तिङ्ग्रहणात् सुबन्तविषयमेतत् । 'काष्ठाध्यायकः' । 'काष्ठाभिरूपकः' । आद्योदाहरणे 'काष्ठ' इति द्वितीयान्तं व्यस्तं पदम् । अध्ययनक्रिया-विशेषणत्वेन कर्मत्वात् कर्मणि द्वितीया । न च कृद्योगलक्षण-षष्ठीप्रसङ्गः ; कर्तृसाहचर्याद्धात्वर्थं प्रति [5]यत् कर्म तत्रैव कर्मणि षष्ठीविधानात्[6] । न च द्वितीयान्तत्वे व्यस्तत्वे च

1. -प्रवचन- ङ.
2. -प्रहसन- घ. नास्ति ।
3. परं घ. नास्ति ।
4. पदम् क. अधिकम् ।
5. 'भेदसम्बन्धेन यत्कर्म' इत्येव युक्ततरः पाठः यद्यपि, तथापि आदर्शपुस्तकेषु यथादृष्ट एव पाठः उपरि क्षिप्तः
6. -विज्ञानात् ङ.

मकारान्तं पूर्वपदं श्रूयेत इति वाच्यम् ; 'पूजितस्य अनुदात्तत्वे काष्ठादिग्रहणं मलोपश्च' इति वार्त्तिकेन मलोपविधानात् । मलोपविधायि वार्त्तिकमपि क्रियाविशेषणात्[1] कर्मणि षष्ठी न इत्यत्र मानम् । षष्ठ्यां हि सत्यां मकाराभावादनुपपन्नमेतत् स्यादिति हरदत्तः । एवम् 'काष्ठाभिरूपकः' इत्यत्रापि आभिरूप्यविशेषणं 'काष्ठ' इति पदम् इति नपुंसकप्रथमैकवचनान्तं पूर्वपदम् । काष्ठादयः शब्दा अत्र[2] अद्भुतपर्यायाः पूजनवचनाः । काष्ठादिभ्यः किम् ? 'शोभनमध्यायकः[3]' । केचित्तु असमासे मलोपमनिच्छन्तः सूत्रस्य समासविषयतां मन्वानाः 'काष्ठाध्यायः' इत्यादिकं समासपदमेव[4] उदाहरन्ति । तत्र सामानाधिकरण्याभावात् 'विशेषणं विशेष्येण' इत्यस्य अप्रवृत्तौ मयूरव्यंसकादित्वात् समासः । समासान्तोदात्तत्वापवादश्च[5] योग इति बोध्यम् । तन्मते च 'सुपो धातुप्रातिपदिकयोः' इत्येव समासे मलोपोपपत्तेः 'मलोपश्च' इति वार्त्तिकं व्यर्थम्[6] । अतः पूर्वमतमेव[7] ज्यायः । यदि तु असमासे मलोपरहितमपि रूपमिष्यते, तदा विकल्पेन मलोपो विधातव्य इति हरदत्तग्रन्थे स्थितम् । पूजनस्य[8] पूजितसापेक्षत्वात् 'पूजनात्' इत्येतावतैव 'पूजितम्' इति लब्धम्[9] । पुनः[10] पूजितग्रहणम् अव्यवहितप्रतिपत्तये[11] । एतच्च 'अस्मिन् प्रकरणे पञ्चमीनिर्देशेऽपि व्यवहिते कार्यं भवति' इति ज्ञापयति । अन्यथा 'तस्मादित्युत्तरस्य' इति सिद्धेः तद्ग्रहणवैफल्यात् । ज्ञापनफलं तु 'यद्वृत्तान्नित्यम्' इत्यत्र वक्ष्यामः ॥

---

1. -विशेषणत्वात् घ.
2. अत्र क. नास्ति । अद्भुतवाचकाः घ.
3. अध्यापकः घ.
4. समासमेव घ.
5. च घ. ङ. नास्ति ।
6. मलोपो व्यर्थः ङ.
7. पूर्वपदमेव घ.
8. पूजितस्य पूजन- व.
9. लब्धे क. ङ.
10. पुनः क. ङ. नास्ति ।
11. अव्यवहितपूजितप्रतिपत्तये घ.

## [३८६] ॥ गतिर्गतौ ॥ (8—1—70)

गतौ परतो गतिरनुदात्तो भवति । 'पर्यावर्तते दक्षिणा'। 'पत्नीमुदानयति'। यद्यपि अत्र 'गतौ' इत्यनुक्तावपि[1] गतौ परतो गतिर्निहन्यत इत्यर्थो[2] लभ्यते । तथा हि—न तावत्तदनुक्तौ[3] अक्रियावचने परतो गतिनिघातप्रसङ्गः ; क्रियायोग एव गतिसंज्ञाविधानेन तत्र गतेरभावात् । नापि क्रियावचने कृदन्ते परतः ; कृत्स्वरादौ सति शेषनिघातेन तत्र गतेरनुदात्तस्य इष्टत्वात् । तिङन्तं तु क्रियावचनं द्विविधम्, एकगतियुक्तम् अनेकगतियुक्तं च । उभयत्रापि तिङन्तमुदात्तवच्चेत् इष्यत[4] एव [5]तिङन्ताव्यवहितस्य गतेर्निघातः 'तिङि चोदात्तवति' इत्युत्तरसूत्रात् । तस्मात् उदात्तरहिते तिङन्ते परतः उभयत्र [6]तदव्यवहितगतेर्निघातप्रसङ्गः 'दिशो व्यभजन्त' 'पर्यावर्तते दक्षिणा' इत्यादौ इत्येतत् परमवशिष्यते । नैतदपि ; तिङि परतो यदि भवति निघातः, तर्हि उदात्तवत्येव इत्युत्तरसूत्रे नियमाश्रयणात् । अत एव वार्त्तिकम्—'गतेरनुदात्तत्वे गतिग्रहणानर्थक्यं तिङ्व्यवधारणात्' इति । तस्मात् 'गतौ' इत्यनुक्तावपि 'गतिर्गतौ' इति पर्यवस्यति । तथापि अक्रियावचनेऽपि परतः 'आ मन्द्रैरिन्द्र हरिभिः[7]' इत्यादौ अस्त्येव गतिः । अत्र हि मन्द्रशब्दे परतः 'याहि' इत्येतदपेक्षमाङो गतित्वम् । 'छन्दसि परेऽपि' 'व्यवहिताश्च' इति छान्दसो व्यवहितप्रयोगः । 'गतौ' इत्यनुक्तौ अनैमित्तिकोऽयं गतिनिघातः, अन्यापेक्षमपि अत्रास्ति गतित्वम् इति प्रसज्येत । एवं प्रगत

---

1. अनुवृत्तावपि क.
2. अर्थः घ. नास्ति ।
3. अनुवृत्तौ क.
4. उदात्तवच्चेदिष्यते
5. तिङन्तव्यवहितस्य क.
6. तदव्यवहितपूर्वस्यापि गतेः क.
7. याहि क. अधिकम् ।

आचार्यः 'प्राचार्यः' इत्यादौ अन्तर्भूतक्रियापेक्षया गतावतिप्रसङ्गः । अव्ययपूर्वपदप्रकृतिस्वरश्च इष्यते । तस्मात् 'गतौ' इति वक्तव्यम् । यदि तु 'पदस्य' इत्यधिकारात् समर्थपरिभाषोपस्थाने[1] 'गति-र्निहन्यते, यदपेक्षमस्य गतित्वं तस्मिन् समर्थे परतः' इति सूत्रार्थः कल्प्येत[2], शक्यं तदा[3] 'गतौ' इत्येव वक्तुम् इति हरदत्त इति दिक् ॥

## [३८७] ॥ तिङि चोदात्तवति ॥ (8—1—71)

उदात्तवति तिङन्ते परतः गतिरनुदात्तो भवति । 'या-न्न निवपति यदनुदिशति' । 'यद्वृत्तान्नित्यम्' इति निघातनिषेधे[4] 'वपति' इत्याद्युदात्तम्, शप्तिपोरनुदात्तत्वात् । 'दिशति' इति शविकरणः[5] विकरणस्वरेण मध्योदात्तः । 'यद्वत्सानपाकरोति' । अत्र आद्यस्य गतेः 'गतिर्गतौ' इति निघातः । उदात्तवति किम् ? 'देवमनुष्या दिशो व्यभजन्त' । ननु तिङ्ग्रहणं व्यर्थम् । न च 'आ मन्द्रैरिन्द्र[6]' इत्यत्र अक्रियावचनेऽति-प्रसङ्गः ; ससम्बन्धिकेन गतिशब्देन स्वसम्बन्धिक्रियावचनस्य आक्षेपेण तस्मिन् उदात्तवति गतिर्निहन्यत इत्यर्थलाभात् । क्रियावचने कृदन्ते परतः शेषनिघातेन गतेरनुदात्तस्य[7] इष्टत्वादिति चेत् — अत्र वार्त्तिककृतः—'यत्क्रियायुक्ताः' इति न्यायेन गतिना स्वसम्बन्धिक्रियावचनस्य आक्षेपे धातोरेव क्रियावचनतया धातुरेव आक्षिप्येत । ततश्च यत्र धातुरुदात्तवान् 'यान्न निवपति' इत्यादौ[8], तत्रैव अयं निघातः स्यात् । यत्र तु प्रत्ययस्य

---

1. ०उपस्थितौ घ.
2. यदि घ. अधिकम् ।
3. तावत् घ.
4. निषेधः । घ.
5. शविकरणः घ. नास्ति ।
6. हरिभिः घ. अधिकम् ।
7. अनुदात्तत्वस्य घ.
8. इत्यादि घ.

उदात्तत्वेन तिङन्तमुदात्तवत् 'यदनुदिशति' इत्यादौ[1], तत्र न स्यात् । तिङ्ग्रहणे तु सति यत्र तिङन्तस्य उदात्तवत्त्वम् तत्र[2] गतिनिघातः सिध्यति । तदुक्तम् 'तिङ्ग्रहणम् उदात्तवतः परिमाणार्थम्[3]'—इति । भाष्ये तु तिङ्ग्रहणं प्रत्याख्यातम् । तथा हि—एवमपि 'प्रपचतितराम्' इत्यादौ आमन्ते गतिनिघातो न सिध्यति ; प्रत्ययस्वरेण आम एव उदात्तत्वेन तिङन्तस्य शेषनिघातेन उदात्तवत्त्वाभावात् । तस्मात्तिङ्ग्रहणं त्यक्तव्यम् । 'यत्क्रियायुक्ताः' इत्यस्य च[4] नायमर्थः—यस्य क्रिया यत्क्रिया इति[5] । येन धातोरेव क्रियावाचित्वेन तस्यैव गतिना आक्षेपः स्यात् । अपि तु या क्रिया यत्क्रिया इति । एवं च क्रियारूपमर्थं प्रत्येव गतिसंज्ञा । तस्य च अत्र व्यवहारानर्हत्वात्[6] तत्प्रधानं पदं गतिना आक्षिप्यत इति कियाप्रधाने तिङन्ते आमन्ते च परतो गतिनिघात[7] इति । ननु आमन्ते गतिनिघातार्थं तिङ्ग्रहणं त्यक्तव्यम् इति अनुपपन्नम् ; 'कुगतिप्रादयः' इत्यामन्तेन गतिसमासे 'गतिकारकोपपदात्[8]' इत्यत्र कृद्ग्रहणप्रत्याख्यानात् [9]स्वरे सति शेषनिघातेनैव तत्र[10] गतेरनुदात्तत्वसिद्धेः । न च 'गतिकारकोपपदानां कृद्भिः सह समासवचनम्' इत्युक्तेः आमन्तेन गतिसमासासम्भवः ; न हि गत्यादीनां कृद्भिरेव समास इति तदर्थः । किं तु तेषामविशेषेण समासो भवति, कृद्भिस्तु सह प्राक्सुबुत्पत्तेरिति । अत एव आमन्ते कृत्स्वरार्थम् 'गतिकारकोपपदात्' इत्यत्र कृद्ग्रहणं भाष्ये प्रत्याख्यातम् इति चेत्—अत्र इत्थं भाष्याशयमाहुः—गत्यादीनां कृद्भिरेव समासः, स

1. इत्यादिः क.
2. सर्वत्र क, ङ. अधिकम् ।
3. परिणामार्थम् क. ङ. वर्जं सर्वत्र
4. वचनस्य क.
5. यत्क्रिया यस्य क्रिया इति घ.
6. -अनङ्गत्वात् घ.
7. सिद्धः घ. ङ. अधिकम् ।
8. कृत् घ. अधिकम् ।
9. कृत्स्वरे घ.
10. तत्र क. नास्ति ।

च प्राक् सुबुत्पत्तेरिति उक्तवचनार्थ इति [1]पक्षमाश्रित्य आमन्ते अव्याप्तिरत्र भाष्ये चोदिता । एवं हि आमन्तत्य गतेश्च समासाभावेन पृथक्स्वरप्राप्तौ गतिनिघातार्थं तिङ्ग्रहणं त्यक्तव्यम् इति । अत एव परिभाषावृत्तौ 'गतिकारकोपपदानाम्' इति वचनम् उक्तविधया द्वेधा व्याख्यातम् । स्यादेतत्—'उप प्रेत जयता नरः' 'सम्प्रच्यवध्वमनुसम्प्रयात' 'रूपेण द्यासा रूपमभ्यैति' इत्यादौ 'गतिर्गतौ' 'तिङि चोदात्तवति' इति सूत्राभ्यां कथं गतिनिघाताभाव इति । अत्रेदं तत्त्वम्—'अपादादौ' इत्यधिकारात् 'उपप्रेत' इत्यादौ गतिनिघाताभावः । 'अनुदात्तं सर्वमपादादौ' इत्यतः आ पादसमाप्तेः 'अपादादौ' इत्यधिक्रियत इति वृत्तिकृदुक्तेः । 'अनुसम्प्रयात' 'अभ्यैति' इत्यादौ तु छन्दसि सर्वविधीनां वैकल्पिकत्वान्निघाताभावः । अत एव 'गतिकारकोपपदात् [2]कृत्' इत्यत्र मनोरमायामुक्तम्—'उपप्रेत कुशिका[3]' इत्यादौ समासो न कृतः । 'गतिर्गतौ' इति तु छन्दसि सर्वविधीनां विकल्पनान्न[4] कृतम्, 'अपादादौ' इत्यधिकाराद्वेति । यत्तु "'गतिर्गतौ' इत्यादेः समासविषयत्वात् 'सम्प्रच्यवध्वम्' इत्यादौ समासाभावान्न गतिनिघातः" इति स्वरमञ्जर्यां तद्विवरणे च कथितम्, तच्चिन्त्यम् ; अत्र समासग्रहणानुवृत्त्यभावात् । आमन्ते समासाभावेन पृथक्स्वरप्राप्तौ गतेर्निघातार्थम् 'तिङि चोदात्तवति' इत्यत्र तिङ्ग्रहणं त्यक्तव्यम् इत्येवं तात्पर्यकानन्तरोक्त[5]भाष्यविरोधात् । 'गतिर्गतौ' इत्यत्र 'गतौ[6]' इत्यनुक्तौ 'तिङि चोदात्तवति' इत्यत्र तिङ्ग्रहणाभावे च 'आ मन्द्रैरिन्द्र हरिभिः' इत्यत्र अतिप्रसङ्ग[7] इति

---

1. मतं क.
2. कृत् क. मास्ति ।
3. कुशिक क.
4. विकल्पान्न घ.
5. -अनन्तरोदाहृतभाष्य- घ. ङ.
6. 'गतेः' इत्युक्तौ क.
7. अतिप्रसङ्गवारणाय गतिग्रहणं तिङ्ग्रहणं च इत्युक्तत्वात् घ.

भाष्यवार्तिकविरोधाच्च । [1]न हि अत्र आङो मन्द्रशब्देन समासोऽस्ति । स्वरमञ्जरीतद्विवरणयोरपि " 'आ मन्द्रैः' इत्यत्र अतिप्रसङ्गवारणार्थं गतिग्रहणं तिङ्ग्रहणं च" इत्युक्तत्वाच्च । अत एव मनोरमायामपि " 'उपप्रेत कुशिका[2]' इत्यादौ समासाभावविषये छान्दसत्वान्न गतिनिघातः" इत्युक्तम् । इदं तु ध्येयम्—'पत्नीमुदानयति' 'यदनुदिशति' इत्यादिकम् 'गतिर्गतौ' इत्यादेर्नासाधारणम् उदाहरणम् । तिङ्समासे समासान्तोदात्तत्वमेव इति कैयटादिमते अत्र[3] मध्योदात्तत्वस्य बहुलग्रहणसाध्यत्वेन शेषनिघातेनैव गतेरनुदात्तत्वसिद्धेः । तिङ्समासे कृदुत्तरपदप्रकृतिस्वर इति मतेऽपि तत एव तदनुदात्तत्वसिद्धेश्च । तस्मात् यत्र गतेस्तिङन्तस्य[4] न समासः तत्र गत्यनुदात्तत्वमेव तयोः फलम् इति ॥

## [३८८] ॥ आमन्त्रितस्य च ॥ (6—1—198)

'सामन्त्रितम्' इति सम्बोधनप्रथमाया आमन्त्रितसंज्ञा उक्ता, तदन्तस्य आदिरुदात्तः । 'अग्ने त्वं नो अन्तमः' । 'वायो वीहि स्तोकानाम्' । '[5]असावेहि' । 'मित्रावरुणा शरदा' । 'इन्द्राग्नी रोचना दिवः' । आमन्त्रितान्ते योऽन्यः स्वरः प्राप्तः तस्य[6] सर्वस्य अयमपवाद इति । तत्र अग्निवायुशब्दौ[7] अन्तोदात्तौ[8] इत्युक्तम् । अदश्शब्दोऽपि फिट्स्वरेण अन्तोदात्तः । 'मित्रावरुणा'

---

1. न ह्यत्र...इत्युक्तत्वाच्च घ. नास्ति ।
2. कुशिक क.
3. अत्र क. नास्ति ।
4. न निघातः क. अधिकम् ।
5. 'असावेह्यसावेहि' घ.
6. तस्य, अदश्शब्दोऽपि फिट्स्वरेण अन्तोदात्तः । 'मित्रावरुणा' इत्यत्र 'देवताद्वन्द्वे च' इत्युभयपदप्रकृतिस्वरः प्राप्तः । सर्वस्यायमवादः । तत्र अग्निवायु... इत्युक्तम् । इन्द्राग्नी इत्य...न्तोदात्तत्वम् । देवबर्हिः क.
7. मित्राग्निवायुशब्दाः घ.
8. अन्तोदात्ताः घ.

इत्यत्र 'देवताद्वन्द्वे च' इत्युभयपदप्रकृतिस्वरः प्राप्तः । 'इन्द्राग्नी' इत्यत्र तु समासान्तोदात्तत्वम् । 'देवबर्हिः शतवल्शं विरोह' इत्यादौ 'स्वमोर्नपुंसकात्' इत्यामन्त्रितस्य लुक्यपि प्रत्ययलक्षणेन अयं स्वरो भवति[1] ; अङ्गकार्यत्वाभावेन 'न लुमता' इति निषेधाभावात् । यत्तु 'स्वरविधौ अनङ्गकार्येऽपि प्रत्ययलक्षणं न' इति 'संज्ञायामुपमानम्' इत्यारम्भात् ज्ञापितम्, तदपि अनुबन्धाश्रयस्वर-विषयम् इति प्रागेवोक्तम् ॥

## [३८९] ॥ आमन्त्रितस्य च ॥ (8—1—19)

पदात् परस्य अपादादौ वर्तमानस्य[2] आमन्त्रितविभक्त्यन्तस्य सर्वोऽच् अनुदात्तो भवति[3] । षाष्ठस्य पूर्वसूत्रस्य अयमपवादः । अयमाष्टमिकः । 'त्वमग्ने द्युभिः' । 'आ वायो भूष' । 'अग्नये त्वा परिददाम्यसौ' । 'आ नो मित्रावरुणा' । 'उभा वामिन्द्राग्नी' । 'इमं मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोमम्' । इह 'गङ्गे' इत्याद्यामन्त्रितत्रयस्य निघाते संहितायामैकश्रुत्यम् । पादादित्वात् शुतुद्रिशब्दस्य न निघातः ; किं तु षाष्ठम् आद्युदात्तत्वम् । एवं च अमन्त्रितान्तानां[4] पदात् परत्वे अपादादिस्थत्वे च सर्वानुदात्तत्वम्, अन्यत्र आद्युदात्तत्वम् इति[5] बोध्यम् ॥

## (वा) ॥ समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः ॥

समाने एकस्मिन् वाक्ये निमित्तनिमित्तिनोराधारभूते सति निघातो युष्यदस्मदादेशाश्च[6] भवन्ति[7] इत्यर्थः । तेन 'गृह्णाम्य-

1. भवति घ. नास्ति ।
2. अपादादिस्थस्य घ.
3. भवति घ. नास्ति ।
4. आमन्त्रितानाम् क.
5. इति क. नास्ति ।
6. -आदेशाश्च क.
7. भवति क.

मा३इ पत्नीव३:' 'मा मां हासीदिन्द्रौजस्विन्' 'सोऽब्रवीद्विष्णवेहि' इत्यादौ नामन्त्रितनिघातः[1]; निमित्तनिमित्तिनोर्भिन्नवाक्यस्थत्वात्। न च अस्य पदविधित्वेन समर्थपरिभाषोपस्थितौ सामर्थ्याभावादेव अत्र अतिप्रसङ्गनिरासे वार्त्तिकवैयर्थ्यम्; 'एकार्थीभावः सामर्थ्यम्' इति तत्र[2] सिद्धान्तात् प्रकृते तदभावेन तदप्रवृत्तेः। 'परस्परव्यपेक्षां सामर्थ्यमेके' इति तत्रत्यमतान्तरेऽपि अव्याप्त्यतिव्याप्तिवारणाय प्रकृते समानवाक्याधिकारस्य अवश्यकर्तव्यत्वेन तत्रैव भाष्यादौ[3] सिद्धान्तितत्वात्। तथा हि—असति हि समानवाक्याधिकारे 'नद्यास्तिष्ठति कूले' 'वृक्षस्य लम्बते शाखायाम्' इत्यत्र 'तिष्ठति' 'लम्बते' इति तिङन्तयोः 'तिङ्ङतिङः' इति निघातो न स्यात्। 'नद्याः' 'वृक्षस्य' इति पदद्वयस्य उक्ततिङन्ताभ्यां सामर्थ्यविरहात्[4]। 'नद्याः कूले' 'वृक्षस्य शाखायाम्' इत्यन्वयात्। एवं 'पटवे ते दास्यामि' इत्यत्र युष्मदादेशो न स्यात्; '[5]समानाधिकरणम् असमर्थवद्भवति' इति वचनात्। तथा च समर्थसूत्रे वार्त्तिकम्—'समर्थनिघाते हि समानाधिकरणयुक्तेषु उपसङ्ख्यानम्, असमर्थत्वात्'—इति। एवं समानवाक्याधिकाराभावे 'भवतीह विष्णुमित्रः, देवदत्तागच्छ' 'अयं दण्डो हरानेन' इत्यत्र आमन्त्रितनिघातस्तिङ्निघातश्च स्यात्। इह हि विष्णुमित्रमन्वेष्टुं गच्छन्तं देवदत्तं प्रति 'भवतीह' इति वाक्यं प्रयुक्तम् इति तद्भवनस्य तदागमनहेतुत्वेन अन्वयादस्ति व्यपेक्षासामर्थ्यम्। 'अयं दण्डः' इत्यादिवाक्येऽपि दण्डशब्दोपात्तस्य दण्डस्य 'अनेन' इति पदेन [6]हरणहेतुत्वप्रतिपादनात् सामर्थ्यम्। न च [7]समानवाक्याधि-

---

1. आमन्त्रितस्य निघातः क.
2. तत्र क. नास्ति।
3. भाष्ये क.
4. -अभावात् घ.
5. समानाधिकरणमसामर्थ्यवत् घ.
6. हरणस्य हेतुत्व- घ.
7. समानवाक्यत्वाधि- ग.

कारेऽपि एकार्थकत्वेन[1] अत्र एकवाक्यत्वसद्भावात् अतिप्रसङ्गतादवस्थ्यम्[2] इति वाच्यम्; न हि 'अर्थैकत्वादेकं वाक्यम्' इति लौकिकं वाक्यम्[3] इह गृह्यते । किं तु 'आख्यातं साव्ययकारकविशेषणं वाक्यम्' इति समर्थसूत्रभाष्ये[4] परिभाषितम् । अत्र च 'आख्यातम्' इत्येकत्वं विवक्षितम् । तेन 'भवतीह' इत्यादिवाक्ये आख्यातभेदेन वाक्यभेदान्नातिप्रसङ्गः । 'अयं दण्डः' इत्यत्रापि अस्तीति आख्यातस्य गम्यमानत्वाद्वाक्यभेद एव । 'नद्यास्तिष्ठति कूले' इत्यादौ सामर्थ्याभावेऽपि एकवाक्यत्वसद्भावान्नाव्याप्तिः[5] । एवं च अत्र पदविधौ समर्थपरिभाषाया न व्यापार इति बोध्यम् । 'तिङो गोत्रादीनि' इत्यादिनिघातोऽपि समानवाक्य एवेति ॥

## [३९०] ॥ आम एकान्तरमामन्त्रितमनन्तिके ॥
(8—1—55)

अन्तरयति इति अन्तरं व्यवधायकम् । एकमन्तरं यस्य तत् एकान्तरम् । तादृशम् आम उत्तरं यदामन्त्रितान्तम्, तन्न अनुदात्तं भवति अनन्तिके दूरे गम्ये । 'आम् पचसि देवदत्त३' । आष्टमिके निघाते निषिद्धे षाष्ठमामन्त्रिताद्युदात्तत्वम् । 'दूराद्धूते च' इति टेः प्लुतः । यद्यपि अत्र 'एकश्रुतिदूरात् सम्बुद्धौ' इत्यैकश्रुत्यं प्राप्नोति, तथापि अनन्तिकशब्दोपस्थितस्य तस्यापि अनेन निषेधात्तदभावः । प्लुतोदात्तस्य तु नायं निषेधः; तस्य असिद्धत्वात्[6] । केचित्तु अनन्तिकशब्देन यन्न दूरम्, नाप्यन्तिकम्, तदुच्यते, न तु अधर्मानृतादिन्यायेन[7] दूरमनन्तिकशब्दार्थः । एवं

1. अर्थैकत्वेन घ.
2. अतिप्रसङ्गस्य तादवस्थ्यम् क.
3. लौकिकवाक्यं घ.
4. समर्थसूत्रे भाष्ये क.
5. नातिव्याप्तिः क. ख. घ.
6. इति क. अधिकम् ।
7. -नृता इति न्या- घ.

हि 'दूरे' इत्येव ब्रूयात् । एवं च न अत्र एकश्रुतिप्रसङ्गः[1] । प्लुतोऽपि नोदाहर्तव्य इति । पक्षद्वयमप्येतत् भाष्यादौ स्थितम् ॥

## [३९१] ॥ सुबामन्त्रिते पराङ्गवत् स्वरे ॥
(2—1—2)

सुबन्तमामन्त्रितान्ते परतः परस्य—तस्यैव अमन्त्रितान्तस्य, अङ्गवत्—अवयववत्, स्यात् स्वरलक्षणे कर्तव्ये । तादात्म्यातिदेशोऽयम् । सुबामन्त्रितसमुदाये[2] एकस्मिन् आमन्त्रिते सम्पन्ने यः स्वरः कर्तुं शक्यते, स कर्तव्य इति फलितम् । तेन आमन्त्रितनिघातः आमन्त्रिताद्युदात्तत्वं च सुबामन्त्रितसमुदायस्य भवति । 'उदेनमुत्तरान्नयाग्ने घृतेनाहुत' । 'घृतेनाहुत' इति सुबामन्त्रितसमुदायस्य निघातः ; पदात् परत्वात् । 'मरुतां पितस्तदहं गृणामि' । अत्र 'मरुतां पितः' इति तादृशसमुदायस्य षाष्ठमाद्युदात्तत्वम् । सुबिति किम् ? 'पीड्ये पीड्यमान' । पीड अवगाहने । चुरादिणिच् । कर्मणि लट उत्तमपुरुषैकवचनमिट् । यकि णिलोपः । 'तास्यनुदात्तेत्' इति इट् अनुदात्तः । यकः प्रत्ययस्वरः । एकादेशस्वरेण 'पीड्ये' इत्यन्तोदात्तम् । पीड्यमानस्य आमन्त्रितनिघातः । पराङ्गवद्भावे तु समुदायस्य आदिरुदात्तः स्यात् । न च अत्र सामर्थ्याभावः ; सम्बोधनपदस्य क्रियाविशेषणत्वेन पीड्यमानसम्बोधनिका क्रिया इत्यन्वयात् । आमन्त्रित इति किम् ? 'गेहे गार्ग्यः' । गेहशब्द उञ्छादिः अन्तोदात्तः । एकस्याम् आसनादिकायां क्रियायामुभयोरपि कारकत्वात्तद्द्वारेण[3] अस्ति सामर्थ्यमिति हरदत्तः । परग्रहणं पूर्वस्य अङ्गवन्मा भूदिति । 'गार्ग्यः कुण्डेनाटन्' । अत्र 'कुण्डेन' इत्यस्य न पूर्वाङ्गवद्भावः । छन्दसि

1. ऐकश्रुत्यप्रसङ्गः घ.
2. 'सुबामन्त्रितसमुदाये' इत्यादि 'आमन्त्रिताद्युदात्तत्वं च' इत्यन्तं घ. नास्ति ।
3. तद्द्वारेण नासामर्थ्यम् घ.

तु परमपि पूर्वस्य अङ्गवदिष्यते । 'आ ते॑ पितर्मरुताम्' । अत्र 'मरुताम्' इत्यस्य 'पितः' इत्यामन्त्रिताङ्गवद्भावात्[1] निघातः । 'वृ॒णी॒ष्व दुहितर्दिवः' । अङ्गग्रहणाभावे कार्यातिदेशोऽयं स्यात् 'सुबन्तं परवत् कार्यं लभते' इति, कार्यस्य प्राधान्यात् । ततश्च यत्र पादादिरामन्त्रितम्, तत्र आमन्त्रितस्य सुबन्तस्य च इति द्वयोरपि[2] आद्युदात्तत्वं स्यात् इत्यङ्गग्रहणं तादात्म्यातिदेशलाभाय । परत्र परशब्दप्रयोगादेव वत्यर्थलाभे किमर्थं वत्करणम् ? [3]स्वाश्रयमपि यथा स्यात्, 'आम् कुण्डेनाटन्' इत्यत्र 'आम एकान्तरमामन्त्रितमनन्तिके' इत्येकान्तरता भवति, इति वृत्त्यादौ । एवं च अत्र स्वाश्रयमेकान्तरत्वमाश्रित्य निघाते निषिद्धे '[4]अटन्' इत्यस्य आद्युदात्तत्वं प्राप्तम् । तस्यां च दशायां 'कुण्डेन' इत्यस्य अनुप्रवेशात् समुदायस्य आद्युदात्तत्वम् इति हरदत्तः । स्वरग्रहणं[5] किम् ? षत्वणत्वादिकं प्रति पराङ्गवद्भावो मा भूत् । अन्यथा 'कूपे सिञ्चन्' 'चर्म नमन्' इत्यत्र षत्वणत्वे स्याताम्; पराङ्गवद्भावेन[6] ऐकपद्यात् । 'घृतेनाहुत' इत्यादौ पराङ्गवद्भावेन प्रातिपदिकानुप्रवेशात् 'सुपो धातु' इति सुब्लुक् स्यात् । अत्र[7] भाष्यम्—स्वाश्रयं पदादित्वमादाय 'सात् पदाद्योः' इति निषेधान्न षत्वप्रसङ्गः । 'पूर्वपदात् संज्ञायामेव' इति नियमान्न णत्वप्रसङ्गः । पूर्वं पदं पूर्वपदम् इति योगाश्रयणात् । 'पराङ्गवत्' इत्यत्र परग्रहणेन सन्निधानात् आमन्त्रितपरामर्शात् तस्य सुबन्तैकान्ततया सुबन्तकार्य एव पराङ्गवद्भावात् न सुब्लुक्-प्रसङ्ग इति । उक्तसन्निधानादेव आमन्त्रितप्रयुक्तकार्यं प्रति पराङ्गवद्भावा-

---

1. अङ्गवत्त्वात् घ.
2. द्वयोरनुदात्तत्वं घ.
3. स्वाश्रयणमपि घ.
4. आटन् क.
5. स्वरे किम् ? घ.
6. पराङ्गवत्त्वेन घ.
7. अत्र घ. नास्ति ।

श्रयणान्न कश्चिद्दोष इति कौस्तुभे । एवं च स्वरग्रहणं न कर्तव्यम् इति स्थितम् ।

अत्र वार्तिकम्—

## (वा) ॥ षष्ठ्यामन्त्रितकारकवचनं तन्निमित्तग्रहणं वा ॥

इति । षष्ठ्यन्तम्, आमन्त्रितान्तवाच्यक्रियां[1] प्रति यत् कारकम् तच्च पराङ्गवद्भवति नान्यत् इत्यर्थः । तेन 'क्षत्रेणाग्ने स्वायुः सꣳरभस्व मित्रेणाग्ने मित्रधेये यतस्व' 'मरुद्भिरिन्द्र सख्यम्' 'ऋतेनाग्न आयुषा वर्चसा' इत्यादौ [2]न पराङ्गवद्भावः ; 'क्षत्रेण' इत्यादेः उक्तान्यतररूपत्वाभावात् । न च सामर्थ्याभावादेव अत्र अतिप्रसङ्गाभावः ; क्रियाद्वारकस्य व्यपेक्षासामर्थ्यस्य सत्त्वात् इति कैयटः । अत्र च 'गोषु स्वामी' इत्यादौ पराङ्गवद्भावो न स्यात् ; शैषिकसप्तम्यन्तस्य अषष्ठ्यन्तत्वात् अकारकत्वाच्च इत्यस्वरसात् 'तन्निमित्तग्रहणं वा' इति वार्तिकम् । तस्य आमन्त्रितार्थस्य यन्निमित्तं तदेव पराङ्गवत् इत्यर्थः । स्वामित्वस्य गोनिमित्तकत्वान्न अत्र[3] अव्याप्तिः । 'क्षत्रेणाग्ने' इत्यादावपि नातिप्रसङ्गः ; तन्निमित्तत्वाभावादिति भाष्यादौ । कौस्तुभे तु स्थितम्—तन्निमित्तग्रहणं मास्तु, [4]समर्थानुवृत्त्यैव 'ऋतेन मित्रावरुणावृतावृधावृतस्पृशा क्रतुं [5]बृहन्तमाशाथ' इत्यादौ अतिप्रसङ्गनिरासस्य सिद्धत्वात् । 'ऋतेन' इत्यस्य 'आशाथ' इत्याख्यातेन अन्वयात् 'मित्रावरुणौ' इत्यस्य तस्य च परस्परासामर्थ्येन पराङ्गवद्भावाभावात् । तन्निमित्तग्रहणपक्षे 'मित्रावरुणौ' इत्यस्य [6]पराङ्गवद्भावो न स्यात् । ऋतस्य

1. आमन्त्रितवाच्यक्रियां घ.
2. 'न पराङ्गवद्भावः' इत्यादि 'पराङ्गवद्भावो न स्यात' इत्यन्तं घ. नास्ति ।
4. सामर्थ्यानु- क.
5. स्पृशन्त- घ.
6. अपराङ्ग- क.

वर्धयितारौ इत्यर्थे अन्तर्भावितण्यर्थाद्वृधेः क्विपि 'अन्येषामपि दृश्यते' इति पूर्वपदस्य दीर्घे सति 'ऋतावृधौ' इति व्युत्पादितम् । न च [1]तत्र मित्रावरुणौ निमित्तम् । न च मा भूत् पराङ्गवद्भाव इति वाच्यम् ; 'ऋतावृधौ' इत्यस्य निघातानापत्तेः, द्वितीयपादादित्वात्, शुतुद्रिवत् । अत एव अत्र वेदभाष्यकारैरपि 'तन्निमित्तग्रहणं मास्तु, सूत्रेणैव सकलेष्टसिद्धेः[2]' इत्युक्तम् । एवं च 'मित्रावरुणौ' इत्यस्य समर्थत्वेन पराङ्गवद्भावात् 'ऋतावृधौ' इति न पादादिः । अतो निहन्यत एव । न च सर्पिष्कालकादिसिद्धये[3] 'इसुसोः सामर्थ्ये' इत्यत्र[4] पठितम् 'समानाधिकरणमसमर्थवद्भवति' इत्येतदिह[5] प्रवर्तते ; 'सर्पिष्पीयते' इत्यादिसिद्धये 'अधात्वभिहितम्' इति[6] विशेषितत्वात् । इह धात्वभिहितत्वात् । न चैवं शुतुद्रिपदमपि निहन्येत, पूर्वस्य सरस्वतिशब्दस्य पराङ्गवद्भावेन अपादादित्वादिति वाच्यम् ; 'सचत' इत्यनेन सर्वेषामन्वयेऽपि परस्परमसामर्थ्यात् । नन्वेवमपि[7] 'आमन्त्रितं पूर्वमविद्यमानवत्' इत्यविद्यमानवत्त्वात् 'मित्रावरुणौ' इत्यस्य कथं पराङ्गवद्भावः[8] ? मैवम् ; परस्य हि कार्ये कर्तव्येऽविद्यमानवद्भावः, न तु स्वकार्येऽपि, पूर्वग्रहणवैयर्थ्यापत्तेः । न च पराङ्गवद्भावः परस्य कार्यम्, किं तु स्वस्य । ननु एवमपि मित्रावरुणौपदस्य[9] पराङ्गवत्त्वात् पादादित्वेन 'अपादादौ' इति पर्युदासः स्यादिति [10]चेत्—न ह्ययं कार्यस्य अतिदेशः, किं तु तादात्म्यस्य । तस्मिंश्च अतिदिष्टे विशिष्टमामन्त्रितम् इति बुद्ध्या यद्यत् कर्तुं शक्यं तत् क्रियते । किं च कार्यातिदेशेऽपि अशास्त्रीयस्य दौर्लभ्यम्, किमुत तादात्म्यातिदेशे

1. तत्र क. नास्ति ।
2. -सिद्धिः घ.
3. सर्पिष्कालिकादिसिद्धये क.
4. अत्र क. नास्ति ।
5. न ङ. अधिकम् ।
6. इत्यादि- क.
7. अपि क. नास्ति ।
8. पराङ्गवत्त्वलाभः क.
9. -वरुणशब्दस्य क.
10. चेन्न क. ङ.

इति । यद्यपि 'ऋतेन मित्रावरुणौ' इत्यादावपि कैयटोक्तरीत्या क्रियाद्वारकं व्यपेक्षासामर्थ्यमस्त्येव, तथापि साक्षाद्व्यपेक्षाविरहादेव अतिप्रसङ्गनिरासे किं तन्निमित्तग्रहणेन इत्याशयः । यत्तु 'तन्निमित्तग्रहणे 'मित्रावरुणौ' इत्यस्य पराङ्गवद्भावो न स्यात्' इत्युक्तम्, तत्र केचिदाहुः—'मद्राणां राजन्' 'गोषु स्वामिन्' इत्यादौ राजत्व-स्वामित्वादेः प्रवृत्तिनिमित्तस्य मद्रादिनिमित्तकत्वमात्रेण 'तन्निमित्तग्रहणं वा' इति वार्त्तिकविषयत्वस्य भाष्यादौ प्रदर्शनात् तन्न्यायेन ऋतस्य वर्धनायां मित्रावरुणयोर्निमित्तत्वमाश्रित्य तन्निमित्तग्रहणपक्षेऽपि सुवचः पराङ्गवद्भाव इति ॥

## (वा) सुबन्तस्य पराङ्गवद्भावे समानाधिकरणस्योपसंख्यानमनन्तरत्वात् ॥

'तीक्ष्णेन परशुना वृश्चन्' । इह 'तीक्ष्णेन' इत्यस्य आमन्त्रितान्तरस्यापि[1] पराङ्गवद्भावो वार्त्तिकलभ्यः । न च परस्य पराङ्गवद्भावेन आमन्त्रितेन एकीभावे 'तीक्ष्णेन' इत्यस्यापि तदानन्तर्यम् इति वाच्यम्; स्वरग्रहणेन स्वर एव पराङ्गवद्भावेन आनन्तर्ये पराङ्गवत्त्वाभावात् । न च स्वरार्थमानन्तर्यं स्वरशब्द-ग्राह्यम्; गौणग्रहणे मानाभावादिति कैयटः । स्वरग्रहणप्रत्याख्यान-पक्षे तु आनन्तर्येऽपि पराङ्गवद्भावादिष्टसिद्धेर्वार्त्तिकं न कर्तव्यम् ॥

## (वा) अव्ययानां प्रतिषेधो वक्तव्यः ॥

'उच्चैरधीयान' । 'नीचैरधीयान[2]' । 'उच्चैर्नीचैश्शब्दौ स्वरादिषु आन्तोदात्तौ पठितौ' इति कैयटहरदत्तौ[3] । अव्ययीभावस्य तु नायं

---

1. अनामन्त्रितस्यापि क.
2. अधीयानः क.
3. पठिताविति कैयटहरदत्तौ क. नास्ति ।

प्रतिषेधः ; 'अव्ययीभावस्य अव्ययत्वे प्रयोजनं लुङ्मुखस्वरोपचाराः' इति परिगणनात् अन्यत्र अव्ययत्वाभावात् । 'उपाग्न्यधीयान' ॥

## [३९२] ॥ आमन्त्रितं पूर्वमविद्यमानवत् ॥

(8—1—72)

पूर्वशब्दस्य सम्बन्धिशब्दत्वात् परम् इति लभ्यते । पूर्वम् आमन्त्रितम् अविद्यमानवत् परस्य कार्ये कर्तव्ये । तेन 'स्वान भ्राजाङ्घारे बम्भारे हस्त सुहस्त कृशानो' इत्यत्र 'स्वान' इत्यस्य अविद्यमानवत्त्वेन पदात् परत्वाभावात् 'भ्राज' इत्यादीनां षण्णामामन्त्रितानां न[1] निघातः । स्वानादयश्च सोमरक्षका देवाः । तथा च ब्राह्मणम्—'स्वानभ्राजेत्याहैते वा अमुष्मिँल्लोके सोममरक्षन्' इति । अतः सामानाधिकरण्याभावात् 'नामन्त्रिते समानाधिकरणे' इति निषेधो न शङ्क्यः । 'इडे रन्तेऽदिते सरस्वति प्रिये प्रेयसि महि विश्रुति' । अत्रापि 'इडे' इत्यस्य अविद्यमानवत्त्वात् 'रन्ते' इत्यादीनां न निघातः । 'इडे' इत्यादयः शब्दाः पर्यायाः, न तु एषु कश्चित् सामान्यवचनः, कश्चिच्च विशेषवचनः । तथा च वाक्यशेषः—'एतानि ते अघ्निये नामानि' इति । असति पूर्वग्रहणे 'स्वान' इत्यादिकमामन्त्रिताद्युदात्तत्वलक्षणस्वकार्येऽपि असिद्धं स्यात् । न चैवं तस्य निरवकाशत्वम् ; यत्र वक्ष्यमाणसूत्राभ्याम् अविद्यमानवत्त्वनिषेधः तद्विकल्पो वा, तस्य पादाद्यामन्त्रितस्य च तदवकाशत्वात् । 'अपादादौ' इत्यधिकारेण पादाद्यामन्त्रितस्य अविद्यमानवत्त्वाभावात् । आपादपरिसमाप्तेः 'अपादादौ' इत्यधिक्रियत इति वृत्तिकृदुक्तेः ।

1. न घ. नास्ति ।

अत एव 'पित॑रः पिताम॒हाः' इत्यादौ 'पित॑रः' इत्यस्य पादादित्वेन अविद्यमानवत्त्वाभावात् पितामहादीनामनुदात्तत्वम् । हरदत्तेनापि अत्र 'अपादादौ' इत्यधिकारमभ्युपगम्य, 'उषो[1] नो अद्य सुभगा व्युच्छ' 'इन्द्र त्वा वृषभं वयम्' इत्यादौ युष्मदस्मदादेशं तदुपष्टम्भकत्वेन उपन्यस्य, "यद्यप्येवम् 'इन्द्र॒ पिब॒ वृष॑धूतस्य॒ वृष्णः॑' 'वायो॑ याहि शिवा दिवः' इत्यादौ 'पिब' इत्यादीनां निघातप्रसङ्गः[2] ; तथापि कर्तव्योऽत्र यत्नः" इत्युक्तत्वाच्च । अतः पूर्वग्रहणम् 'परस्य कार्ये कर्तव्ये अविद्यमानवत्, न तु स्वकार्ये' इति लाभार्थं क्रियते । न चैवम् 'इ॒मं मे॑ गङ्गे' इत्यादौ 'गङ्गे' इत्यस्य अविद्यमानवत्त्वात् 'यमुने' इत्यादेः[3] निघातो न स्यादिति वाच्यम् ; मेशब्दात् परत्वमादायैव तस्यापि[4] निघातात् । न च तदा 'गङ्गे' इत्यनेन व्यवधानम्, परं प्रत्येव अविद्यमानवत्त्वादिति वाच्यम् ; परस्य कार्ये कर्तव्ये अविद्यमानवत्, तच्च कार्यं स्वनिमित्तकम् अन्यनिमित्तकं वा इत्याश्रयणात् । अथ 'आमन्त्रितमविद्यमानम्[5]' इत्येवास्तु, परत्र परशब्दप्रयोगादेव 'गोतो णित्' इत्यादाविव वत्यर्थलाभात् । अत्र हरदत्तः—'आम्, भो देवदत्ताः' इत्यत्र स्वाश्रयमेकान्तरत्वम् आश्रित्य 'आम एकान्तरमामन्त्रितम्' इति [6]निघातनिषेधो यथा स्यात् । देवदत्ता इति बहुवचनान्तम् । तेन 'विभाषितं विशेषवचने बहुवचनम्' इति अविद्यमानवद्भावविकल्पात् अस्त्यत्र[7] निघातप्रसङ्गः । यद्यपि आतिदेशिककार्याविरुद्धं स्वाश्रयम् अतिदेशेषु असत्यपि वत्करणे भवति । इह तु वत्करणाद्यत्नात् विरुद्धमपि क्वचित् प्राप्यते । अविद्य-

---

1. उषा ङ. वर्जं सर्वत्र
2. पिबेत्यादीनां इत्यादि 'मे गङ्गे' इत्यन्तं घ. नास्ति ।
3. इत्यादीनां घ.
4. अपि घ. नास्ति ।
5. अविद्यमानवत् ख.
6. निघात- घ. नास्ति ।
7. अस्त्यात्र घ.

मानवत्त्वविरोधिनी हि एकान्तरता । व्याख्यानाच्च अतिप्रसङ्गो नोद्भावनीय इति ॥

## [ ३९३ ] ॥ नामन्त्रिते समानाधिकरणे सामान्यवचनम् ॥ (8—1—73)

समानाधिकरणे आमन्त्रितान्ते परतः[1] सामान्यवचनं विशेष्यवाचि आमन्त्रितं न अविद्यमानवत् भवति । 'अग्नेऽदब्धायोऽशीततनो' । 'अग्ने तेजस्विन्' । 'पृथिवि देवयजनि' । 'अग्ने दुध्र गह्य किंशिल वन्य या त इषुः' । अत्र अग्नेपृथिवीपदयोः[2] विद्यमानत्वेन पदात् परत्वात् 'अदब्धायो' इत्यादि निहन्यते । यद्यपि अत्र दुध्रादीनां नाविद्यमानवत्त्वनिषेधः, भिन्नार्थत्वेन सामानाधिकरण्याभावात्[3], तथा च ब्राह्मणम्—'पञ्च वा एतेऽग्नयो यच्चितय उदधिरेव नाम प्रथमो दुध्रो द्वितीयो गह्यस्तृतीयः किंशिलश्चतुर्थो वन्यः पञ्चमः' इति, तथापि दुध्रशब्दसामानाधिकरण्यात् अग्निशब्दस्य अविद्यमानवत्त्वनिषेधे तमादायैव गह्यादीनामपि[4] निघातः । मेशब्दमादायैव 'यमुने' इत्यादेरिवेति दिक् । आमन्त्रित इति[5] किम् ? 'देवदत्त पचसि' । सामान्यवचनमिति[6] किम् ? 'इडे रन्तेऽदिते' । एषां न सामान्यविशेषभावः, किं तु पर्यायता इत्युक्तम् । समानाधिकरणपदं चिन्त्यप्रयोजनम् ; सामान्यवचनशब्देन विशेषवचनस्य आक्षेपात्, सामान्यविशेषभावस्य सामानाधिकरण्यनियतत्वेन अनतिप्रसङ्गात् इति[7] ॥

---

1. परे घ.
2. -पदयोः घ. नास्ति ।
3. -करण्याद्यभावात् घ.
4. अपि घ. नास्ति ।
5. इति घ. नास्ति ।
6. इति घ. नास्ति ।
7. इति घ. नास्ति ।

इति दिक् ङ.

## [३९४] ॥ विभाषितं विशेषवचने ॥

(8—1—74)

'बहुवचनम्' इति भाष्ये दृष्टम् वृत्तिकृता सूत्रे प्रक्षिप्य पठितम् । विशेषवचनम् अर्थगतविशेषाकारबोधकम्, विशेषणवाचकम् इतियावत् । तस्मिन् समानाधिकरणे आमन्त्रितान्ते परतः[1] पूर्वमामन्त्रितान्तं[2] सामान्यवचनं बहुवचनान्तं विद्यमानवत्[3] वा भवति । 'देवा॑ गातुविदो गातुं वि॒त्वा' । 'आपो॑ देवीरग्रेपुवो अग्रेगुवः' । बहुवचनग्रहणेन एकवचनान्तस्य पूर्वेण नित्यमेव[4] अविद्यमानवद्भाव-निषेधो भवति । सामान्यवचनाधिकारादेव विशेषवचनपरिग्रहे सिद्धे विशेषवचनग्रहणं[5] विस्पष्टार्थम् । यत्तु स्वरमञ्जर्यां प्रकृतसूत्रस्य उदाहृतम् " 'पित॑रः पितामहाः परेऽवरे॒ तता॑स्तततामहा इ॒ह मा॑वत' 'पितरः' इत्यस्य अविद्यमानवत्त्वविकल्पात् पितामहादेः अनुदात्तत्वम्" इति, तदसत्; 'पित॑रः' इत्यस्य पादादित्वेन अविद्यमानवत्त्वाप्रसक्तेः । सामानाधिकरण्यसामान्यविशेषभावयोरभावेन प्रकृतसूत्रनिषेधाप्रवृत्तेश्च । एवं ह्ययं मन्त्रो वेदभाष्ये व्याख्यातः— पितरः उत्पादयितारः । तेषां पितरः पितामहाः ॥

'लेपभाजश्चतुर्थाद्याः[6] पित्राद्याः पिण्डभागिनः ।
सपिण्डता तु पुरुषे सप्तमे विनिवर्तते ॥'

इति स्मरणात् सप्तमात् ऊर्ध्वं ये विप्रकृष्टाः, ते परे । ततोऽर्वाचीनाः सन्निकृष्टा अवरे । येभ्यः पिण्डो दीयते ते

---

1. आमन्त्रिते परे घ,
2. आमन्त्रितम् घ.
3. अविद्यमानवत् क.
4. नित्य एव घ.
5. विशेषग्रहणं घ.
6. लेपभाजश्च—तथा हि—पित्राद्याः घ.

ततः पित्रादयः[1] । तेषां पितरः ततामहाः, ये न पृथक् पिण्डभाजः । सर्वे[2] यूयम् इह कर्मणि वर्तमानं माम् अवत रक्षत । पितृततशब्दयोः पादादित्वात् षाष्ठम् आद्युदात्तत्वम्, अन्येषां निघातः—इति । पादादित्वादेव पितृततशब्दयोर्न अविद्यमानवत्त्वम् ; 'आमन्त्रितं पूर्वमविद्यमानवत्' इत्यत्र 'अपादादौ' इत्यधिकारादित्याशयः । यत्तु 'अग्ने यष्टरिदं नमः' इत्यत्र वेदभाष्यम्—पादादित्वात् 'अग्ने' इति न निहन्यते, तस्य 'आमन्त्रितं पूर्वम्' इत्यविद्यमानवत्त्वात् 'यष्टः' इति च न निहन्यते इति, तच्चिन्त्यम् ; पादादावविद्यमानवत्त्वाभावात् । तथात्वेऽपि अत्र 'नामन्त्रिते समानाधिकरणे' इति निषेधाच्च । एतेन 'बृहस्पते धारया वसूनि' इत्यत्र 'आमन्त्रितस्य अविद्यमानवत्त्वात् तिङ्निघाताभावः' इत्यपि वेदभाष्यं चिन्त्यम् ; पादादित्वात् । स्वरनिर्वाहस्तु व्यत्ययात् । " 'अग्ने पृथिवीपते' 'सोम वीरुधां पते' इत्यादौ[3] 'नामन्त्रिते समानाधिकरणे' इति पूर्वामन्त्रितस्य[4] अविद्यमानवत्त्वनिषेधः । 'सुबामन्त्रिते' इति षष्ठ्यन्तानां परामन्त्रितानुप्रवेशः" इति वेदभाष्यम् । स्वरमञ्जर्यामपि 'वीरुधां पते' इत्यादिकं पराङ्गवद्भावस्य उदाहृतम् । ननु इह[5] 'सोम' इत्यादीनामामन्त्रितानां कथमविद्यमानवत्त्वनिषेधः ? 'वीरुधाम्' इत्यादिषष्ठ्यन्तव्यवधानेन आमन्त्रितपरत्वाभावात् । न च षष्ठ्यन्तानां पराङ्गवत्त्वात् आमन्त्रितानन्तर्यम् ; स्वरे अवधारणेन आनन्तर्ये पराङ्गवत्त्वविरहात् । अत एव समानाधिकरणस्य उपसंख्यानमारब्धम् । एवं च 'सोम' इत्यादीनाम् अविद्यमानवत्त्वे पदात् परत्वाभावात् कथम् 'वीरुधां पते' इत्यादिसमुदायस्य

---

1. पित्रादयः घ. नास्ति ।
2. ते ङ. अधिकम्
3. सर्वत्र क. अधिकम् ।
4. पूर्वस्यामन्त्रितस्य क. ङ.
5. इह कं. नास्ति ।

पराङ्गवद्भावेन निघातः ? न च 'अग्ने पृथिवीपते' इत्यत्र 'अग्ने' इत्यस्य अविद्यमानवत्त्वनिषेधे तदादायैव 'वीरुधां पते' इत्यादेः पदात् परत्वम्[1] इति वाच्यम् ; तस्य भिन्न-वाक्यस्थत्वात् । अन्यथा 'सोम' इत्यादेरपि निघातापत्तेरिति । अत्र ब्रूमः—स्वरग्रहणप्रत्याख्यानपक्षे आनन्तर्येऽपि पराङ्गवद्भावात् 'सोम' इत्यादीनामविद्यमानत्त्वनिषेधादिष्टसिद्धिरिति । अथ कथम् 'यदापो अघ्निया वरुणेति शपामहे ततो वरुण नो मुञ्च' इत्यत्र 'आपः' इत्यादेरनिघातः ? अत्र वेदभाष्यम्—'अयं हि मन्त्रार्थः—हे वरुण ! ततः पापात् अस्मान्[2] मुञ्च । कुतः ? शोकाभितप्ता वयम् । हे आपः ! हे अघ्नियाः ! हे वरुण ! इति [3]शपामहे [4]शापेन पापमुपार्जितम्, तस्मादपीति । शापो हि प्रशस्तदेवतासङ्कीर्तनेन परेषामनर्थाशंसनम् । एवं च 'आपः' इत्यादेः अनुकरणत्वात्[5] अनिघातः' इति । 'सिनीवालि पृथुष्टुके' इत्यादौ व्यत्ययात् 'पृथुष्टुके' इत्यादेरनिघातः । न च पूर्वस्य अविद्य-मानवत्त्वम् ; पादादित्वात् । भट्टोजियज्वभिस्तु 'आमन्त्रितं पूर्वम्' इत्यत्र 'अपादादौ' इत्यधिकारमनाश्रित्य व्यवहृतम् । अत एव 'द्रवत्पाणी शुभस्पती' इत्यत्र शुभेः क्विबन्तात् षष्ठ्यन्तस्य 'शुभः' इत्यस्य[6] पराङ्गवद्भावात् आमन्त्रिताद्युदात्तत्वम् । न च आष्टमिको निघातः शङ्क्यः ; पूर्वामन्त्रितस्य अविद्यमानवत्त्वेन पादादित्वात् इति सिद्धान्तकौमुद्यामुक्तम् । मनोरमायामपि—'अग्ने भ्रातः सहस्कृत रोहिदश्व शुचिव्रत' इत्यस्याम्[7] ऋचि 'शुचिव्रत' इत्येतद्विशेष्यत्वेन विवक्षितम् । तेन 'अग्ने' इत्यस्य 'नामन्त्रिते समानाधिकरणे' इत्यविद्यमानवद्भावनिषेधाभावात् 'भ्रातः' इत्यस्य नानुदात्तता—

1. परत्यात् क.
2. अस्मान् घ. नास्ति ।
3. यच्छपामहे क.
4. यच्छापेन क.
5. अनुकरणत्वात् घ. नास्ति ।
6. 'शुभः' इत्यस्य घ. नास्ति ।
7. अस्यामृचि 'शुचिव्रत' घ. नास्ति ।

इत्युक्तम् । एतन्मते च 'अग्ने यष्टरिदं नमः' इत्यत्रत्यं वेदभाष्यमुपपन्नम् ; पादादावपि अविद्यमानवत्त्वात् । 'यष्टः' इत्येतदेव विशेष्यत्वेन विवक्षितम् इति 'नामन्त्रिते समानाधिकरणे' इति न निषेधः । 'सिनीवालि पृथुष्टुके' इत्यादावपि व्यत्ययं विनैव इष्टसिद्धिः । 'पितरः पितामहाः' इत्यादौ व्यत्यय एव शरणम् इति दिक् ॥

॥ इति सुबन्तसर्वानुदात्तप्रकरणम् ॥

---

## ॥ अथ तिङन्तसर्वानुदात्तप्रकरणम् ॥

### [३९५] ॥ तिङ्ङतिङः ॥ (8—1—28)

अतिङन्तात् पदात् परस्य अपादादिस्थस्य[1] तिङन्तस्य सर्वोऽच् अनुदात्तो भवति । 'सा नो देवी सुहवा शर्म यच्छतु' । 'यूयं पात स्वस्तिभिः सदा नः' । यत्तु अत्र भाष्यादौ 'अतिङः' इति पञ्चमीनिर्देशात् 'आदेः परस्य' इति आदेः अनुदात्तत्वं[2] स्यात् । ततश्च यत्र तिङन्ते आदिरुदात्तः 'शर्म यच्छतु' इत्यादौ तत्रैव इदमनुदात्तत्वं स्यात् । 'यूयं पात' इत्यादौ प्रत्ययस्वरेण अन्तोदात्ते तिङन्ते न स्यात् इत्याशङ्क्य, 'पदस्य' इत्यनुवृत्तस्य अवयवषष्ठ्यन्तत्वाश्रयणात् अतिङन्तात् परस्य तिङन्तस्य[3] अवयवोऽनुदात्त इत्यर्थलाभात् 'आदेः परस्य' इत्यादेरिह अप्रवृत्तिरिति[4] परिहृतम्, तत्

---

1. अपादादौ वर्तमानस्य क. ङ.
2. अनुदात्तता घ.
3. पदस्य घ. अधिकम् ।
4. अप्रवृत्तेरिति क.

'स्वरविधौ सङ्घातः कार्यी' इति परिभाषाविरुद्धम् इत्युक्तम् । केचित्तु 'स्वरविधौ सङ्घातः कार्यी' इति परिभाषा षाष्ठस्वर-विषयैव, उक्तभाष्यादिव्यवहारबलात् । अत एव 'उदात्तादनु-दात्तस्य स्वरितः' इत्यादौ नेयं परिभाषा प्रवर्तते । तेन 'दधि' इत्यादौ उक्तसूत्रेण स्वरितः 'आदेः परस्य' इति धकारेकारस्य भवति । अन्यथा 'हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवत्' इति पक्षे, न विद्यते उदात्तो यस्य समुदायस्य, उदात्तात् परस्य तस्य[1] स्वरित इत्युक्तस्वरितविधिसूत्रार्थस्य भाष्ये प्रदर्शनात् 'दधि[2]' इत्यत्र धिशब्दस्य सर्वस्य[3] स्वरितादेशः प्रसज्येत इति वदन्ति । अत्र पक्षे सर्वग्रहणानुवृत्त्या तिङन्तस्य सर्वानुदात्तत्वं बोध्यम् । अपादादौ किम् ? 'सप्त त्वा हरितो रथे वहन्ति देव सूर्य' । 'वहन्ति' इत्यत्र धातुस्वरः । अदुपदेशाल्लसार्वधातुकमनु-दात्तम् । शप् पित्त्वादनुदात्तः । 'अपाम सोमममृता अभूमादर्म ज्योतिरविदाम देवान्' इत्यादौ तु[4] समानवाक्यस्थपदात् परत्वाभावादपि अनिघातः[5] । अतिङ्ग्रहणं तु व्यर्थम् ; तिङन्तात् परस्य तिङन्तस्य समानवाक्यस्थपदात् परत्वाभावेनैव [6]निघाताभावात् । वार्तिककृता अत्र समानवाक्याधिकारात् 'आख्यातं साव्ययकारकम्' इति वाक्यसंज्ञायाम् 'आख्यातम्' इत्येकत्वस्य विवक्षिततत्वेन तद्भेदे वाक्यभेदावश्यम्भावात् । तदुक्तम् 'अतिङ्-ग्रहणमनर्थकम्, समानवाक्याधिकारात्' इति । 'यद्ब्रूयाद्द्विषेरिति यज्ञस्थाणुमृच्छेद्वृधात्वित्याह' इत्यादौ तिङः परमपि तिङन्तं निहन्यते ; मन्त्रे अनुदात्ततया पठितस्य तिङस्तथैव ब्राह्मणेन[7] अनुकरणात्' इति वेदभाष्यम् । 'पाहि यज्ञं पाहि यज्ञपतिम्'

---

1. तस्य क. नास्ति ।
2. अधि क.
3. सर्वस्य क. नास्ति ।
4. तु क. नास्ति ।
5. अननुदात्तः क.
6. अनिघातात् क.
7. तिङस्तथैव ब्राह्मणेन घ. नास्ति ।

इत्यादौ वाक्यभेदात् अनिघातः । एतेन अतिङ इति किम् ? 'सर्वं पाप्मानं तरति तरति ब्रह्महत्याम्' 'तं वागभ्यवदज्जुहुधीति' 'अन्वतिष्ठत जहि' इत्यादि प्रत्युदाहरन् स्वरमञ्जरीकारः प्रत्युक्तः । 'जुहुधि' इत्यत्र 'सेर्ह्यपिच्च' इत्यपिद्वद्भावात् प्रत्ययस्वरो युक्तः, तथापीह बहुलग्रहणात् प्रत्ययात् पूर्वं [1]उदात्त इत्याहुः । 'होतर्यज' इत्यादौ तिङ् न निहन्यते ; आमन्त्रितस्य अविद्यमानवत्त्वेन पदात् परत्वाभावात् । 'इदं देवाः शृणुतेति वाव' इत्यत्र 'देवाः' इत्यस्य अविद्यमानवत्त्वेऽपि[2] इदंशब्दमादाय तिङ्निघातः । अथ[3] 'विश्वेदेवाः शृणुतेम॑ हवं मे' इत्यत्र[4] कथं तिङ् न निहन्यते ? अत्र स्वरमञ्जरीकारः—आमन्त्रितयोः अविद्यमानवत्त्वात्—इति । तन्न ; पादादित्वेन अविद्यमानवत्त्वासम्भवात् । तथात्वेऽपि तत एव 'देवाः' इत्यस्यापि निघातानापत्तेश्च । यत्त्वत्रोक्तम्—'नामन्त्रिते समानाधिकरणे' इत्यविद्यामानवत्त्वनिषेधात् 'देवाः' इति[5] निहन्यत इति, तदप्यसत् ; तत एव तिङोऽपि निघातप्रसङ्गात् । यदपि तत्रोक्तम् 'यद्वा 'विश्वे देवाः' इत्युभयोः एकार्थत्वान्न सामान्यविशेषवचनत्वम् ; तथापि 'सुबामन्त्रिते' इति पराङ्गवद्भावात् ऐकशब्द्ये[6] सति 'आमन्त्रितस्य च' इति [7]षाष्ठमाद्युदात्तत्वम् इति, तदपि चिन्त्यम् ; [8]विश्वदेवशब्दयोर्न घटकलशशब्दवत्[9] एकार्थत्वम् ; [10]तथा प्रसिद्ध्यभावात् । तथा सति व्यपेक्षासामर्थ्याभावेन [11]त्वदभिमतपराङ्गवत्त्वायोगाच्च । वाक्ये व्यपेक्षा-

---

1. पूर्वमुदात्तं घ.
2. अविद्यमानवत्त्वेन क.
3. अथ क. नास्ति ।
4. विश्वेदेवा इत्यतः परं तिङन्तं कथं घ.
5. इत्यपि क.
6. ऐकस्वर्ये घ. ङ.
7. षाष्ठिकं क.
8. विश्वेदेव- घ.
9. -आदिशब्दवत् घ.
10. क्वापि तथा घ.
11. तदभिमतपराङ्गवद्भावाभावाच्च क.

सामर्थ्यम् इति तवैव वचनात् । अतः पृथग्विभक्तिश्रवणबलात् नीलघटशब्दयोरिव एकार्थत्वं वाच्यम् ; ततः कथं न सामान्य-विशेषवचनत्वम् ? अतः त्वद्रीत्या[1] 'नामन्त्रिते' इति निषेधात् तिङ्निघातो दुर्वार इति । अत्रोच्यते—पादादित्वेन 'विश्वे' इत्यस्य अविद्यमानवत्त्वाभावात् 'देवाः' इत्यस्य निघातः[2] । 'चादि-लोपे विभाषा' इति निषेधात् 'शृणुत' इति न निहन्यते ; हे विश्वेदेवाः ! इमं हवं शृणुत, अस्मिन्[3] बर्हिषि आसद्य मादयध्वं च' इति चार्थस्य गम्यमानत्वात् । ऐवमेव 'बृहस्पते सवितर्बोधयैनꣳसꣳशितं चित्सन्तराꣳसꣳशिशाधि' इत्यत्र आमन्त्रित-निघातः तिङन्तानिघातश्च बोध्यः ॥

## [३९६] ॥ न लुट् ॥ (8—1—29)

लुडन्तं न अनुदात्तं भवति । 'तिङ्ङतिङः' इति प्राप्तं निषिध्यते । 'श्वो यज्ञे प्रयोक्तासे' । युजिर् योगे । लुट् । 'प्रोपाभ्यां युजेः' इत्यात्मनेपदम् । मध्यमैकवचनम्[4] थास् । 'थासः से' । 'स्यतासी ललुटोः' इति तासिः । 'तासस्त्योः' इति सलोपः । 'तास्यनुदात्तेत्' इति लसार्वधातुकमनुदात्तम्[5] । तासिस्वरेण 'योक्तासे' इति मध्योदात्तं पदम् । 'तिङि चोदात्त-वति' इति गतिनिघातः । 'त्वयैनानाख्यातार इति' । नायं तृच् ; तद्योगे कर्मणिषष्ठीप्रसङ्गात् 'एनान्' इति द्विती-यानुपपत्तेः । नापि तृन् ; आद्युदात्तत्वाभावात् । अतो लुडेवायम् इत्याहुः । 'अन्वागन्ता यज्ञपतिर्वो अत्र' । लुडन्तोऽयम्

---

1. तस्य घ.
2. इति निहन्यते क. ङ.
3. तस्मिन् क.
4. मध्यमैकवचनं घ. नास्ति ।
5. लसार्वधातुकस्य अनुदात्तत्वे क

प्रकरणपर्यालोचनया भविष्यदर्थप्रत्ययात्[1] । 'लुटः प्रथमस्य डारौरसः' । डित्त्वाट्टिलोपः[2] । उदात्तनिवृत्तिस्वरेण अन्तोदात्तः । 'प्रातर्यष्टास्मह इति' । 'यजे यक्षि यष्टाहे च' । यजेर्लुटि महिङ् । द्वितीये इट् । 'ह एति' । तिङः[3] परत्वान्न[4] निघातः । आद्ये व्यत्ययादाद्युदात्तत्वम् । तत एव द्वितीये आद्यन्तौ उदात्तौ । यत्तु 'यमग्ने पृत्सु' इति मन्त्रे 'स यन्ता शश्वतीरिषः' इत्यत्र "यन्ता, यमयिता वशीकर्ता । 'न लुट्' इति निघातप्रतिषेधः" इति वेदभाष्यम्, तच्चिन्त्यम् ; लुडन्तत्वे उदात्तनिवृत्तिस्वरेण अन्तोदात्तत्वप्रसङ्गात् । तस्मात् तृन्नन्तमिदं बोध्यम् ॥

## [३९७] ॥ निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चण्कच्चिद्यत्रयुक्तम् ॥ (8—1—30)

'यत्' इत्यादीनां 'यत्र' इत्यन्तानां द्वन्द्वे तृतीयायाः सौत्रो लुक् । न तु युक्तशब्देन समासः ; 'निपातैः' इति विशेषणस्य अनन्वयापत्तेः । निपातैर्यदादिभिर्युक्तं तिङन्तं न निहन्यते । अत्र श्लोकौ—

'यद्यदार्थे च हेतौ च विचारे यदि चेच्चणः ।
हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः ॥
कच्चित् प्रश्ने नेन्निषिद्धे प्रशंसायां कुवित्स्मृतः ।
यत्राधारे निपातत्वं यदादीनां विशेषणम् ॥' इति

---

1. -प्रत्ययस्य 'लुटः घ.
2. टिलोपे उदात्त- ख. ग.
3. तिङः घ. नास्ति ।
4. न क. नास्ति ।

'यत्प्राचीनवꣳशं करोति'। विकरणस्वरः[1]। 'यदि कामयेत वर्षुकः'। [2]शप्पादद्रुपदेशात् परं लसार्वधातुकमनुदात्तम् इति [3]धातुस्वरः। 'हन्त करोति'। 'हन्ताहं [4]पृथिवीमिमाम् निदधानि' 'हन्त वै हवे' इत्यादौ व्यत्ययात्तिङ्निघात इति हरदत्तभट्टोजियज्व-प्रभृतयः। 'कुवित्सु नो गविष्टयेऽग्ने संवेषिषो रयिम्'। विषेः 'लिङर्थे लेट्' इति लेट्। सिप्। 'लेटोऽडाटौ' इति तस्य अडागमः। 'सिब्बहुलं लेटि' इति[5] सिप इडागमः। आगमयोरनुदात्तत्वाद्धातुस्वरः। 'नेदेष त्वदपचेतयातै'। 'विराजन्ने-द्विच्छिनदानीति'। चित सञ्चेतने। ण्यन्ताल्लेट्। तस्य तादेशः। शप्। 'लेटोऽडाटौ' इत्याडागमः। टेरेत्वम्[6]। 'वैतोऽन्यत्र' इति ऐकारः[7]। अदुपदेशाल्लसार्वधातुकानुदात्तत्वे[8] [9]धातुस्वरः। 'छिनदानि' इति छिदेर्लोडुत्तमैकवचनम्। 'मेर्निः'। 'आडुत्तमस्य पिच्च'। धातुस्वरेण श्नमुदात्तः। 'नेदेनमसुरा बलीयाꣳसोऽहन-न्निति' 'नेदेनं देवा अहनन्' इत्यादौ व्यत्ययान्निघात इत्याहुः। अत्र[10] हन्तेर्लिङि झिः। 'झोऽन्तः'। 'छन्दस्युभयथा' इत्यार्ध-धातुकत्वेन सार्वधातुकत्वाभावात्[11] 'सार्वधातुकमपित्' इति ङित्त्वा-भावात् 'गमहन' इति नोपधालोपः। 'एताश्चेद्वा अस्य देवता अन्नमदन्ति'। 'अन्यश्चेन्नाभिगच्छति'। 'तस्माच्चेन्न प्रमाद्यति'। 'नेत्' इति निपातसमुदायः; 'नेदेषः' इत्यादौ पदद्वयाध्ययनात्। एवम् 'चेत्' इत्यपि। 'चङ्' इति चेदर्थे वर्तमानश्चकारो गृह्यते।

---

1. विकरणस्वरः घ. नास्ति।
2. शपोऽदुपदेशाल्लसार्वधातुकानु-दात्तत्वे धातुस्वरः घ.
3. धातु- क. नास्ति।
4. ब्रवीमि मां रिदधानेहवे हवेत्यादौ क.
5. इति घ. नास्ति।
6. टेरेत्वम् घ. नास्ति।
7. इत्यन्त्यस्यैकारस्यैकारः घ.
8. अनुदात्ततायां घ.
9. चेतेत्यत्र धातुस्वरः ङ.
10. अत्र क. ङ. नास्ति।
11. सार्वधातुकत्वाभावात् क. नास्ति।

णकारस्तु तदर्थवर्तिनश्चशब्दस्य ज्ञापकोऽनुबन्धः । मर्यादाद्यर्थकस्य आकारस्य ङकरो यथा । 'त्वं च सोम नो वशो जीवातुं न मरामहे' । "हे सोम त्वं चेदस्मान् जीवातुं वशः उश्याः रक्ष्यत्वेन कामयेथाः, तर्हि न मरामहे न म्रियामहे इत्यर्थः । एवं चशब्दस्य अत्र[1] चेदर्थे [2]वृत्तेस्तद्युक्तस्य 'वशः' इति[3] तिङन्तस्य न निघातः" इति वेदभाष्यम् । वश कान्तौ । लिङर्थे लेट् । सिप् । 'इतश्च लोपः' इति इकारलोपे शब्लुक् । 'लेटोऽडाटौ' इत्यडागमे रुत्वविसर्गयोश्च 'वशः' इति रूपम् । धातुस्वरः । समुच्चयाद्यर्थकचशब्दयोगे[4] निघात एव । 'इन्द्रो वरुणो बृहस्पतिः सविता च पुनन्तु' । 'कश्चित् करोति' । 'यत्र यत्र कामयते' । ननु 'यद्येकं कपालं नश्येदेको मासः संवत्सरस्यानवेतः स्यादथ यजमानः प्रमीयेत यद्द्वे नश्येतां द्वौ मासौ संवत्सरस्यानवेतौ स्यातामथ यजमानः प्रमीयते' इत्यत्र 'नश्येत्' 'नश्येताम्' इत्यनयोः यद्यदिशब्दयोगादस्त्वनिघातः[5], 'स्यात्' स्याताम्' इति कथं न निहन्यत इति चेत्—अत्र स्वरमञ्जरीतद्विवरणयोः स्थितम्[6] "अयं हि अत्रार्थः—एकस्मिन् कपाले नष्टे संवत्सरस्यैको मासः अनवेतः अप्राप्त ऊनः स्यात् । अथ मासोनसंवत्सरानन्तरमेव, यजमानः प्रमीयेत नश्येत्—इति । एवं च अत्र हशब्दार्थे प्रसिद्धिरूपे गम्यमाने तदप्रयोगात् 'चादिलोपे विभाषा' इति प्रथमलिङो:[7] 'स्यात्' 'स्याताम्' इत्यनयोर्न निघातः" इति । निपातैरिति[8] किम् ? 'यत्कूजति शकटम्' । इणः शतरि 'इणो यण्'

---

1. अत्र घ. नास्ति ।
2. प्रवृत्तेः घ.
3. वश इति घ. नास्ति ।
4. समुच्चयाद्यर्थकयोगे घ.
5. यद्यदिशब्दयोः सत्त्वात् अनिघातः घ.
6. स्पष्टम् घ.
7. -तिङोः घ.
8. इति घ. नास्ति ।

इति यणादेशे 'यत्' इति रूपम् । ननु प्रतिपदोक्तत्वात् यद्यादिभिः साहचर्याच्च निपातस्यैव यच्छब्दस्य ग्रहणं भविष्यति, किं निपातग्रहणेन इति चेत्—सत्यम् ; 'इह प्रकरणे साहचर्यं प्रतिपदोक्तत्वं च नाश्रीयते' इति ज्ञापनाय निपातग्रहणम् । तेन 'यावद्यथाभ्याम्' इति सूत्रे 'यत्तदेतेभ्यः' इति [1]व्युत्पन्नो वत्वन्तोऽपि यावच्छब्दो गृह्यते । तेन 'यावत् स्तोतृभ्यो अरदो गृणाना' 'यावतोऽश्वान् प्रतिगृह्णीयात्' इत्यादौ 'यावद्यथाभ्याम्' इति निघातनिषेधः सिध्यतीति हरदत्तभट्टोजियज्वप्रभृतयः । 'यद्वृत्तान्नित्यम्' इत्येव अत्र 'अरदः' इति[2] तिङन्तस्य निघातनिषेधसिद्धेः नेदं ज्ञापनफलम् इति चिन्त्यम् । तस्मात् यत्र परत्र स्थितेन यावच्छब्देन तिङन्तस्य योगः 'धनं ददाति यावत्[3]' इत्यादौ, तत्र तिङ्निघाताभावो ज्ञापनफलम् ; 'यद्वृत्तात्' इति पञ्चमीनिर्देशेन तत्र तदप्रवृत्तेः । युक्तग्रहणं परम्परायोगे मा भूदिति । 'यत्र क्व च ते मनो दक्षं दधस[4] उत्तरम्' । अत्र 'यत्र' इत्यस्य 'उत्तरम्' इत्यनेन साक्षात् सम्बन्धात् 'दधसे[5]' इति निहन्यते । दध धारणे इति धातोश्चेदं रूपम् इति हरदत्तादयः ॥

## [३९८] ॥ हन्त च ॥ (8—1—54)

'हन्त[6]' इत्यनेन युक्तं सोपसर्गमुत्तमवर्जितं लोडन्तं वा नानुदात्तम्[7] । 'यद्यदि हन्त' इति प्राप्तं विकल्प्यते । 'हन्त प्रविश' । सोपसर्गम् इत्यादि किम् ? 'हन्त कुरु' । 'हन्त करवाणि' ॥

---

1. सूत्रव्युत्पन्नः क.
2. इत्यादि ङ.
3. धनदोऽसि यावत् ङ.
4. दधते स्म घ.
5. दधते घ.
6. हन्तेति क. नास्ति ।
7. भवति ङ. अधिकम् ।

## [३९९] ॥ नह प्रत्यारम्भे ॥ (8—1—31)

'नह' इत्यविभक्तिको निर्देशः[1] । 'युक्तम्' इत्यनुवृत्तेस्तृतीयार्थलाभः । एवमुत्तरसूत्रेष्वपि द्रष्टव्यम् । 'नह' इति निपातसमुदायः[2] प्रतिषेधार्थकः । तेन युक्तं तिङन्तं न निहन्यते प्रत्यारम्भे गम्ये[3] । प्रत्यारम्भः पुनरारम्भः, 'भुङ्क्ष्व' 'अधीष्व' इत्येवं[4] कर्तव्यतया उपन्यस्य, अवज्ञाने सति अवज्ञातुरुपालिप्सया तस्यैव भोजनादेः प्रतिषेधेन संबध्य[5] यः पुनरुपन्यासः स इति यावत् । 'नह भोक्ष्यसे' । 'नह अध्येष्यसे' । अदुपदेशाल्लसार्वधातुकानुदात्तत्वे विकरणस्वरः । प्रत्यारम्भे किम् ? 'नह स्म वै पुराग्निरपरशुवृक्णं दहति' ॥

## [४००] ॥ सत्यं प्रश्ने ॥ (8—1—32)

'सत्यम्' इत्यनेन युक्तं तिङन्तं नानुदात्तं प्रश्ने गम्ये । 'सत्यं भोक्ष्यसे' । प्रश्ने किम् ? 'सत्यं वक्ष्यामि नानृतम्' । 'सत्यं ब्रवीमि वध इत्स तस्य' ॥

## [४०१] ॥ अङ्गाप्रातिलोम्ये ॥ (8—1—33)

'अङ्ग' इत्यनेन युक्तं तिङन्तं नानुदात्तम् अप्रातिलोम्ये[6] । प्रातिलोम्यं [7]प्रतिकूलकारित्वम् । अतोऽन्यदप्रातिलोम्यम्, अनुमत-

1. निर्देशः क. नास्ति ।
2. अव्ययसमुदायः घ.
3. गम्यमाने ङ.
4. इत्येव घ.
5. सम्बद्धो क. ङ.
6. इदं वाक्यम् घ. नास्ति ।
7. प्रतिलोमकारित्वम् घ.

कारित्वम् । एवं च 'आनुलोम्ये' इत्येव वक्तुमर्हम् इति हरदत्तः । 'अङ्ग कुरु'। 'अङ्ग वद'। इह अनुज्ञायामङ्गशब्दः । प्रातिलोम्ये तु—'अङ्ग कूज वृषल' । इह अमर्षे अङ्गशब्दः । यत्तु 'यदङ्ग दाशुषे त्वमग्ने भद्रं करिष्यसि' इत्युदाहृतम्, तन्नासाधारणम् ; यच्छब्दयोगादपि निघाताभावसिद्धेरिति[1] ॥

## [४०२] ॥ हि च ॥ (8—1—34)

हिशब्देन युक्तं तिङन्तं न निहन्यते । 'त्वꣳ हि होता प्रथमो बभूथ' । भवतेर्लिटस्थलि 'बभूथाततन्थ' इति निपातनाद्गुणाभावः । 'लिति' इति प्रत्ययात् पूर्व उदात्तः । 'निर्ह्यग्निः शीतेन वायति समिद्ध्यै' । शप्तिपोरनुदात्तत्वात धातुस्वरः । इह वृत्तौ 'अप्रातिलोम्ये' इत्यनुवर्त्त्य सूत्रं व्याख्याय, "अप्रातिलोम्य इत्येव । 'स हि कूज वृषलेदानीं[2] जाल्म" इति प्रत्युदाहृतम् । हरदत्तश्च अत्र प्रत्युदाहरणे 'अमर्षे हि शब्दः' इति व्याख्यत् । स्वरमञ्जर्यां सिद्धान्तकौमुद्यां च अत्र अप्रातिलोम्यानुवृत्तिर्न प्रदर्शिता । किमत्र कारणम् इति चिन्त्यम् । न च छन्दसि 'निर्ह्यग्निः शीतेन' इत्यादौ आनुलोम्याप्रतीतावपि निघाताभावदर्शनं तदननुवृत्तिकल्पनाबीजम् ; तदनुवृत्तावपि प्रातिलोम्याप्रतीतिमात्रेण अत्र निघाताभावसिद्धेः । प्रातिलोम्याभावस्यैव अप्रातिलोम्यशब्दार्थत्वात् । एवं च 'आनुलोम्य इत्येव सुवचम्' इति पूर्वसूत्रस्थो हरदत्तः[3] चिन्त्यः ; उक्तविधया फलभेदात्[4] इति ॥

---

1. भावः क. अधिकम् ।
2. ज्ञास्यसि ङ. अधिकम्
3. हरदत्तग्रन्थः ङ.
4. फलभेदसम्भवात् क.

## [४०३] ॥ छन्दस्यनेकमपि साकाङ्क्षम् ॥
(8—1—35)

हिशब्देन युक्तमनेकमपि साकाङ्क्षं तिङन्तं छन्दसि नानुदात्तं भवति[1] । अपिशब्दात् एकमपि क्वचित् । हेतुहेतुमद्भावद्योतको हिशब्द इति अनेकमपि तिङन्तं हिशब्दयुक्तं भवति । तत्र पूर्वेण सर्वस्य निघातनिषेधे प्राप्ते क्वचिदेकस्य क्वचिदनेकस्य यथा स्यादिति वचनम् । छन्दसि दृष्टानुविधानात् यथाप्रयोगं व्यवस्था इत्याहुः । 'अनृतं हि मत्तो वदति पाप्मा एनं विपुनाति' । अत्र तिङन्तद्वयपि न निहन्यते । पाप्मा अत्र मद उच्यते । यस्मान्मत्तोऽनृतं वदति तस्मात् अनृतवदनदोषेण युज्यते इत्यर्थ इत्याहुः । 'अजा ह्यग्नेरजनिष्ट गर्भात् सा वा अपश्यत्' । अत्र 'अजनिष्ट' इति न निहन्यते । 'अपश्यत्' इति तु निहन्यत एव । 'यद्धि मनसा ध्यायति तद्वाचा वदति' । 'यद्धि मनसाभिगच्छति तत् करोति' । अत्र प्रसिद्धिद्योतकहिशब्दस्य तिङन्तद्वयसम्बन्धात् उभयं न निहन्यत इति स्वरमञ्जर्याम् ॥

## [४०४] ॥ यावद्यथाभ्याम् ॥ (8—1—36)

'युक्तम्' इत्यनुवृत्तेस्तृतीयान्तमिदम्[2] । आभ्यां[3] युक्तं तिङन्तं न निहन्यते । 'यावच्च सप्त सिन्धवो वितस्थुः' । 'यथा त्वं देवानामसि' । तृतीयान्तत्वात् परभूताभ्यामपि युक्तं तिङन्तं[4] न निहन्यते । 'देवदत्तः पचति यावत्' । 'देवदत्तः

---

1. भवति क. नास्ति ।
2. तृतीयाद्विवचनान्तमिदम् ख.
3. एताभ्याम् घ. ङ.
4. तिङन्तम् घ. नास्ति ।

पचति यथा'। इदमेव मुख्यमुदाहरणम्; 'यावद्ध सप्त सिन्धवः' इत्यादौ 'यद्वृत्तान्नित्यम्' इत्यपि निघाताभावसिद्धेरिति ॥

## [४०५] ॥ पूजायां नानन्तरम् ॥
(8—1—37)

यावद्यथाभ्यामनन्तरं ताभ्यां युक्तं तिङन्तं न निहन्यत इति न। द्वौ नञौ प्रकृतमर्थं बोधयतः[1]। निहन्यत एव पूजायाम्। 'यावद्भवति चारु'। 'यथा करोति चारु'। पूजायां किम्? 'यावद्भुङ्क्ते'। अनन्तरं किम्? 'यावद्देवदत्तः पचति शोभनम्'। प्रत्युदाहरणे पूर्वसूत्रेण निघातनिषेध एव[2]। 'यावत्[3] देवदत्त पचसि' इत्यत्र आमन्त्रितस्य अविद्यमानवत्त्वात् प्रकृतसूत्रेण निषेधो भवत्येव[4] ॥

## [४०६] ॥ उपसर्गव्यवेतं च ॥ (8—1—38)

यावद्यथाभ्यामनन्तरमुपसर्गव्यवहितं तिङन्तं न निहन्यते इति न पूजायाम्। 'यावत् प्रपचति चारु'। 'यथा प्रकरोति शोभनम्'। पूर्वत्र अनन्तरग्रहणात् उपसर्गव्यवाये न सिध्यति इत्ययमारम्भः। इदं तु स्यात्—पूर्वत्र अनन्तरग्रहणं मास्तु; इदं नियमार्थं भविष्यति, 'व्यवाये यदि भवति तर्हि उपसर्गेणैव' इति। अतः 'यावत् देवदत्तः पचति' इत्यादौ नातिप्रसङ्ग इति ॥

---

1. गमयतः घ. ङ.
2. -निषेधः। एवं घ.
3. यावत् घ. नास्ति।
4. एव घ. नास्ति।

## [४०७] ॥ तुपश्यपश्यताहैः पूजायाम् ॥

(8—1—39)

एतद्युक्तं तिङन्तं नानुदात्तं भवति पूजायाम् । 'माणवकस्तु भुङ्क्ते शोभनम्' । 'पश्य माणवको भुङ्क्ते पश्यत वा' । आश्चर्यद्योतकास्तुशब्दादय इति पूजाप्रतीतिः । भुजेरनुदात्तेतः परं लसार्वधातुकमनुदात्तम् । ततो धातुस्वरेण उदात्तस्य[1] श्नमकारस्य 'श्नसोरल्लोपः' इति लोपे उदात्तनिवृत्तिस्वरेण 'भुङ्क्ते' इत्यन्तोदात्तम् । 'सरसमहं वसन्ताय प्रायच्छत्' । अहशब्दः केवलार्थः । वसन्ताय[2] केवलं रसं प्रायच्छदित्यर्थ इति पूजाप्रतीतिः इत्याहुः । अडागम उदात्तः । एवम्[3] 'कस्य बाह देवा यज्ञमागच्छन्ति कस्य वा न' इत्यत्रापि अहशब्दयोगात् अनिघात इत्याहुः । पूर्वत्र पूजाग्रहणं प्रतिषेधप्रतिषेधेन अनन्तरग्रहणेन च सम्बद्धम् इति पुनः पूजाग्रहणं कृतम् । तेन अस्य निघातप्रतिषेधत्वसिद्धिः । अन्यथा 'न लुट्' इत्यादिविषये प्रतिषेधस्य प्रतिषेधोऽनेन क्रियत इति शङ्क्येत ॥

## [४०८] ॥ अहो च ॥ (8—1—40)

अनेन युक्तं तिङन्तं नानुदात्तं पूजायाम् । 'अहो देवदत्तः पचति शोभनम्!' योगविभाग उत्तरत्र अहोशब्दमात्रस्य अनुवृत्त्यर्थः ॥

---

1. अनुदात्तस्य घ.
2. रसं वसन्ताय घ.
3. एवम् घ. नास्ति ।

## [४०९] ॥ शेषे विभाषा ॥ (8—1—41)

पूर्वत्र पूजायामुपयुक्तत्वाद्यदन्यत् पूजायाः स शेषः । तत्र अहोशब्देन युक्तं तिङन्तं नानुदात्तं[1] वा भवति । 'ग्राममहो गमिष्यसि' । असूयावचनमेतत्, नाश्चर्यवचनम्[2] । अदुपदेशाल्लसर्वाधातुकानुदात्तत्वे पक्षे स्यप्रत्ययाकार उदात्तः । पूर्वत्र चानुकृष्टस्य पूजाग्रहणस्य निवृत्त्यैव पूजातोऽन्यः शेष इति सिद्धे शेषग्रहणं स्पष्टार्थम् ॥

## [४१०] ॥ पुरा च परीप्सायाम् ॥ (8—1—42)

परीप्सा त्वरा । तस्यां गम्यायाम् 'पुरा' इत्यनेन युक्तं तिङन्तं वानुदात्तं भवति । 'अधीष्व माणवक पुरा विद्योतते विद्युत्' । '[3]यावत्पुरानिपातयोर्लट्' इति भविष्यति लट् । पुराशब्दश्च अत्र अध्ययनान्तरायभूतस्य भविष्यतो विद्युद्विद्योतनस्य आसत्तिं द्योतयति इति त्वरा गम्यते । विद्युतश्च अध्ययनान्तरायत्वम् 'देशेऽशुचावात्मनि च' 'विद्युत्स्तनितसम्प्लवे' इति तात्कालिकानध्ययननिमित्तेषु याज्ञवल्क्यपरिगणनात् । परीप्सायां किम् ? 'पुरा होतारोऽभूवन्' ॥

## [४११] ॥ नन्वित्यनुज्ञैषणायाम् ॥ (8—1—43)

अनुज्ञाया एषणा प्रार्थना । तत्र 'ननु' इत्यनेन युक्तं तिङन्तं नानुदात्तं वा भवति । 'ननु करोमि भोः' ।

---

1. वानुदात्तं भवति क.
2. असूयया वचनमेतत्, न त्वाश्चर्येण घ.
3. यावत्पुरा...स्तनितसं- क. नास्ति।

अनुजानीहि[1] मां करणाय इति प्रार्थयते[2] । 'अङ्गात् प्रातिलोम्ये' इत्यादिवत् सिद्धे सूत्रे इतिशब्दो निपातद्वयशङ्कानिवृत्त्यर्थ इति हरदत्तः ॥

## [४१२] ॥ किं क्रियाप्रश्नेऽनुपसर्गमप्रतिषिद्धम् ॥
(8—1—44)

क्रियाप्रश्ने विद्यमानेन किंशब्देन युक्तं तिङन्तमनुपसर्गमप्रतिषिद्धार्थकं नानुदात्तं भवति । 'किं देवदत्तो यजति आहोस्विदधीते ?' । इह उभयोः क्रिययोः संशयविषयत्वात् उभाभ्यां किमो योग इति तिङन्तद्वयमपि[3] न निहन्यते इति केचित्[4] । उभयोः संशयविषयत्वेऽपि आद्यक्रियाया एव प्रश्नं किंशब्दो द्योतयति । आहोस्विच्छब्दस्तु द्वितीयस्याः । 'किं क्रियाप्रश्ने' इति च सूत्रम्[5] । आद्यस्यैव निघात इत्यन्ये । क्रियेति किम् ? साधनप्रश्ने मा भूत् । 'किं द्वादशाहस्यं प्रथमेनाहृत्विजां यजमानो वृङ्क्ते इति' । सोपसर्गस्तु निहन्यत एव । 'स किं प्रपचति ? उत प्रकरोति ?' एवं प्रतिषिद्धार्थकमपि । 'किं न पचति ? उत न यजति ?'

## [४१३] ॥ लोपे विभाषा ॥ (8—1—45)

प्रकृतत्वात् किमो लोप इति गम्यते । किंलोपस्य अविहितत्वात् आक्षेपादिना किमर्थलाभे यत् तस्य अप्रयोगात् अदर्शनम्,

1. अनुजानीष्व घ.
2. प्रार्थना घ.
3. अपि घ. नास्ति ।
4. इति केचित्....निघातः घ. नास्ति ।
5. सू[illegible]म् ख.

तदेवेह लोपशब्देन गृह्यते । तस्मिन् सति पूर्वसूत्रोक्तविशेषण-विशिष्टं तिङन्तं वा अनुदात्तं भवति । अत एव प्राप्तविभाषे-यम् ; पूर्वत्रापि किमर्थयोग एव निघातनिषेधात् । 'देवदत्तः पठति आहोस्वित् पचति ?' अत्र आहोस्विच्छब्देन पक्षान्तरप्रश्ने वर्तमानेन पूर्वत्र किमर्थयोगो गम्यते । पूर्ववत् प्रत्युदाहृतय ऊह्याः ॥

## [४१४] ॥ जात्वपूर्वम् ॥ (8—1—47)

'अपूर्वम्' इत्येतत् 'जातु' इत्यस्य विशेषणम्, न तु निमित्तत्वेन प्रधानस्यापि तिङन्तस्य ; 'आहो उताहो चानन्तरम्' इत्यत्र अनन्तरग्रहणाल्लिङ्गात् । अन्यथा 'अपूर्वम्' इत्यनुवृत्त्यैव आनन्तर्यलाभे किं तत्र अनन्तरग्रहणेन ? अविद्यमानपूर्वेण जातु इत्यनेन युक्तं तिङन्तं नानुदात्तम् । 'जातु भोक्ष्यसे' । अपूर्वं किम् ? 'कटं जातु करिष्यसि' । इह तु आमन्त्रितस्य अविद्यमान-वत्त्वात् 'जात्वपूर्वम्' इति निषेध एव 'देवदत्त जातु पचसि' ॥

## [४१५] ॥ किंवृत्तं च चिदुत्तरम् ॥ (8—1—48)

"वर्ततेऽस्मिन्निति वृत्तम् । वृतेः 'क्तोऽधिकरणे च' इत्यधि-करणे क्तः । किमो वृत्तं किंवृत्तम् । 'अधिकरणवाचिनश्च' इति षष्ठी[1] । 'अधिकरणवाचिना च' इति समासनिषेधस्तु न भवति ; निपातनात्" इति हरदत्तः । किंशब्दनिष्पन्नं रूपम् इत्यर्थः । तत्र हि किंशब्दो वर्तते । 'चिदुत्तरम्' इति किंवृत्तस्य विशेषणम् ; पूर्वोक्तात् सामान्यापेक्षज्ञापकात् । चिदुत्तरेण अपूर्वेण किंवृत्तेन युक्तं तिङन्तं नानुदात्तम् । 'कश्चित् करोति' ।

1. कर्तरि षष्ठी क.

'कतरश्चित् करोति'। 'कतमश्चित्'। चिदुत्तरम् इति किम्? 'कि॰स्विदासीत् पूर्वचित्तिः'। 'वृत्तग्रहणेन तद्विभक्त्यन्तं प्रतीयात्[1] डतरडतमौ च' इत्युक्तेः 'कियच्चित्[2] पठति' इत्यादौ न निषेधः[3] ॥

## [४१६] ॥ आहो उताहो चानन्तरम् ॥
(8—1—49)

आभ्यामपूर्वाभ्यां युक्तमनन्तरं तिङन्तं नानुदात्तं भवति। 'आहो भुङ्क्ते'। 'उताहो भुङ्क्ते'। अनन्तरं किम्[4]? 'आहो देवदत्तो भुङ्क्ते'। अपूर्वं किम्? 'स आहो भुङ्क्ते'। अत एव उताहोग्रहणम्। इदमप्युदाहरणम् 'आहो देवदत्त पचसि'; आमन्त्रितस्य अविद्यमानवत्त्वात्। अनन्तरग्रहणमुत्तरसूत्रे अननन्तरस्य शेषत्वप्रतिपत्तिर्यथा स्यादिति ॥

## [४१७] ॥ शेषे विभाषा ॥ (8—1—50)

[5]आहोउताहोशब्दाभ्यां युक्तं तिङन्तं वानुदात्तं भवति[6], अननन्तरलक्षणशेषविषये। 'आहो देवदत्तः पचति'। 'उताहो देवदत्तः[7] पचति'। 'देवदत्त[8] आहो भुङ्क्ते' 'देवदत्त उताहो भुङ्क्ते'॥

---

1. प्रत्ययौ घ.
2. कियांश्चित् घ.
3. निषेधः। किंशब्दनिष्पन्नं रूपमिति प्राप्नोति ॥ क.
4. अनन्तरं किम्.........-ग्रहणम् क. घ. नास्ति।
5. अपूर्वाभ्यामाहो- घ.
6. भवति। सान्तरं सपूर्वं वा शेषः। अनन्तर- ख.
7. सः ख.
8. इदमुदाहरणद्वयम् क. ख. नास्ति।

## [४१८] ॥ गत्यर्थलोटा लृण्न चेत् कारकं सर्वान्यत् ॥ (8—1—51)

गत्यर्थस्य[1] धातोर्यल्लोडन्तम्, तेन युक्तं लृडन्तं तिङन्तं नानुदात्तम्; लृडन्तवाच्यं यत् कारकम्, तत् सर्वं चेल्लोडन्तवाच्यकारकादन्यन्न भवेत्। सूत्रे 'सर्व' इति लुप्तप्रथमाकं पदम्। 'आगच्छ देवदत्त ग्रामम्, एनं द्रक्ष्यसि'। 'उह्यन्तां देवदत्तेन शालयः, तेनैव ते[2] भोक्ष्यन्ते'। उह्यन्तामिति वहतेः रूपम्। आद्योदाहरणे य एव लोडन्तवाच्यः कर्ता, स एव लृडन्तवाच्यः। द्वितीयेऽपि शालिलक्षणमेकमेव कर्म कारकं तिङन्तद्वयवाच्यम्। कारकभेदे तु न भवति। 'आगच्छ देवदत्त ग्रामम्, पिता एनं द्रक्ष्यति'। सर्वग्रहणात् इहापि निघातनिषेधो भवति 'आगच्छ देवदत्त ग्रामम्, त्वं चाहं च द्रक्ष्याव एनम्' इति; लोडन्तवाच्यकारकात् लृडन्तवाच्यस्य कारकस्य[3] एकस्य अन्यत्वेऽपि सर्वस्य अन्यत्वाभावात्[4]। लृडिति किम्? 'एहि वसो पुरोवसो प्रियो मे हृदोऽसि[5]' ॥

---

1. गत्यर्थानां लोटा युक्तं क.
2. यज्ञदत्तेन क.
3. कारकस्य घ. नास्ति।
4. अन्यस्याभावात् घ.
5. गत्यर्थलोटा.... ॥ गत्यर्थानां लोटा युक्तं तिङन्तं लृडन्तं नानुदात्तम्, न चेत् कारकं सर्वान्यत् भवति। यत्र हि कारके कर्मणि कर्तरि वा लोट्, यदि तत्रैव लृडपि इत्यर्थः। कर्तृकर्मणी एव अत्र कारकग्रहणेन गृह्येते, न करणादिकारकान्तरम्। 'आगच्छ देवदत्त ग्रामं द्रक्ष्यस्येनम ओदनं भोक्ष्यसे वा'। 'उह्यन्तां देवदत्तेन शालयः यज्ञदत्तेन वा भोक्ष्यन्ते'। गत्यर्थग्रहणं किम्? 'पच देवदत्त ओदनम्, भोक्ष्यस एनम्'। लृडिति किम्? 'आगच्छ देवदत्त, पश्यस्येनम्'। न चेदित्यादि किम्? 'आगच्छ देवदत्त ग्रामम्, पिता त ओदनं भोक्ष्यते'। 'उह्यन्तां देवदत्तेन शालयः सक्तवस्तेन पास्यन्ते'। सर्वग्रहणं किम्? 'आगच्छ देवदत्त ग्रामम्, त्वं चाहं च द्रक्ष्याव एनम्' इत्यत्रापि प्रतिषेधो यथा स्यात्। लृडन्तवाच्ये हि सर्वस्मिन्नन्यस्मिन् कारके न भवितव्यम्। इह तु यल्लोडन्तस्य कारकं तच्चान्यल्लृडन्तवाच्यमिति भवितव्यम् इत्येव ॥ ख.

# [४१९] ॥ एहिमन्ये प्रहासे लृट् ॥

(8—1—46)

एहिमन्ये इत्यनेन[1] युक्तं लृडन्तं नानुदात्तं भवति[2] परिहासे गम्ये । 'एहि मन्ये रथेन यास्यसि' । पितरि रथेन याते तदज्ञानेन[3] अहं रथेन यास्यामि इत्यागच्छन्तं पुत्रं प्रति तत्स्यालादेः[4] परिहासपूर्विकेयमुक्तिः । अत्र 'प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च' इति सूत्रेण मन्यतेर्मध्यमस्य सेः स्थाने उत्तम इट् । मन्योपपदस्य धातोरुत्तमस्य मिपः स्थाने मध्यमः सिप्[5] । 'गत्यर्थलोटा' इति सिद्धे नियमार्थमिदम् 'एहि-मन्येयोगे यदि[6] भवति तर्हि[7] प्रहास एव' इति । तेनेह न 'एहि मन्यसे रथेन यास्यामि इति'। तत्त्वकथनमेतत्, न परिहासः । अत एव न पुरुषव्यत्ययः । न चैवम् एहि-[8]मन्येयोगे नियमः क्रियमाणः कथं मन्यसेयोगे व्यावृत्तिं कुर्यादिति वाच्यम् ; अत एव नियमस्य व्यावर्त्यानुपपत्त्या[9] सूत्रे 'मन्ये' इत्युत्तमोपादानस्य अतन्त्रत्वज्ञापनात् । तदुपादानं तु प्रहासे मन्यते-रुत्तमो विहित इति कृत्वा । तथा च एहिमन्यतेर्योगे[10] नियमः क्रियमाण उक्तस्थले निषेधं फणेदिति[11] सिद्धम्[12] ॥

---

1. संघातेन ङ. अधिकम् ।
2. भवति घ. नास्ति ।
3. तदज्ञानात् घ.
4. इयं घ. अधिकम् ।
5. सिः घ.
6. यदि क. नास्ति ।
7. तर्हि घ. नास्ति ।
8. -मन्ये- क. नास्ति ।
9. व्यावर्त्यान्यथानुपपत्त्या क.
10. स हि घ. अधिकम् ।
11. फलेदिति घ.
12. एहि मन्गे प्रहासे.... ॥ एहि मन्ये इत्यनेन समुदायेन युक्तं तिङन्तं लृडन्तं नानुदात्तं प्रहासे । 'एहि मन्ये ओदनं भोक्ष्यसे, न हि भोक्ष्यसे, भुक्तः सोऽतिथिभिः' । 'प्रहासे च मन्योपपदे' इति पुरुषव्यत्ययः । प्रहासे किम् ? 'एहि मन्यसे ओदनं भोक्ष्ये इति, सुष्ठु च मन्यसे' । 'गत्यर्थलोटा' इत्येव सिद्धे नियमार्थ-मिदम्, एहिमन्येयुक्तं प्रहास एव नानुदात्तमिति ॥

॥ जात्वपूर्वम् ॥ ख.

## [४२०] ॥ लोट् च ॥ (8—1—52)

गत्यर्थलोटा युक्तं लोडन्तं न निहन्यते ; लोडन्तवाच्यं सर्वं कारकं गत्यर्थलोडन्तवाच्यं न चेत्[1] । 'जाय एहि सुवो रोहाव रोहाव' । 'एहि' इति गत्यर्थलोटा योगात् 'रोहाव' इत्यस्य न निघातः । 'आडुत्तमस्य पिच्च' इति प्रत्ययस्य पित्त्वात् धातुस्वरः । 'एहि सावित्रं विद्धि' 'एहि मां विद्धि' इत्यादौ व्यत्ययात् विद्धीति निहन्यते । इतरत् 'गत्यर्थलोटा' इतिवदूह्यम्[2] ॥

## [४२१] ॥ विभाषितं सोपसर्गमनुत्तमम् ॥ (8—1—53)

उपसर्गसहितमुत्तमवर्जितं लोडन्तं गत्यर्थलोटा युक्तं[3] वा अनुदात्तम् । 'सोम राजन्नेह्यवरोह' । 'भक्षेहि माविश' । अत्र 'रोह' 'विश' इति तिङन्तद्वयं निहन्यते । अनुत्तमं[4] किम् ? 'आगच्छानि देवदत्त ग्रामं प्रविशानि' । अत्र पूर्वेण नित्यं नानुदात्तत्वम् । 'तावेहि सम्भवाव' इत्यत्र व्यत्ययात् उत्तमस्यापि निघातः ॥

---

1. अन्यत् ङ. अधिकम् । न चेत् कारकं सर्वान्यदित्येव ।

2. ॥ लोट् च ॥ गत्यर्थलोटा युक्तं टिङन्तं लोडन्तं न निहन्यते, न चेत् कारकं सर्वान्यत् भवति । 'आगच्छ देवदत्त ग्रामं पश्यैनं विष्णुमित्रम् शाधि वा' । 'आगम्यतां देवदत्तेन ग्रामः, तेनैव दृश्यताम् यज्ञदत्तेन वा' । गत्यर्थेत्येव । 'पच देवदत्त ओदनं भुङ्क्ष्वैनम्' । लोटा इत्येव । 'गमिष्यसि देवदत्त ग्रामं पश्यतैनम्' । 'आगच्छ देवदत्त ग्रामं पश्यत्वेनं विष्णुमित्रः' । सर्वग्रहणात् इहापि भवत्येव— 'आगच्छ देवदत्त त्वं चाहं च पश्याव' । पृथग्योगकरणम् उत्तरार्थम् । 'एहीमं विद्धि' 'एहि सावित्रं विद्धि' इत्यादौ व्यत्ययात् 'विद्धि' इति निहन्यते ॥ क. ख.

3. तिङन्तं क. अधिकम् ।

4. इति क. अधिकम् ।

## [४२२] ॥ यद्धितुपरं छन्दसि ॥
(8—1—56)

यद्धादयः परे यस्य तत्तिङन्तं नानुदात्तं छन्दसि । 'गवां गोत्रमुदसृजो यदङ्गिरः' । 'इन्दवो वामुशन्ति हि' । 'आख्यास्यामि तु ते' । 'निपातैर्यद्यदि' इत्यादिनैव निषेधे सिद्धे नियमार्थमिदम् 'छन्दसि परैर्योगे यदि भवति तर्हि[1] एभिरेव' इति । तेन 'जाये स्वो[2] रोहावैहि' इति शाखान्तरीये पाठे 'एहि' इति गत्यर्थलोटा परभूतेन युक्तस्य 'रोहाव' इति लोडन्तस्य 'लोट् च' इति निघातनिषेधो नेति भाष्यादौ । अत एव नियमात् 'परावर्ग्भारभृद्यथा', 'आत्मा यक्ष्मस्य नश्यति पुरा जीवगृभो यथा' इत्यादौ 'यावद्यथाभ्याम्' इति निषेधाभावः ॥

## [४२३] ॥ चनचिदिवगोत्रादितद्धिताम्रेडितेष्वगतेः ॥
(8—1—57)

अगतेः परं तिङन्तं न निहन्यते[3] चनादिषु परतः । 'देवदत्तः पचति चन' । 'स पचति चित्' । 'स पचतीव' । गोत्रादिः—'स पचतिगोत्रम्' । 'पचतिब्रुवम्' । अत्रापि कुत्सनाभीक्ष्ण्यादिवृत्तेरेव गोत्रादेर्ग्रहणम् इत्युक्तम्[4] । 'स पचतिकल्पम्' । 'ईषदसमाप्तौ' इत्यत्र 'तिङश्च' इत्यनुवृत्तेः अत्र कल्पपि[5] तस्य पित्त्वेन अनुदात्तत्वाद्धातुस्वरः । 'स[6] पचति-

---

1. तर्हि घ. नास्ति ।
2. सुवो क.
3. अनुदात्तम् घ.
4. इष्टत्वात् ङ.
5. कल्पप् घ.
6. सः घ. नास्ति ।

देश्यम्' इत्यादौ सतिशिष्टत्वात् प्रत्ययस्वरे सति शेषनिघातेन तिङन्तोऽनुदात्त[1] एव । आम्रेडिते—'देवदत्तः पचति पचति' । अगतेरिति[2] किम् ? 'स प्रपचति चन' । अत्र तिङ् निहन्यत एव ॥

## (वा) ॥ गतिग्रहणेनोपसर्गस्य ग्रहणमिष्यते ॥

'स[3] शुक्लीकरोति चन' । अत्र 'अगतेः' इति [4]निषेधाभावात् निघातनिषेध एव । 'ऊर्यादिच्विडाचश्च' इति च्व्यन्तत्वात् गतिसंज्ञः शुक्लीशब्दः, न तु अस्य उपसर्गसंज्ञा ॥

## [४२४] ॥ चादिषु च ॥ (8—1—58)

एषु परतः अगतेः परं तिङन्तं न निहन्यते[5] । 'न चवाहाहैवयुक्ते' इत्यत्र निर्दिष्टाश्चादय इह गृह्यन्ते, न तु 'चादयोऽसत्त्वे' इति निर्दिष्टाः ; विप्रकृष्टत्वात् । 'देवदत्तः पचति च साधु खादयति च' । तिङन्तद्वयमपि चशब्दपरत्वात्[6] न निहन्यते । एवं वादिपरमपि उदाहार्यम् । अगतेरिति[7] किम् ? 'देवदत्तः प्रपचति च प्रपाठयति[8] च' । अत्र आद्यं तिङन्तमुत्तरसूत्रान्न निहन्यते । द्वितीयं तु निहन्यत[9] एव । तदिह प्रत्युदाहरणम् ॥

## [४२५] ॥ चवायोगे प्रथमा ॥
(8—1—59)

'अगतेः' इति निवृत्तम् । [10]चवाभ्यां युक्ते प्रथमा तिङ्विभक्तिर्नानुदात्ता भवति । 'व॒त्सं चोपावसृ॒जत्युखां चाधिश्रय॒त्यव॑

1. तिङन्तं नानुदात्तं घ.
2. इति घ. नास्ति ।
3. सः क. नास्ति ।
4. पर्युदासाभावात् घ. ङ.
5. अनुदात्तम् घ.
6. चशब्दयुक्तत्वात् क.
7. इति घ. नास्ति ।
8. प्रवदति घ. ङ.
9. हन्यते घ.
10. चवायोगे प्रथमा घ.

च हन्ति दृषदौ च समाहन्त्यधि च वपते कपालानि चोप दधाति पुरोडाशं चाधिश्रयत्याज्यं च स्तम्बयजुश्च हरत्यभि च गृह्णाति वेदिं च परिगृह्णाति पत्नीं च सन्नह्यति प्रोक्षणीश्चासादयत्याज्यं चैतानि वै द्वादश द्वन्द्वानि' [1]इत्यत्र स्थलद्वये 'आज्यं च' इति श्रूयते । तत्र 'पुरोडाशं चाधिश्रयति' 'प्रोक्षणीश्चासादयति' इति [2]पूर्ववाक्यगतौ अधिश्रयत्यासादयती अनुषज्येते । तेन अत्र सप्त तिङन्तयुगलानि भवन्ति । तत्रैकस्मिन्[3] युगले प्रथमं तिङन्तं न निहन्यते, द्वितीयं तु[4] निहन्यत एव ; 'प्रथमा' इति वचनात् । न च अधिश्रयतौ आसादयतौ च प्राथम्यासंभवः, एकस्यैव तिङन्तस्य अनुषङ्गात् इति वाच्यम् ; अनुषङ्गकल्पितभेदनिबन्धनप्राथम्यमादाय लक्ष्यानुसारेण स्वरप्रवृत्तेः । न च एकैकतिङन्तयुगलान्तर्गतद्वितीयतिङन्तमपि न[5] निहन्येत, युगलान्तरवर्तितिङन्तापेक्षया प्राथम्यात् इति वाच्यम् ; याभ्यां[6] चवाशब्दाभ्यां[7] यः समुच्चयादिर्विकल्पो वा द्योत्यः, तद्युक्ततिङन्तद्वयमध्ये प्रथमं न निहन्यत इति सन्निधानाद्विज्ञानात् इति दिक् । सर्वत्र तिप् पित्त्वादनुदात्तः । 'वपते' इत्यत्र लसार्वधातुकमनुदात्तम्[8] । सृजतिगृह्णात्योः सतिशिष्टत्वाद्विकरणस्वरः । 'हन्ति' इत्यत्र विकरणलोपाद्धातुस्वर एव[9] । इतरत्रापि शपोऽनुदात्तत्वाद्धातुस्वर एव । 'गतिर्गतौ', 'तिङि चोदात्तवति' इति यथायोगं गतिनिघातः । 'जर्तिलयवाग्वा वा जुहुयाद्गवीधुकयवाग्वा वा' 'अञ्जलिना वा पिबेदखर्वेण वा पात्रेण' 'उद्वा

---

1. इति घ. नास्ति ।
2. पूर्ववाक्यगताधिश्रय- क.
3. तत्रैव कस्मिन् घ. ङ.
4. तु घ. नास्ति ।
5. न घ. नास्ति ।
6. आभ्यां घ.
7. चवाभ्यां घ.
8. लसार्वधातुकानुदात्तत्वम् घ.
9. एव घ. ङ. नास्ति ।

माध्येद्यजमानः प्रवा मीयेत' 'अतिजनं वेयात्, उद्वा माद्येत्' इत्यत्र प्राथम्याप्राथम्याभ्यां[1] 'माद्येत्' इत्यस्य निघातानिघातौ ॥

## [४२६] ॥ हेति क्षियायाम् ॥ (8—1—60)

क्षिया—शिष्टाचारोल्लङ्घनम् । तस्मिन् गम्ये 'ह' इत्यनेन युक्ता प्रथमा तिङ्विभक्तिर्न अनुदात्ता[2] । 'स्वयं ह रथेन याति३, उपाध्यायं पदातिं गमयति३' इत्यत्र 'क्षियाशीःप्रैषेषु तिङाकाङ्क्षम्' इति टेः[3] स्वरितः प्लुतः । उपाध्याये पदातौ गच्छति शिष्यस्य रथेन गमनप्रतिषेधात् आचारोल्लङ्घनम् । इतिकरणस्य फलं चिन्त्यम् ॥

## [४२७] ॥ अहेति विनियोगे च ॥ (8—1—61)

विनियोगोऽनेकप्रयोजनो नियोगः प्रेषणेति[4] हरदत्तः । तस्मिन्, चकारात् क्षियायां च 'अह' इत्यनेन युक्ता प्रथमा तिङ्विभक्तिर्नानुदात्ता । 'त्वमह ग्रामं गच्छ३' 'त्वमहारण्यं गच्छ३' । क्षियायाम्—'स्वयमह रथेन याति३, उपाध्यायं पदातिं गमयति' । अत्र उभयत्र प्रथमस्य तिङन्तस्य अनिघातः,[5] 'क्षियाशीः' इति पूर्ववत् प्लुतश्च ॥

---

1. -अप्राथम्याभ्यामनिघातनिघातौ, माद्येत् इत्यस्य घ.
2. युक्तं प्रथमं तिङन्तं न निहन्यते घ.
3. टेः क. नास्ति ।
4. प्रेषणमिति घ.
5. न निघातः घ.

## [४२८] ॥ चाहलोप एवेत्यवधारणे ॥
(8—1—62)

चाहयोर्लोपे सति प्रथमा तिङ्विभक्तिर्नानुदात्ता, 'एव' इत्येतच्चेदवधारणार्थं प्रयुज्यते । 'यो वै देवान् देवयशसेनार्पयति मनुष्यान् मनुष्ययशसेन देवयशस्येव देवेषु भवति मनुष्ययशसी मनुष्येषु' । देवयशसी मनुष्ययशसी च भवति इति चार्थो गम्यते, चशब्दश्च न प्रयुज्यत इत्यस्ति चलोपः । अहलोपे— 'देवदत्त एव ग्रामं गच्छतु, यज्ञदत्त एव अरण्यं गच्छतु' । ग्रामं केवलम्, अरण्यं केवलम् इत्यर्थः । अत्र कैवल्यस्य अह-शब्दार्थस्य गम्यमानत्वात्[1] तदप्रयोगाच्च अहलोपः । अवधारण इति[2] किम् ? 'देवदत्तः केव भोक्ष्यते[3]' । असम्भावनायाम् एवशब्दः । न क्वचित् भोक्ष्यत इत्यर्थः । 'एवे चानियोगे' इति पररूपम् । 'चादिलोपे विभाषा' इत्युत्तरसूत्रेण सिद्धे निषेधे एवशब्दप्रयोगे नित्यार्थोऽयं योगः । एवं च 'तानुपब्दिमतो देवानेव तद्देव-यशसेनार्पयति मनुष्यान् मनुष्ययशसेन देवयशस्येव देवेषु भवति मनुष्ययशसी मनुष्येषु' इत्यत्र व्यत्ययात् 'भवति' इत्यस्य निघात इति बोध्यम् । यत्तु अत्र वेदभाष्यम्—'चादिलोपे विभाषा' इत्युक्तेः पूर्वस्य भवतिशब्दस्य निघाताभावः[4], उत्तरस्य च निघातः —इति, तच्चिन्त्यम् ; [5]यत्तु स्वरमञ्जर्यामुदाहृतम् 'बृहस्पतिर्देवानां पुरोहित आसीच्छण्डामर्कावसुराणाम्[6]' 'ततो देवा अभवन् परासुराः' इत्यादौ अहलोपः, 'तावेतां पूर्वेणाह्वागच्छतामुत्तरेण' इत्यत्र चलोपः—इति, तच्चिन्त्यम् ; एवशब्दाप्रयोगात् । न

---

1. गम्यमानार्थत्वात् घ.
2. इति घ. नास्ति ।
3. भोक्ष्यसे घ.
4. अनिघातः घ.
5. यत्तु.........तच्चिन्त्यम् घ. नास्ति ।
6. 'अहर्देवानामासीद्रात्रिरसुराणाम्' ङ. अधिकम् ।

च तदप्रयोगेऽपि तदर्थयोगोऽस्ति, बृहस्पतिरेव पुरोहित आसीत्, देवा एव अभवन्, इत्याद्यर्थकल्पनात् इति वाच्यम् ; न हि एवशब्दयोगे[1] अयं विधिः, येन तदप्रयोगेऽपि अर्थद्वारकं तद्योगमादाय कार्यं स्यात्[2] ; किं तु एवशब्दप्रयोगे । अन्यथा 'चाहलोपेऽवधारणे' इत्येतावतैव इष्टसिद्धौ 'एव' इत्यस्य वैयर्थ्यप्रसङ्गात् । अत एव वृत्तिः—'एव' इत्येतच्चेदवधारणार्थं प्रयुज्यते' इति । अत एव 'चादिलोपे विभाषा' इत्यत्र हरदत्तः—पूर्वयोग एवशब्दप्रयोगे नित्यार्थः—इति । ननु एवमुदाहरणेषु कथं निघाताभाव इति चेत्—उच्यते ; आद्योदाहरणद्वये तावत् वैशब्दयोगात् निघातो न' इति 'वैवावेति च छन्दसि' इत्यत्र स्वरमञ्जर्यामेवोक्तम् । इतरत्रापि 'चादिलोपे विभाषा' इति तदभावः[3] । छन्दसि प्रयोगस्य व्यवस्थितत्वान्न विकल्प आपाद्य इति ॥

## [४२९] ॥ चादिलोपे विभाषा ॥
(8—1—63)

प्रथमा तिङ्विभक्तिर्नानुदात्ता । अत्रापि 'न चवाहाहैव' इत्यत्र निर्दिष्टा एव चादयः । 'अवं सभाऽ रुन्धे प्र सहस्रं पशूनाप्नोति', 'ब्रह्मवादिनो वदन्ति न प्राश्नन्ति न जुह्वति' । अत्र चलोपः । रुधेर्लट उत्तमैकवचनमिद् । 'श्नसोरल्लोपः' इति श्नमकारलोपः[4] । प्रत्ययस्वरः । अश्नातेर्झिः[5] । 'झोऽन्तः' । 'अभ्यस्तयोरातः' इत्याकारलोपः । प्रत्ययस्वरः । 'प्रजापतिं

---

1. एवशब्दाप्रयोगे क.
2. स्यात् क. नास्ति ।
3. तद्भावः ष.
4. इति श्नमकारलोपः क. नास्ति ।
5. अश्नोतेर्झिः...प्रत्ययस्वरः क. नास्ति ।

त्वोवेद प्रजापतिस्त्वंवेद'। "'कश्चित् प्रजातिर्वेद, प्रजापतिं कश्चिद्वेद इत्यर्थः। अत्रापि चलोपः। त्वशब्दोऽनुदात्तः; 'त्वत्त्वसमसिम' इति फिट्सूत्रात्। तस्य तिङन्तेनैकपद्यं[2] पदकारा मन्यन्ते" इति वेदभाष्यम्। विभाषाग्रहणात् 'तेऽकामयन्त प्रजाः सृजेमहि प्रजामवरुन्धीमहि प्रजां विन्देमहि' इत्यादौ सर्वस्य तिङन्तस्य निघातः। एवं वादिलोपेऽपि उदाहार्यम्॥

## [४३०] ॥ वैवावेति च च्छन्दसि ॥
(8—1—64)

'वै स्फुटार्थे क्षमायां च। वाव प्रसिद्धौ स्फुटार्थे च' इति हरदत्तः। आभ्यां युक्ता प्रथमा तिङ्विभक्तिः वा अनुदात्ता[3] छन्दसि। 'यज्ञं वै देवा अदुह्रन् यज्ञोऽसुराः अदुहत्' 'उत्तरावतीं वै देवा आहुतिमजुहवुः', 'अवाचीमसुराः', 'कनीयांसि वै देवेषु छन्दांस्यासन् ज्यायांस्यसुरेषु'। 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' 'आडजादीनाम्' इति अडाटौ उदात्तौ। 'अजुहवुः' 'आसन्' इत्यनयोरुत्तरवाक्ययोरनुषङ्गात् प्राथम्यम्। दुहेर्लङ्। 'झोऽन्तः'। 'शीङो रुट्' इत्यधिकारे 'बहुलं छन्दसि' इति वचनात् रुडागमः। 'अदुह्रन्'। 'अयं वाव हस्त आसीत् नेतर आसीत्'। 'अयं वाव यः पवते' इति तु न वावयोगस्य उदाहरणम्; 'यद्वृत्तान्नित्यम्' इति सिद्धेः। 'सौम्ये वावैनमध्वरे चिन्वीत, यत्र वा भूयिष्ठा आहुतयो हूयेरन्' इति केचिदुदाहरन्ति॥

---

1. कश्चित् प्रजापतिं वेद घ.
2. तिङन्तैकपद्यम् क.
3. तिङ्विभक्तिरुदात्ता वा घ.

## [४३१] ॥ एकान्याभ्यां समर्थाभ्याम् ॥
(8—1—65)

समौ तुल्यौ अर्थौ ययोस्तौ समर्थौ । निपातनात् समशब्दान्तलोपः, शकन्ध्वादित्वात् पररूपं वा । परस्परसमानार्थाभ्याम् ऐकान्यशब्दाभ्यां[1] युक्ता प्रथमा तिङ्विभक्तिर्वा अनुदात्ता[2] छन्दसि । 'प्रजामेका रक्षत्यूर्जमेका' । 'न्यन्ये धिष्णिया उप्यन्ते नान्ये' । 'स्थालीभिरन्ये ग्रहा गृह्यन्ते वायव्यैरन्ये' । रक्षति । धातुस्वरः, शप्तिपोरनुदात्तत्वात् । 'उप्यन्ते[3]' 'गृह्यन्ते' इत्यनयोर्यक्स्वरः । अदुपदेशात् परत्वाल्लसार्वधातुकमनुदात्तम् । 'तस्मादेको द्वे जाये विन्दते' इत्यादौ सङ्ख्यावाची एकशब्द इत्यन्यशब्दसमानार्थत्वा-[4]भावान्नायं निषेधः । न च अन्यशब्दसाहचर्यादेव सङ्ख्यावाचकैक शब्दव्यावृत्तेः समर्थग्रहणमफलम् इति वाच्यम्[5] ; 'निपातैर्यद्यदि' इत्यत्र निपातग्रहणेन 'साहचर्यमत्र प्रकरणे न व्यवस्थापकम्' इति ज्ञापनात् ॥

## [४३२] ॥ यद्वृत्तान्नित्यम् ॥
(8—1—66)

वर्ततेऽस्मिन्निति वृत्तम् । यदो वृत्तं[6] यद्वृत्तम्, यत्र यच्छब्दो वर्तते तदित्यर्थः । तस्मात् परं तिङन्तं नित्यं[7] नानुदात्तं भवति[8] । 'य एतेन हविषा यजते' । 'यस्मिन्नश्व आलभ्यते' ।

---

1. आभ्यां घ.
2. निहन्यते घ.
3. उप्यन्ते.......इत्यादौ इत्यन्तम् घ. नास्ति ।
4. -शब्दतुल्यार्थत्वा- क.
5. इति वाच्यम् घ. क. नास्ति ।
6. यदो वृत्तम् घ. नास्ति ।
7. नित्यम् घ. नास्ति ।
8. भवति घ. नास्ति ।

'यर्हि हविर्धाने प्राची प्रवर्तयेयुः'। 'वृत्तग्रहणेन तद्विभक्त्यन्तं प्रतीयते[1] डतरडतमौ च' इत्येतन्नेह आश्रीयते । तेन 'यद्रियङ्-वायुर्वाति', 'यत्कामास्ते जुहुमः' इत्यादौ निघातनिषेधः सिद्धः । यदञ्चति इति यद्रियङ् । 'ऋत्विक्' इत्यादिना क्विन् । 'विष्वग्देवयोः' इति टेः अद्र्यादेशः । तन्वादित्वात् इयङादेशः । न च पञ्चमीनिर्देशात् 'यत्कामास्ते जुहुमः' इत्यादौ व्यवधानात् अस्य अप्रवृत्तिः शङ्क्या ; 'पूजनात् पूजितम्' इत्यत्र पूजितग्रहणेन अत्र प्रकरणे पञ्चमीनिर्देशेऽपि व्यवहिते कार्यप्रवृत्ते-र्ज्ञापनादिति ॥

## (वा) ॥ याथाकाम्य इति वक्तव्यम् ॥

याथाकाम्यं यथेच्छाप्रवृत्तिः देशकालानपेक्षा । तत्र गम्ये वा निघातनिषेधः । 'यत्र क्वचन यजते' ॥

## [४३३] ॥ सगतिरपि तिङ् ॥ (8—1—68)

पूजनवचनेभ्यः काष्ठादिभ्यः परः [2]सगतिः, अपिशब्दात् अगतिश्च तिङ् अनुदात्तो भवति । 'तिङ्ङतिङः' इति निघातो यदादियोगे प्रतिषिद्धः । तद्विषये पुनः अनुदात्तविध्यर्थमिदम्[3] । तत्र सगतौ गतेरपि निघातः । अन्यत्र तिङ्मात्रस्य । 'यत्काष्ठं प्रपचति' । 'यत्काष्ठं पचति' । 'गतिग्रहणेन उपसर्गस्य ग्रहणमिष्यते' । 'यत्काष्ठं

---

1. प्रत्ययौ घ. प्रतियात् ङ.
2. सगतेः अपिशब्दात् अगतेश्च तिङन्तस्य निघातो भवति घ.
3. अनुदात्तप्रवृत्त्यर्थम् घ.

शुक्लीकरोति'। शुक्लीशब्दः च्व्यन्तत्वाद्गतिः, न तूपसर्गः। तेनेह नानुदात्तत्वम्। इह तिङ्ग्रहणात् 'पूजनात् पूजितम्' इति पूर्वसूत्रं सुबन्तविषयं विज्ञायते॥

## [४३४]॥ कुत्सने च सुप्यगोत्रादौ॥

(8—1–69)

'पदात्' इति निवृत्तम्। कुत्सनवाचके सुबन्ते गोत्रादिभिन्ने परतः सगतिरगतिश्च तिङ् अनुदात्तो भवति। पदात् परत्वाभावेऽपि तिङ्निघातार्थमिदम्। 'पचति पूति'। 'प्रपचति पूति'। [1]पूतिशब्दस्य क्रियाविशेषणत्वात् पूतीति[2] नपुंसकम्। 'सुपीति[3] किम्? पचति क्लिश्नाति[4]' इति वृत्तिः। 'चिन्त्यमिदं प्रत्युदाहरणम्, भिन्नवाक्यत्वात् सामर्थ्याभावाच्च' इति हरदत्तः। अगोत्रादाविति किम्? 'पचतिगोत्रम्'।

'सुपि कुत्सने क्रियाया[5] मलोप इष्टोऽतिङीति[6] चोक्तार्थम्।
पूतिश्च चानुबन्धो विभाषितं चापि बह्वर्थम्॥'

भाष्यपठितेयम् आर्या वृत्तौ पठिता। 'मकारलोपोऽतिङीति चोक्तार्थम्' इति द्वितीयपादपाठः[7]। अयमर्थः—सुपि कुत्सने यदनुदात्तत्वं तत् क्रियायाः कुत्सने इति वाच्यम्; साधनकुत्सने मा भूत्। 'पचति पूति'। अस्येदं पाककर्तृत्वमयुक्तम् इति कर्तृत्वमत्र कुत्स्यते, न तु क्रिया। 'पूजितस्य अनुदात्तत्वे काष्ठादिग्रहणं मलोपश्च' इति वार्त्तिकेन यो मलोपः स तिङन्तादन्यत्र इष्टः इति 'मलोपश्च' इति वाक्यं पूर्वाचार्यैरुक्तार्थमिति[8] द्वितीयपादार्थः।

---

1. पूतीति क,
2. पूतीति क. नास्ति।
3. इति घ. नास्ति।
4. अश्नाति ख.
5. क्रीडायां घ.
6. इष्टस्तिङीति क. वर्जं सर्वत्र पाठः।
7. भाष्ये द्वितीयपादः घ.
8. उत्तरार्थमिति। तेन घ.

तेन 'यत् काष्ठं प्रपचति' इत्यादिपूर्वसूत्रोदाहरणे मलोपो न[1]। पूतिश्च चानुबन्धः—पूतिशब्दश्चिद्वक्तव्यः। पूतिशब्दः तिन्नन्त आद्युदात्तः। वसेस्तिन् बाहुलकात् पूञोऽपि भवति। बाहुलकादेव पूञोऽपि[2] गुणाभाव इति हरदत्तः। तस्य निघातनिमित्तस्य अन्तोदात्तत्वं यथा स्यादिति चित्त्वमुपसंख्यायते। बह्वर्थं तिङन्तं सुपि कुत्सने परतो विभाषा निहन्यत इति चतुर्थचरणार्थः। 'पचन्ति पूति[3]'। पक्षे धातुस्वरः। यदा निघातः, तदैव पूतिशब्दस्य चित्त्वेन[4] अन्तोदात्तत्वम्। कुत्सन इति किम्? 'पचति शोभनम्'॥

॥ इति सर्वानुदात्तप्रकरणम् ॥

---

1. न क. नास्ति।
2. पूञोऽपि घ. ङ. नास्ति।
3. पचति पूति घ.
4. पूतिशब्दस्यापि चिद्वत्त्वेन घ.

## ॥ अथ प्लुतस्वरः ॥

### [४३५] ॥ वाक्यस्य टेः प्लुत उदात्तः ॥
(8—2—82)

इदं पदचतुष्टयमधिक्रियते आ पादपरिसमाप्तेः ॥

### [४३६] ॥ प्रत्यभिवादेऽशूद्रे ॥ (8—2—83)

प्लुतसंशब्दनात् 'अचश्च' इत्युपतिष्ठते । अशूद्रविषये प्रत्यभिवादे यद्वाक्यं वर्तते, तस्य यः टिः, तस्य अचः प्लुतः स्यात् ; स च उदात्तः । शिष्यादिभिराशिषं प्रयोज्यमाने गुर्वादिर्यदाशिषं प्रयुङ्क्ते स प्रत्यभिवाद इत्याहुः । प्रत्यभिवाद-वाक्यानन्तरम् अकारश्च प्रयोक्तव्यः ॥

"आयुष्मान् भव[1] सौम्येति वाच्यो विप्रोऽभिवादने ।
अकारश्चास्य नाम्नोऽन्ते वाच्यः पूर्वाक्षरः प्लुतः ॥"

इति मनुस्मरणात् । "[2]विप्रग्रहणं त्रैवर्णिकोपलक्षणम् । 'आयुष्मान् भव सौम्य' इति अभिवादयिता वाच्यः । तथा अकारोऽपि तस्य नाम्नोऽन्ते वाच्यः । कीदृशोऽकारः ? [3]पूर्वाक्षरः प्लुतः । केवलो व्यञ्जनान्तश्च स्वरोऽक्षरम् । नाम्नोऽन्त्यः स्वरः प्लुतो वाच्यः । अकारश्च प्रत्यभिवादनवाक्याद्बहिर्भूतः केवलमदृष्ट-प्रयोजनो वाच्य इति [4]तदर्थः" इति मनुव्याख्यातारः । व्याकरणे

---

1. एधि घ.
2. विप्रग्रहणम्.......केवलः इत्यन्तम् क. नास्ति ।
3. प्लुताक्षरः घ.
4. तत् घ. नास्ति ।

तु अयमकारो न विहितः । यत् अर्थाभिधाने उपयुज्यते, तदेव हि व्याकरणेन अनुशिष्यते । अकारश्च अयम् अदृष्टाय प्रयुज्यते इति हरदत्तः । यत्तु 'अस्य नाम्नोऽन्ते योऽकारः[1] स प्लुतो वाच्यः । अकार इत्यजुपलक्षणम् । पूर्वाक्षरश्च प्लुतो वाच्यः । हलन्तविषयमेतत् । हलन्तेषु अन्त्यात् पूर्वोऽच् प्लुतः कार्य इति यावत् । एवं च मनुस्मृतावपि अकारोऽदृष्टार्थो न विहितः । उक्तगत्या टेः प्लुतो भवति इत्येव तदर्थपर्यवसानात्' इति केषाञ्चिद्व्याख्यानम्, तत् अनक्षरार्थत्वादिना हरदत्तेन दूषितम् । तदयं [2]प्रत्यभिवादनप्रयोगः—आयुष्मान् भव सौम्य देवदत्त३ अ । 'प्लुतप्रगृह्या अचि' इति प्रकृतिभावान्न[3] सवर्णदीर्घः । भाष्य-काशिकयोस्तु 'आयुष्मानेधि देवदत्त३' इत्याद्युदाहृतम् । 'आयुष्मान् भव सौम्य' इति मनुस्मृतौ[4] 'भव' इत्यर्थग्रहणम् इति तदाशय इति हरदत्तः । अस्तेर्लोटि 'एधि' इति रूपम् । सौम्यशब्दस्तु न प्रयुक्तः ; प्लुतोदाहरणमात्रतात्पर्येण स्मृत्यर्थानुपसंहारादित्याहुः । इकारोकारान्तयोस्तु नाम्नोः सम्बुद्धौ 'ह्रस्वस्य गुणः' इति गुणे 'एङ् ह्रस्वात् सम्बुद्धेः[6]' इति सम्बुद्धिलोपे च एजन्तं रूपम् । तत्र 'एचोऽप्रगृह्यस्य' इति वक्ष्यमाणे प्लुतविकारे सति, अकारे परतः 'तयोर्य्वावचि' इति प्लुतविकारस्य यणादेशो भवति । 'आयुष्मान् भव सौम्य पिनाकपाणा३य' । 'शम्भा३व' । ऋकारान्ते तु 'ऋतो ङि' इति गुणे रपरे[7] टेरचः प्लुतः । 'पित३र' । लृकारान्तम् यदि[8] नाम, तर्हि ऌकारः प्लुतो वाच्यः[9] । ततो रेफोपर्यकारः । एकारान्तस्यैकारान्तवत् प्रयोगः । ओकारान्ते तु

---

1. प्रयुज्यते क. अधिकम् ।
2. प्रत्यभिवादन- क. नास्ति ।
3. -भावो न घ.
4. **मनुस्मरणे** घ. ङ.
5. गुण इति क. नास्ति ।
6. 'एङ् ह्रस्वात् सम्बुद्धेः' इति क. नास्ति ।
7. रपरत्वे टेरचि घ. ङ.
8. ऋकारान्तमपि घ.
9. कार्यः घ.

'गोतो णित्' इत्यत्र गोग्रहणस्यौकारान्तोपलक्षणार्थत्वाण्णिद्वद्भावे[1] वृद्धौ 'गौ३र' 'द्यौ३र' इत्यादि भवति । प्लुतविकारस्तु न भवति; वाक्यान्तस्यैव एचस्तद्विधेरिति वक्ष्यते । एवम् [2]ऐकारान्तौकारान्तयोरपि ऊह्यम् । हलन्ते तु[3] 'अग्निचि३त' 'सोमसु३त' इत्युदाहृतम् आकरे । जश्त्वे[4] 'अग्निचि३द' इत्युदाहार्यमिति अन्ये । अयं च प्लुतः यत्र अभिवादनवाक्यान्तसङ्कीर्तितं[5] नाम, अपत्यप्रत्ययान्तलक्षणगोत्रं वा प्रत्यभिवादनवाक्यान्ते प्रयुज्यते, तत्रैव । इदं च न्यायसिद्धम्; प्रधाने कार्यसम्प्रत्ययात् प्रधानभूते शब्दे प्लुतेन भाव्यम्[6] । शब्दस्य च[7] अर्थद्वारकं प्राधान्यम् । अभिवादयिता च अत्र प्रधानम्; आशीरादेः सर्वस्य तदर्थत्वात् । अतस्तदुपस्थापके नामनि गोत्रे वा प्लुतः, नान्यत्र । तेनेह न—'देवदत्त कुशल्येधि' 'देवदत्त आयुष्मानेधि' इति भाष्यादौ स्थितम् । इष्टिरेवेयम् इति केचित् । न चैवम् 'आयुष्मान् भव सौम्येति वाच्यो विप्रोऽभिवादने' इति मानवविरोधः; 'देवदत्त[8] कुशल्येधि' इति[9] वृत्तिभाष्यादिप्रयोगानुरोधात्[10] 'आयुष्मान्' इत्यादौ अर्थग्रहणात् । अत एव 'एधि' इति वृत्तिप्रयोगात् 'भव' इत्यर्थग्रहणम् इति हरदत्तेनोक्तम् । एवं च 'वाच्यः पूर्वाक्षरः प्लुतः' इत्यपि नाम्नो गोत्रस्य वा[11] यदा प्रत्यभिवादनवाक्यान्ते प्रयोगस्तदभिप्रायमिति व्याख्येयम् । इदं त्ववधेयम्—'आयुष्मान् भव देवदत्त' इत्यादौ अनन्त्यस्यापि गुरोः पर्यायेण प्लुतो लभ्यते, 'गुरोरनृतोऽनन्त्यस्याप्येकैकस्य

---

1. णिद्वत्त्वे घ.
2. ऐकारौकारान्तयोः घ.
3. हलन्तेषु घ.
4. -यत्तु घ.
5. -वाक्यसङ्कीर्तनम् घ.
6. भवितव्यम् घ.
7. च क. नास्ति ।
8. -दत्त घ. नास्ति ।
9. इत्यादि घ.
10. -अनुरोधेन घ.
11. वा क. नास्ति ।

प्राचाम्' इति सूत्रात् । एवं च तत्र प्राचांग्रहणस्य विकल्पार्थत्वात् पक्षे न कस्यचित् प्लुतः । न च 'गुरोरनृतः' इति सूत्रात् अत्र[1] कथमेवं लाभ इति वाच्यम् ; यतस्तत्र काशिकायामुक्तम् " 'प्रत्यभिवादे' इत्यादिना यः प्लुतो विहितस्तस्यैव अयं स्थानविशेष उच्यते । प्राचांग्रहणं विकल्पार्थम्[2] 'आयुष्मानेधि दवदत्त' " इति । हरदत्तोऽपि उक्तं वृत्तिग्रन्थम् 'क्वचित् पठ्यते' इत्युपक्रम्य अनूद्य, 'नेदं स्वतन्त्रं प्लुतविधानम्' इत्यादिना व्याख्याय, 'तेन [3]प्रत्यभिवाद्यमानार्थस्य च पदस्येदं प्लुतविधानं यत्र तत्रस्थस्य गुरोरिति द्रष्टव्यम् । प्राचांग्रहणं विकल्पार्थम् इति । तेन पक्षे न कस्यचिदपि प्लुतो भवति' इत्याह । 'अग्नीत्प्रेषणे परस्य' च इति सूत्रे 'सर्वः प्लुतः साहसमनिच्छता विभाषा कर्तव्यः[4]' इति वदतो भाष्यकारस्यापि सम्मतमिदम् । एवं च 'वाच्यः पूर्वाक्षरः प्लुतः' 'प्लावनं च नाम्नः' इति नित्यवदाम्नातमपि मन्वापस्तम्बादिस्मरणं विकल्पपरतया व्याख्येयम् ; व्याकरणोपसंहारात्[5] । 'एचोऽप्रगृह्यस्य' इत्यादिप्लुतविकारस्य मन्त्रादिभिः अनुक्तत्वेन तदर्थं व्याकरणोपसंहारस्य आवश्यकत्वात् इति ॥

स्यादेतत्—यदि प्रत्यभिवादे प्लुतो न नियतः, तदा—

'अविद्वांसः प्रत्यभिवादे नाम्नो[6] ये न प्लुतिं विदुः ।
कामं तेषु तु विप्रोष्य स्त्रीष्विवायमहं वदेत् ॥'

इति [6]पस्पशाभाष्योक्तवचनविरोधः । 'स्त्रीवन्मा भूम इत्यध्येयं व्याकरणम्' इति तत्रत्यभाष्यानुपपत्तिश्च ; प्लुत्यज्ञानेऽपि प्रत्यभिवादनोपपत्तेरिति । अत्राहुः—'प्लुतिग्रहणं प्रत्यभिवादप्रकारोपलक्षणम् ;

---

1. तु घ. अधिकम् ।
2. प्राचांग्रहणस्य विकल्पार्थत्वात् घ.
3. प्रत्यभ्युद्यमानार्थस्य क.
4. वक्तव्यः ङ.
5. व्याकरणेनोपसंहारात् घ.
6. नियमेन प्लुतिं विदुः । कामान्धेषु च विप्रेषु घ.
7. पस्पशाभाष्योदाहृतवचन- घ. ङ.

ये प्रत्यभिवादप्रकारं[1] न जानन्ति ते नाभिवादकाः[2]' इति । यद्वा ; 'प्लुतानभिज्ञानामभिवादनं निषिध्यते प्रत्यभिवादे[3] प्लुतानैयत्येऽपि' इति । इदं तु विचार्यम्—यदा 'देवदत्त' इत्यादौ अनन्त्यस्य गुरोः प्लुतः, यदाच न कस्यचित् प्लुतः, तदा 'अकारश्चास्य नाम्नोऽन्ते' इति विहितोऽकारः प्रयोक्तव्यो न वेति । अथ वाक्यस्य इति किमर्थम् ? वाक्यस्थानां सर्वेषां पदानां मा भूत् । अन्यथा 'पदस्य' इत्यनुवृत्तेः प्रतिपदं वाक्ये टेः प्लुतः प्रसज्येत[4] इत्याहुः । टिग्रहणं व्यञ्जनान्तानामपि टेरचः प्लुतो यथा स्यादिति । अन्यथा प्लुतश्रुत्या अच्परिभाषोपस्थानात् अचो वाक्यविशेषणत्वात्तदन्तविधौ अजन्तस्य वाक्यस्य प्लुतः स्यात् , यथा नपुंसकह्रस्वत्वम् 'ग्रामणि कुलम्' इत्यादौ अजन्त एव भवति, न तु 'सुवाक्' इत्यादौ । टिग्रहणे तु तत्सामर्थ्यात् टिना अज्विशेष्यत इति इष्टसिद्धिः । 'अशूद्र इति किम् ? 'आयुष्मानेधि तुषजक' इति भाष्यवृत्त्यादौ[5] । तुषज जुगुप्सायाम् इति स्मृतेरेवंविधं तस्य नाम । ततः कुत्सिते कः । 'अत्यल्पमिदमुच्यते 'अशूद्रस्त्र्यसूयकेष्विति वक्तव्यम्[6]' इति भाष्ये । स्त्रियाम् 'आयुष्मती भव गार्गि[7]' । 'स्त्रीणामपि नामगोत्राभ्यामभिवादप्रत्यभिवादौ स्त इति मते निषेधोऽयमारब्धः' इति हरदत्तः । अविनीतोऽसूयकः तस्मिन् प्रतिषेधो न[8] वक्तव्यः । स हि यावदसूयकत्वेन न ज्ञातः, भवितव्यमेव तावत् प्लुतेन । यदा तु असूयकोऽयं मामुपहसितुकाम[9] इति जानाति, तदा न

1. प्रत्यभिवादे प्रकारं क.
2. नाभिवादनीयाः क.
3. प्रत्यभिवादने क.
4. स्यात् घ.
5. भाष्यम् घ.
भाष्यवृत्त्यादौ । कुत्सिते कः । अशूद्रस्य तु जुगुफ्सितमिति स्मृतेः । एवंविधं तस्य नाम । अत्यल्पम् क. ङ.
6. वक्तव्यम् ङ. नास्ति ।
7. गार्गीति क.
8. न क. नास्ति ।
9. मामुपहसितुकामोऽयम् क. ङ.

प्रत्यभिवादनं प्रयुङ्क्ते ; प्रत्युत शापमेव ददाति । तदुक्तं भाष्ये—'असूयकस्त्वं[1] जाल्म, त्वं न प्रत्यभिवादनमर्हसि, भिद्यस्व वृषलस्थालिन्[2]' इति ॥

## (वा) भोराजन्यविशां वेति वक्तव्यम् ॥

" 'भोः' इति स्वरूपग्रहणम् । तस्य च [3]संज्ञागोत्रत्वाभावात् अप्राप्ते विभाषा ; इतरयोस्तु तन्नाम्नोर्ग्रहणं प्राप्तविभाषा च[4] " इति हरदत्तः । 'आयुष्मानेधि देवदत्त भो३ः' । 'आयुष्मानेधीन्द्रवर्म३न्' । 'आयुष्मानेधीन्द्रपालित३' । पक्षे प्लुतरहितमुदाहार्यम् । 'सर्वः प्लुतः' इति वचनं भाष्यकृत इति राजन्यविशोर्न [5]वार्त्तिकवैफल्यम् ॥

## [४३७] ॥ दूराद्धूते च ॥ (8—2—84)

हूतं ह्वानम् । भावे निष्ठा । हूतग्रहणं सम्बोधनमात्रोपलक्षणम् । दूरात् सम्बोधने यद्वाक्यं वर्तते[6], तस्य टेः प्लुत उदात्तः । 'आगच्छ भो माणवक देवदत्त३[7]' । 'एकश्रुति दूरात् सम्बुद्धौ' इति टेरन्यत्र वाक्यमेकश्रुति[8] । प्लुतविषये[9] तु निरवकाशत्वात् प्लुतेनैकश्रुत्यबाधः । यत्र स्थितस्य प्राकृतात् प्रयत्नात् प्रयत्नविशेषे उपादीयमान एव शब्दः श्रूयते, तदिह दूरत्वेन विवक्षितम् इति दूरत्वस्य अव्यवस्थितत्वात् प्लुतस्यापि अव्यवस्था इति न चोदनीयम् । हूतम् इत्यनेन सम्बोधनोपलक्षणात्

1. कथकस्त्वं क.
2. -स्थायिम् क.
   -स्थालिम् ख.
3. असंज्ञागोत्रत्वात् क. ङ.
4. च क. नास्ति ।
5. वार्त्तिक- -क नास्ति ।
6. वर्तते क. नास्ति ।
7. यज्ञदत्त ङ.
8. एकश्रुतिः क.
9. प्लुताविषयकत्वात् क.

आह्वानाभावेऽपि भवति । 'सक्तून् पिब देवदत्त३' 'ब्रह्म३न् त्व१ राजन्' । 'लाजि३न् शाचि३न् यशो ममाँ४' । 'सुश्लोकाँ४' 'सुमङ्गलाँ४' इत्यादौ 'दूराद्धूते च' इति प्लुत इति वेदभाष्यम् । 'एकश्रुति दूरात् सम्बुद्धौ' इत्यैकश्रुत्यं तु न, व्यत्ययात् । आमन्त्रिताद्युदात्तत्वम् । प्लुतोदात्तस्य असिद्धत्वादुभयोः समावेशः ॥

## [४३८] ॥ हैहेप्रयोगे हैहयोः ॥ (8—2—85)

दूराद्धूते यद्वाक्यं वर्तते[1] तत्र हैहेशब्दयोः[2] प्रयोगे तयोः प्लुत उदात्तो भवति । हूयमानवाचिनो वाक्यान्तस्थितस्य पूर्वेण प्लुतः 'प्रधाने कार्यसम्प्रत्ययः' इति न्यायात् हैहयोः[3] अतदर्थत्वान्न प्रप्नोतीति वचनम् । 'देवदत्त है३' 'है देवदत्त३' । एवं हेशब्देऽपि[4] ऊह्यम् । हैहयोरिति[5] किम् ? तयोः प्लुतो यथा स्यात् ; अन्यथा[6] अनन्त्यस्यापि हूयमानवाचिन[7] एव आरम्भसामर्थ्यात् प्लुतः स्यात् । हैहेप्रयोगग्रहणं तु व्यर्थम् । न च तदभावे 'हे३ देवदत्त' इत्यत्र न स्यात्, अनन्त्यत्वात्, अतो हैहेप्रयोगमात्रे यथा स्यादिति तद्ग्रहणम् इति वाच्यम् ; एवं सति सूत्रवैयर्थ्यात् । 'देवदत्त हे३' इत्यत्र हेशब्दद्योत्यसम्बोधनस्य[8] प्रथमप्रवृत्तामन्त्रितेनैव[9] द्योतितत्वेन हेशब्दस्य आनर्थक्यात् एतत्सूत्राप्रवृत्तेः । तस्मादारम्भसामर्थ्यात् उक्तबाधकद्वयमपि बाधित्वा उभयत्र तयोः प्लुतसिद्धेः तत्पदवैयर्थ्यम् । 'प्रयोगे हैहयोः' इत्येवास्तु ;

1. वर्तते क. नास्ति ।
2. हैहयोः क.
3. हैहेशब्दयोः घ.
4. हे देवदत्त इत्यत्रापि क.
5. इति घ. नास्ति ।
6. अन्यथा क. नास्ति ।
7. -वाचिनः क. नास्ति ।
8. हेशब्दद्योत्यस्य सम्बोधनस्य घ.
9. प्रथमप्रयुक्तामन्त्रितेनैव ङ.

सन्निधानात् हैहेप्रयोगलाभात् । ततश्च प्रयोगग्रहणसामर्थ्यादेव हैहेप्रयोगमात्रे भविष्यतीति । न च 'हे३ देवदत्त' इत्युदाहरणे पूर्वेण वाक्यान्तस्य टेः प्लुतोऽस्तु ; अविरोधादुभयोः सम्भवादिति वाच्यम् ; तक्रकौण्डिन्यन्यायेन सत्यपि सम्भवे हैहेप्लुतस्य वाक्यान्तटिप्लुतबाधकत्वात्' इति हरदत्तः ॥

## [४३९] ॥ गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम् ॥ (8—2—86)

ऋकारभिन्नस्य अनन्त्यस्यापि[1] गुरोः, अपिशब्दात् अन्त्यस्यापि टेरेकैकस्य प्लुतो भवति प्राचां मते । प्रत्यभिवादे दूराद्धूते च यः प्लुतो विहितः, तस्यैव अयं [2]स्थानविशेषविधिः, न तु इदमपूर्वं प्लुतविधानमित्युक्तम् । तेन तत्रत्योदाहरणेषु अनन्त्यस्यापि गुरोः पर्यायेण प्लुत उदाहार्यः । प्राचांग्रहणस्य विकल्पार्थत्वात् पक्षे न कस्यचित् प्लुतः । 'अनृतः' इति वचनात् कृष्णमित्रशब्दे ऋकारस्य न प्लुतः । एकैकग्रहणं पर्यायार्थम् । न च 'अनुदात्तं पदमेकवर्जम्' इति वचनात् उदात्तस्य अनेकस्य [3]प्लुतस्य यौगपद्यासम्भवे सिद्धः पर्याय इति वाच्यम् ; 'पूर्वत्रासिद्धम्' इति प्लुतस्य[4] असिद्धत्वेन 'अनुदात्तं पदम्' इति परिभाषायाः तदेकवाक्यत्वाभावात् । तत्र कार्यकालपक्षाश्रयणे च 'उदात्तादनुदात्तस्य स्वरितः', 'उदात्तस्वरितयोर्यणः' इत्यादावपि तदेकवाक्यतापत्तौ तत्सूत्रविहितस्वरितमादाय शेषनिघातप्रसङ्गः । न चेष्टापत्तिः ; 'उदात्तादनुदात्तस्य' इति सूत्रस्थवृत्त्यादिग्रन्थविरोधात् । 'यज्ञस्य घोषत्' 'अजा ह्यग्नेः' इत्यादिप्रयोगविरोधाच्च । यत्तु अत्र

---

1. अपि क. नास्ति । 3. प्लुतस्य क. नास्ति ।
2. स्थानि- घ, 4. प्लुतविधेः क.

सूत्रे भाष्ये हरदत्तग्रन्थादिषु अस्याः परिभाषायाः कार्यकालत्वमङ्गीकृत्य 'शोभनः खल्वसि देवदत्त' इत्यादौ 'अनुदात्तं प्रश्नान्ताभिपूजितयोः' इति सूत्रेण विधीयमानानामनुदात्तप्लुतानां समावेशनिवृत्तिः एकैकग्रहणस्य फलम् इत्युक्तम्, [1]तत् उक्तपरिभाषायाः कार्यकालत्वाभ्युपगमेऽपि [2]नैकैकग्रहणवैयर्थ्यम् इत्येवम्परम्, न तु अस्य वस्तुतः कार्यकालत्वम्; उक्तदोषात्। 'न मु ने' इति सूत्रे हरदत्तेनैव अत्र परिभाषायां कार्यकालपक्षस्य दुष्टत्वप्रतिपादनाच्च। 'अनन्त्यस्यापि' इति अपिशब्देन [3]प्रकृतष्टेः समुच्चीयते, अनन्त्यस्यापि [4]गुरोः अन्त्यस्यापि टेः इति, न तु सन्निहितोऽपि गुरुः। तेन प्रकृतसूत्रविहितगुरुस्थानिकप्लुतानामेकैकग्रहणात् पर्यायेऽपि पूर्वसूत्रेण लघोरन्त्यस्य यः प्लुतः तस्य गुरुप्लुतस्य च [5]क्वचन समावेशः स्यादिति न[6] शङ्कनीयम्; अपिशब्देन टिप्लुतसमुच्चयात् तस्यापि पर्यायत्वसिद्धेरिति। अत्र 'प्राचाम्' इति योगं विभज्य सर्वप्लुतविधिशेषत्वेन व्याख्यानात् 'सर्वः प्लुतः साहसमनिच्छता विभाषा [7]कर्तव्यः' इति भाष्योपपत्तिरिति हरदत्तादयः। 'साहसम्—शास्त्रत्यागः। तेन शास्त्रमत्यजतापि अभियुक्तस्मरणात् सर्व एव प्लुतो विभाषा विधेय इत्यर्थः' इति हरदत्तः॥

## [४४०] ॥ ओमभ्यादाने ॥ (8—2—87)

अभ्यादनमारम्भः। तत्र य ओमृशब्दस्तस्य प्लुत उदात्तः स्यात्। 'अच्परिभाषोपस्थानात् अच एवायं प्लुतः[8]। मकारस्त्वर्धमात्रः।

---

1. तदुक्त- घ. नास्ति।
2. एकैकवैयर्थ्यम् घ.
3. टिः प्रकृतः घ.
4. अनन्त्यस्यापि पूर्वसूत्रेण लघोरन्त्यस्य यः क.
5. क्वचन क. नास्ति।
6. न घ. नास्ति।
7. वक्तव्यम् घ.
8. स्यात् क. अधिकम्।

तेन समुदायः अर्धचतुष्टयमात्रः[1] सम्पद्यते' इति हरदत्तः। प्रातिशाख्ये तु प्रणवस्थस्यौकारस्य अर्धतृतीयमात्रत्वमुक्तम् । तथा च सूत्रम् 'ओकारं तु प्रणव एकेऽर्धतृतीयमात्रं ब्रुवते' इति । (तै. प्रा. अ. १८. सू. १) "प्रणव इति सप्तम्यन्तम् । प्रणवस्थमोकारम्[2] इत्यर्थः । अर्धं तृतीयं ययोस्ते, अर्धतृतीये मात्रे यस्यासौ अर्धतृतीयमात्रम् । इदं [3]चार्धतृतीयत्वविधानम् आरम्भप्रणवविषयमपि" इति त्रिभाष्यरत्नकृन्मतम् । अत एव तत्र "'समुद्रो बन्धुः । ओम्' । 'येभ्यश्चैनत् प्राहुः । ओम्' । 'ओम् । इषे त्वोर्जे' । 'ओम् । ब्रह्म सन्धत्तम्'" इत्याद्युदाहृत्य "कालनिर्णयेऽपि एवं निर्णीतम्—

'स्वाध्यायारम्भशेषस्य प्रणवस्य स्वरस्य च ।
अध्यायस्यानुवाकस्यान्ते स्यादर्धतृतीयता ॥"

इति कालनिर्णयशिक्षावचनमपि उपष्टम्भकत्वेन लिखितम् । कालनिर्णयटीकायां तु उक्तश्लोकपूर्वार्धे चकारेण 'त्रिमात्रत्वं प्रयोगे तु' इति पूर्वश्लोकस्थं त्रिमात्रत्वपदम्[4] आकृष्य 'स्वाध्यायारम्भाङ्गप्रणवस्य[5] यः स्वर ओकारः[6] तस्य त्रिमात्रत्वम् ; स्वरस्य त्रिमात्रत्वे मकारस्य एकमात्रत्वम् ; 'प्लुतादीर्घात् केवलाच्चैकमात्रकः' इति कालनिर्णय एव मकारस्यैकमात्रत्वविधेः । अध्यायानुवाकयोस्तु तस्यार्धतृतीयता' इति वाक्यभेदेन व्याख्यातम् । इदमेव युक्तम्, व्याकरणानुसारात् । उक्तचकारस्वरसात् । 'प्रारम्भकः प्रणवश्चतुर्मात्रः' इति सर्वसम्मतशिक्षावचनाच्च । प्रातिशाख्ये प्रणवस्य स्वरान्तराविधावप्युदात्तत्वमेव इष्टम् ; 'उदात्तो वाल्मीकेः' (तै. प्रा. अ. १७. सू. ६) इति सूत्रस्यैव[7] सिद्धान्तितत्वादिति दिक् ॥

---

1. अर्धचतुर्मात्रः घ.
2. प्रणवस्थं ओङ्कारम् घ.
3. चात्र तृतीयत्व- घ.
4. त्रिमात्रत्वमिति पदं घ.
5. -आरम्भाङ्गस्य प्रणवस्य घ.
6. ओङ्कारः घ.
7. सूत्रस्य केवलं घ

## [४४१] ॥ ये यज्ञकर्मणि ॥
(8—2—88)

यज्ञकर्मणि येशब्दस्य प्लुत उदात्तो भवति । 'ये३ यजामहे' । यज्ञकर्मणि[1] किम् ? 'ये यजामह इति पञ्चाक्षरम्' । 'ये यजामहे' इत्यत्रैव अयं प्लुत इष्यते । तदिह न[2]—'ये देवा दिव्येकादश स्थ' । तदुक्तम्—'ये यज्ञकर्मणि इत्यतिप्रसक्तः[3]' । 'सिद्धं तु ये यजामहे इति ब्रूह्यादिषूपसंख्यानात्' इति । पितृयज्ञे 'ये स्वधामहे' इत्यत्र ये यजामहेस्थानापत्त्या प्लुतसिद्धिः ॥

## [४४२] ॥ प्रणवष्टेः ॥
(8—2—89)

पादस्य अर्धर्चस्य वा[4] टेः स्थाने[5] त्रिमात्र ओकार ओङ्कारो वा यज्ञकर्मणि शास्त्रान्तरे विहितः । स च प्रणव इति प्रसिद्धः । तस्य अत्र साधुत्वमनुशिष्यते । य[6] एवंविधः प्रणवो नाम शास्त्रान्तरे प्रसिद्धः स साधुरिति च[7] भाष्यादौ । 'अपाꣳ रेताꣳसि जिन्वतो३म्' । 'देवञ्जिगाति सुम्नयो३म्' । एतेन 'यज्ञकर्मणि वाक्यस्य टेः प्लुत उदात्तः' इति सूत्रार्थ-प्रतीतेः[8], तत्र सर्वस्य वाक्यस्य प्लुतः प्रणवः कुतो न ? इति परास्तम् ; शास्त्रान्तरप्रसिद्धस्यैवोक्तस्य प्रणवस्य अत्र ग्रहणात् । 'टेः' इत्यनुवृत्तौ टिग्रहणम् टेः[9] सर्वस्य प्लुतो यथा स्यात् । अन्यथा

1. इति क. अधिकम् ।
2. तन्नेह क.
3. अतिप्रसङ्गः घ. ङ.
4. च क.
5. स्थाने क. नास्ति ।
6. यः क. नास्ति ।
7. वा घ.
8. सूत्रार्थः प्रतीयते ख.
9. टेः क. नास्ति ।

प्लुतश्रुत्या अच्परिभाषोपस्थितेः[1] 'देवाञ्जिगाति सुम्नयुः' इत्यादौ हलन्ते टेरचः प्लुतः[2] स्यात्, न तु टिमात्रस्य' इति भाष्यम्। 'टिस्थानिकस्यैव ओकारस्य[3] प्रणवसंज्ञकत्वात् कथं टेरचः प्रणवप्रसङ्ग इति चिन्त्यम्' इति हरदत्तः ॥

## [४४३] ॥ याज्यान्तः ॥
(8—2—90)

याज्यामन्त्राणामन्त्यस्य टेर्योऽच्, तस्य प्लुत उदात्तो यज्ञकर्मणि। 'भुवो यज्ञस्य.....जिह्वामग्ने चकृषे हव्यवाह३म्'। 'स्तोमैर्विधेमाग्नय३इ'। 'अग्नये' इति चतुर्थ्यन्तस्य वक्ष्यमाणः प्लुतत्रिकारः। अनेकवाक्यसमुदायात्मिकासु याज्यासु प्रतिवाक्यं टेः प्लुतो मा भूत्, [4]सर्वान्तस्यैव टेर्यथा स्यात् इत्यन्तग्रहणम् ॥

## [४४४] ॥ ब्रूहिप्रेष्यश्रौषड्वौषडावहानामादेः ॥
(8—2—91)

प्लुत उदात्तो यज्ञकर्मणि। 'अग्नयेऽनुब्रू३हि'। 'अग्नये प्रे३ष्य'। 'अस्तु श्रौ३षट्'। "वौषट्शब्दो[5] वषट्कारोपलक्षणार्थः। तेन 'वषडित्येके समामनन्ति', 'वषाट् इत्येके' 'वौषट् इत्येके[6]' 'वौषाट् इत्येके' 'वौक्षट् इत्येके' 'वौक्षाट् इत्येके' इति षड्विधस्यापि वषट्कारस्य प्लुतः" इति हरदत्तः। 'सोमस्याग्ने वीहि वौ३षट्' इत्यादि। 'अग्निमा३वह'। 'आवह देवान् यजमानाय' इत्यादौ व्यवस्थितविभाषया न

---

1. -उपस्थित्या क.
2. प्रणवः घ. ङ.
3. प्रणवौकारस्य क.
4. सान्तस्यैव क.
5. वषट्शब्दः क.
6. वौषडित्येक इति षड्विधस्य क.

प्लुत इत्याहुः । पितृयज्ञे 'अनुस्वधा[1]' इति सम्प्रैषः 'अस्तु स्वधा' इति प्रत्याश्रावणम्[2] । तत्र 'स्वधाशब्दस्य आदिः प्लुतः कार्यः ; ब्रूहिश्रौषट्स्थानापन्नत्वात्' इति हरदत्तः । एवं च 'स्वधा नम इति वषट्करोति' इति पितृयज्ञे श्रवणात् [3]वौषट्-स्थानापत्त्या [4]स्वधानमश्शब्देऽपि आदिः प्लुतः कार्य इति ध्येयम् । रामाग्निचिता तु " 'स्वं रूपं शब्दस्य' इति परिभाषितत्वात् वौषट्शब्दस्यैव प्लुतः, न तत्पर्यायस्य" इत्यपि पक्षान्तरमुक्तम् ॥

## [४४५] ॥ अग्नीत्प्रेषणे परस्य च ॥ (8—2—92)

अग्नीत्प्रेषणवाक्यस्य आदेः, तत एव आदेः परस्य च प्लुत उदात्तः कार्यः[5] । 'ओश्रावयाश्रावययोरेवेदमिष्यते' इति भाष्ये । 'ओ३श्रा३वय[6]' । 'आ३श्रा३वय' । अन्यस्मिन्नग्नीत्प्रेषणे न प्लुतः । 'अग्नीदग्नीन् विहर' । एतच्च[7] प्लुतस्य वैकल्पिकत्वात् व्यवस्थितविभाषया सिद्धम् । अत एव 'आश्रावयौश्रावयश्रावयोमाश्रावयेति वाश्रावयति' इति आपस्तम्बोक्त-निगदेषु तृतीयचतुर्थयोर्न प्लुतः । 'कचित्तु[8] चतुर्थेऽपि[9] प्रणवादुत्तरौ अचौ प्लावयन्ति प्रथम एव निगदः प्रणवाधिकः इति कृत्वा' इति आपस्तम्बसूत्रदीपिकाकृतः । [10]रामाग्निचिता 'अनुश्रावयति' इत्यत्रापि श्राशब्दस्य प्लुत उक्तः । 'आस्वधेत्याश्रावयति' इति पितृयज्ञे । तत्रापि स्थानापत्त्या अयं प्लुतः । यज्ञकर्मणि इत्येव । 'आश्रावयास्तु-श्रौषट्' ॥

---

1. -यज्ञेन स्वधा क.
2. प्रतिश्रवणम् क.
   प्रत्याश्रवणम् घ.
3. वषट्- क.
4. स्वधाशब्देऽस्यादिरुदात्तः प्लुतः कार्य इति घ.
5. कार्यः क. ङ. नास्ति ।
6. 'ओ३श्रावय' क. नास्ति ।
7. सर्वस्य घ. अधिकम् ।
8. केचित्तु घ.
9. चतुर्थेऽपि घ. नास्ति ।
10. रामाग्निचिता तु 'श्रावय' इत्यस्यादेरपि प्लुत उदात्तः क. ङ. वर्जं सर्वत्र

## (वा) ॥ बहुलमन्यत्रापि प्लुत इति वक्तव्यम् ॥

'उद्धर३ उद्धर' इति भाष्यम् । अत एव बहुलग्रहणात् 'अग्ना३इ पत्नीवा३ः सजूर्देवेन त्वष्ट्रा सोमं पिब' इत्यत्र आद्ययोरामन्त्रितयोः टेः प्लुतसिद्धिः । पत्नीशब्दान्मतुपः 'मतुवसोरुसम्बुद्धौ छन्दसि' इति रुत्वम् । 'छन्दसीरः' इति मतुपो मस्य वः[1] । उभयत्र षाष्ठम् [2]आमन्त्रितायुदात्तत्वम् । आष्टमिको [3]निघातस्तु न द्वितीयस्य ; व्यत्ययात् । 'आमन्त्रिते छन्दसि वा प्लुतविकारोऽयं वक्तव्यः' इति वचनात् आद्यस्य प्लुतविकारे सति त्रयोऽप्यच उदात्ताः । 'अनुदात्तं पदम्' इति तु नेह प्रवर्तते, असिद्धत्वात् इत्युक्तम् । न च अत्र 'दूराद्धूते च' इति प्लुतसिद्धिः ; वाक्यान्तस्यैव टेस्तेन प्लुतप्रवृत्तेः । अत एव "अप्राप्त एव प्लुते 'आमन्त्रिते छन्दसि' इति वचनम्" इति हरदत्तः ॥

## [४४६] ॥ विभाषा पृष्टप्रतिवचने हेः ॥

(8—1—93)

हेर्वा प्लुत उदात्तः स्यात् पृष्टस्य आख्याने गम्ये । 'अकार्षीः कटं देवदत्त ? अकार्षं हि३' । पक्षे प्लुताभावः । 'सर्वः प्लुतः' इति वचनं न सूत्रकारस्य इति तेन विभाषाग्रहणं कृतम् । प्रतिवचनशब्दो विरुद्धेऽपि वचने वर्तते ; प्रतिशब्दस्य विरोधेऽपि दृष्टेः, 'प्रतिमल्लः' 'प्रतिकुञ्जरः' इति यथा । पृष्टस्याख्यानेऽपि वर्तते । पृष्टग्रहणाभावे न विवक्षितार्थो गम्यत इति तद्ग्रहणम् ॥

---

1. वत्वम् घ.
2. आमन्त्रित- घ. नास्ति ।
3. निघातो द्वितीयस्य न घ.

## [४४७] ॥ निगृह्यानुयोगे च ॥
(8—2—94)

'निगृह्य' इति ल्यबन्तम् । स्वमतात् प्रच्यावनं निग्रहः । अनुयोगस्तस्य आविष्करणम् । किञ्चिद्वादिनं स्वमतात् प्रच्याव्य, यस्मात् असौ प्रच्यावितः, तस्यैव मतस्य, एवं किल त्वं निरुपपत्तिकं आत्थेति सामर्षं पुनराविष्करणे यद्वाक्यं वर्तते[1] तस्य टेः प्लुत उदात्तो भवति[2] । 'नित्यः शब्द इत्यात्थ३' ॥

## [४४८] ॥ आम्रेडितं भर्त्सने ॥
(8—2—95)

आम्रेडितमत्र लक्षणया द्विरुक्तभागद्वयम्, न तु द्विरुक्तपररूपमेव ; तन्मात्रस्य भर्त्सने वृत्त्यसम्भवात् । 'एकैकस्य' इति मण्डूकप्लुत्या अनुवर्तते । भर्त्सने यत् द्विरुक्तभागद्वयम्, तस्य टेः प्लुतः पर्यायेण उदात्तः । 'चोर३ चोर घातयिष्यामि त्वाम्' । '[3]मारयिष्यामि त्वा चोर चोर३' । 'वाक्यस्य टेः इति अधिकारेऽपि अत्र अनन्त्यस्य प्लुतो भवति । 'वाक्यादेरामन्त्रितस्य' इत्यादिना भर्त्सने वाक्यादेरेव पदस्य द्विर्वचनविधानात् । एवं च 'भर्त्सने पर्यायेण इति वक्तव्यम्[4]' इति वार्तिकं नारम्भणीयम्[5] ; एकैकग्रहणानुवृत्त्या आम्रेडितशब्दलक्षणया च तदर्थसिद्धेरिति ॥

---

1. प्रवर्तते घ.
2. भवति घ. नास्ति । भवति वा ङ.
3. चोर चोर३ इति वा । घ,
4. वाच्यम् घ.
5. आरभ्यम् घ.

## [४४९] ॥ अङ्गयुक्तं तिङाकाङ्क्षम् ॥
(8—2—96)

आकाङ्क्षतीति आकाङ्क्षम् । पचाद्यच् । अङ्गशब्देन युक्तं तिङन्तं भर्त्सने प्लुतं भवति, यदि किञ्चित् अपरम् आकाङ्क्षति भर्त्सने । 'अङ्ग कूज इदानीं ज्ञास्यसि जाल्म' । अङ्गशब्दोऽत्र अमर्षे ॥

## [४५०] ॥ विचार्यमाणानाम् ॥ (8—2—97)

'कोटिद्वयस्पृक् विज्ञानं[1] विचार इति कथ्यते' ।
विचार्यमाणस्तज्ज्ञानविषयीभूत उच्यते ।

इह तु विचार्यमाणार्थविषयत्वात् वाक्यानि विचार्यमाणानि' इति हरदत्तः । तेषां वाक्यानां टेः प्लुत उदात्तः । 'होतव्यं दीक्षितस्य गृहा३इ न होतव्य३मिति' । गृहेशब्दस्य वक्ष्यमाणः प्लुतविकारः । 'अन्वारभ्यः पशु३र्नान्वारभ्य३ इति' ॥

## [४५१] ॥ पूर्वं तु भाषायाम् ॥ (8—2—98)

नियमार्थमिदम् । तुशब्दोऽवधारणे । विचार्यमाणवाक्यद्वयमध्ये पूर्वमेव वाक्यं प्लुतं लभते भाषायाम्[2] । 'अहिर्नु३ रज्जुर्नु' । नुर्वितर्के । तुशब्द इष्टतोऽवधारणार्थः ॥

## [४५२] ॥ प्रतिश्रवणे च ॥ (8—2--99)

अत्र[3] यद्वाक्यं वर्तते तस्य टेः प्लुत उदात्तः । प्रतिश्रवणशब्दः प्रतिज्ञानेऽभ्युपगमे श्रवणाभिमुख्ये च वर्तत इति

---

1. ज्ञानं ङ. वर्जे सर्वत्र
2. भाषायाम् क. नास्ति ।
3. अत्र वाक्यस्य टेः प्लुतः घ.

वृत्तौ । प्रतिज्ञा नाम[1]—प्रार्थितस्य देयत्वेन संवादः । अभ्युपगमः स्वीकारः । क्रमेण उदाहरणानि । 'गां मे देहि, हन्त ददामि३' । 'तावन्मब्रवीस्तु मेऽत्रापीत्यस्तु हि३ इत्यब्रूताम्' इत्यत्र 'विभाषा पृष्टप्रतिवचने हेः' इत्यपि सिद्ध्यति प्लुतः । 'नित्यः शब्दो भवितुमर्हति३' । 'देवदत्त भोः किं माष३ः' । यत्तु वेदभाष्ये 'अस्तुहि३' इत्यत्र[2] 'अभिपूजिते प्लुतः' इत्युक्तम्, तन्मन्दम् ; तथा सति प्लुतस्य अनुदात्तत्वप्रसङ्गात् । 'अनुदात्तं प्रश्नान्ताभिपूजितयोः' इति वचनात् ॥

## [४५३] ॥ अनुदात्तं प्रश्नान्ताभिपूजितयोः ॥
(8—2—100)

प्रश्नवाक्ये यच्चरमं पदं तत् प्रश्नान्तम् । तस्य अभिपूजितवाचिनश्च पदस्य[3] दूराद्धूतादौ यः प्लुतः सूत्रान्तरेण विहितः, तस्य अनेन अनुदात्तत्वमात्रं विधीयते, न तु इदं प्लुतान्तरविधानम् । उत्तरसूत्रस्थः[4] चकारोऽत्र लिङ्गमिति वक्ष्यते । 'अगम३ः पूर्वा३न् ग्रामा३न् अग्निभूत३इ' । 'अनन्त्यस्यापि प्रश्नाख्यानयोः' इति प्रतिपदं टेः प्लुतः स्वरितः प्राप्तः । तत्र प्रश्नान्तपदस्थः प्लुतोऽनेन अनुदात्तः । इतरे तु[5] स्वरिता एव । प्रश्नान्तप्लुतोऽपि पक्षे स्वरित इति वक्ष्यते । अभिपूजिते—'शोभनः खल्वसि देवदत्त३' । 'दूराद्धूते च' इति उदात्तः प्राप्तः ॥

## [४५४] ॥ चिदिति चोपमार्थे प्रयुज्यमाने ॥
(8—2—101)

[6]उपमार्थे 'चित्' इत्यस्मिन् प्रयुज्यमाने वाक्यस्य टेः प्लुतोऽनुदात्तः स्यात् । 'अग्निश्चिद्भाया३त्' । अग्निरिव भायात्

---

1. प्रतिज्ञानम् घ.
2. अत्र घ. नास्ति ।
3. पदस्य क. नास्ति ।
4. -गतः घ.
5. प्लुताः घ. अधिकम् ।
6. उपमाने क.

इत्यर्थः । उपमार्थे किम् ? 'कथञ्चिदाहुः' । कृच्छ्रेऽत्र चिच्छब्दः । अग्निरिव प्रयुज्यमाने किम् ? 'अग्निर्माणवको भायात्' । अग्निरिव माणवको भायादिति [1]चिदर्थ उपमा अत्र गम्यते, न तु प्रयुज्यते । "इतिकरणाभावे उपमार्थे अन्यस्मिन् प्रयुज्यमाने 'चित्' इत्यस्य प्लुतविधिर्विज्ञायेत । सति तु तस्मिन् 'प्रयुज्यमाने' इत्येतच्चिच्छब्दस्य विशेषणं गम्यत इति वाक्यस्य टेः प्लुतसिद्धिः । चकारस्तु पूर्वैः प्लुतैः अस्य समुच्चयं द्योतयन् समुच्चयस्य भेदनिबन्धनत्वात् प्लुतान्तरमिदम्, न तु पूर्वसूत्रवत् दूराद्धूतादिषु विहितस्य प्लुतस्य अनुदात्तत्वगुणमात्रविधानम्[2] इति ज्ञापयति । एतदेव लिङ्गं पूर्वसूत्रे गुणमात्रविधानस्य[3]" इति हरदत्तः ॥

## [४५५] ॥ उपरिस्विदासीदिति च ॥

(8—2—102)

अस्य टेः प्लुतोऽनुदात्तः । 'अधःस्विदासी३दुपरिस्विदासी३त्' । 'विचार्यमाणानाम्' इत्युभयत्र टेः प्लुते[4] सिद्ध एव उत्तरवाक्यप्लुतस्य अनुदात्तत्वविध्यर्थं सूत्रम् । अत एव पूर्ववाक्ये प्लुत उदात्तः । उत्तरवाक्ये प्लुतस्य अनुदात्तत्वे 'स्वरितात् संहितायाम्' इत्यैकश्रुत्यम् ॥

## [४५६] ॥ स्वरितमाम्रेडितेऽसूयासम्मतिकोपकुत्सनभर्त्सनेषु[5] ॥ (8—2—103)

स्वरितः प्लुतः स्यात् आम्रेडिते परे[6] असूयादौ गम्ये । परगुणासहनम्[7]—असूया । सम्मतिः—पूजा । कोपः—क्रोधः ।

1. चिदत्र उपमार्थः घ.
2. अनुदात्तत्वमात्रविधानम् घ. -अनुदात्तत्वगुणमात्रविधिः म, ङ.
3. -विधेः घ.
4. प्लुतः सिद्धः घ.
5. -भर्त्सनेषु घ. नास्ति ।
6. परतः क.
7. परगुणानाम् असहनम् क.

कुत्सनम्—निन्दा । एते च प्रयोक्तृधर्माः । क्रमेण उदाहरणानि । 'अभिरूपक३ अभिरूपक रिक्तं ते आभिरूप्यम्' । 'अभिरूपक३ अभिरूपक शोभनः खल्वसि' । 'अविनीतक३ अविनीतक इदानीं ज्ञास्यसि जाल्म' । '[1]शक्तिके३ शक्तिके रिक्ता ते शक्तिः' । सम्मतौ अनुकम्पायां कन् । अन्यत्र कुत्सिते कः । शक्तिशब्दः तद्वति लाक्षणिकः । 'वाक्यादेरामन्त्रितस्य' इति सर्वत्र द्वित्वम्[2] । अत एव 'वाक्यस्य टेः' इत्यधिकारेऽपि वाक्यादौ प्लुतः ॥

'असूयादिषु वा वचनम्' इति वार्त्तिकम् । " 'सर्वः प्लुतः' इति वचनमन्यदीयम् [3]इति वार्त्तिकारम्भः' इति हरदत्तः ॥

## [४५७] ॥ क्षियाशीःप्रैषेषु तिङाकाङ्क्षम् ॥
(8—2—104)

क्षियादिषु गम्येषु यत् तिङन्तमितराकाङ्क्षं तस्य टेः प्लुतः स्वरितः स्यात्[4] । क्षिया शिष्टाचारोल्लङ्घनम् । 'स्वयं ह रथेन याति३, उपाध्यायं पदातिं गमयति' । अत्र पूर्वं तिङन्तम् उत्तरमाकाङ्क्षते । आशिषि—'पुत्रान् लप्सीष्ठा३ः धनं च' । प्रैषे—'यवांश्च लुनीहि३, सक्तूंश्च पिब३' । तिङाकाङ्क्षं किम् ? 'दीर्घं ते आयुरस्तु' । "अत्र तिङाकाङ्क्षग्रहणं द्विः क्रियते, 'अङ्गयुक्तम्' इत्यत्र[5] प्रकृते च । एकमकर्तुं शक्यम् । एवं सूत्र्यताम् 'उपरिस्विदासीदिति च' इत्यनन्तरम् 'अङ्गयुक्तं तिङाकाङ्क्षम्' 'क्षियाशीः[6]प्रैषेषु स्वरितः' ततः 'आम्रेडितेऽसूया' इत्यादि" इति हरदत्तः । यद्यपि एवम् 'अङ्गयुक्तम्' इत्यत्र भर्त्सनानुवृत्तिर्न

---

1. शक्तीक३ शक्तीक क. ङ. वर्जं सर्वत्र
2. द्विर्वचनम् घ. ङ.
3. इति वार्त्तिकारम्भः घ. नास्ति ।
4. स्यात् घ. नास्ति ।
5. इति सूत्रे क.
6. क्षियाशीरिति स्वरितपदघटितम्, ततः आम्रेडिते घ.

स्यात् ; 'आम्रेडितं भर्त्सने' इत्यस्य व्यवहितत्वात्, 'अनुदात्तम्' इति च अनुवर्तेत इति दोषः, तथापि मण्डूकप्लुत्या भर्त्सनानुवृत्तिर्भविष्यति । यद्वा 'आम्रेडितं भर्त्सने' इत्येतदपि 'उपरिस्विदासीदिति[1] च' इत्यस्य अनन्तरं करिष्यते । व्याख्यानात् चानुकृष्टत्वाच्च 'अनुदात्तम्' इति न तत्र[2] सम्बध्यते, किं तु उदात्तपदमेवेत्याशयो बोध्यः ॥

## [४५८] ॥ अनन्त्यस्यापि प्रश्नाख्यानयोः ॥ (8—2—105)

'अनन्त्यस्यापि[3]' इति वचनात् 'वाक्यस्य' इति न सम्बध्यते । 'पदस्य' इति वर्तते । अनन्त्यस्य च अन्त्यस्य च पदस्य टेः प्लुतः स्वरितः स्यात् प्रश्ने आख्याने च । 'अगम३ः पूर्वा३न् ग्रामा३न् अग्निभूत३इ' । आख्याने—'अगम३म् पूर्वा३न् ग्रामा३न्' । आद्ये 'अनुदात्तं प्रश्नान्ताभिपूजितयोः' इत्यन्त्यस्य प्लुतस्य अनुदात्तत्वम्[4] । तच्च[5] पाक्षिकम् ; 'अनन्त्यस्यापि' इति अपिशब्देन अन्त्यस्यापि स्वरितप्लुतविधिसामर्थ्यात् तस्यापि भावात्[6] । शिष्टाः प्लुताः स्वरिता एव । 'शृत३ हवी३ः शमितः' 'अग ३ नमीत्' इत्यादौ प्रश्नान्तत्वात् प्लुतः । व्यत्ययात् स्वरितत्वाभावः[7] ॥

## [४५९] ॥ एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्धस्यादुत्तरस्येदुतौ ॥ (8—2—107)

प्लुतविषये अप्रगृह्यस्य एचः पूर्वार्धस्य अकारः[8] स्यात् स च प्लुतः ; 'प्लुतः' इति अनुवृत्तस्य तेनैव[9] सम्बन्धात् । उत्तरार्धस्य इदुतौ

1. -स्विदासीदित्यनन्तरम् घ.
2. तत्र क. नास्ति ।
3. अपि क. नास्ति ।
4. अनुदात्तता घ.
5. एतच्च ङ.
6. अभावात् घ. ङ.
7. स्वरिताभावः घ.
8. अकारः प्लुतः । प्लुत इत्यनु घ.
9. एव क. ङ. नास्ति ।

आदेशौ स्तः, तौ च उदात्तौ, 'उदात्तः' इत्यनुवृत्तस्य ताभ्यां सम्बन्धात्, अदूराद्धूतविषये । आन्तर्यात् एकारैकारयोरुत्तरार्धस्य इकारः । इतरयोरुत्तरार्धस्य उकारः । विषयपरिगणनं कृतम्—'प्रश्नान्ताभिपूजितविचार्यमाणप्रत्यभिवादनयाज्यान्तेष्वेव[1] इति वक्तव्यम्' । क्रमेण उदाहरणानि । 'अगम३ः पूर्वा३न् ग्रामा३न् अग्निभूत३इ' । 'भद्रं [2]करिष्यस्यग्निभूत३इ' । 'होतव्यं दीक्षितस्य गृह३इ न होतव्य३मिति' । 'आयुष्मान् भव सौम्याग्निभूत३इ' । 'उक्षान्नाय वशान्नाय सोमपृष्ठाय वेधसे' । 'स्तोमैर्विधेमाग्नय३इ' । पूर्वार्धस्य योऽयम् अकारः प्लुतो विहितः, स यथाविषयम् उदात्तः, अनुदात्तः, स्वरितो वा बोध्यः । तत्र प्रश्नान्तेऽनुदात्तः[3] स्वरितो वा ; 'अनन्त्यस्यापि प्रश्नाख्यानयोः', 'अनुदात्तम् प्रश्नान्ताभिपूजितयोः' इति सूत्राभ्याम् । अभिपूजितेऽनुदात्त एव, अन्यत्र उदात्त इति विवेकः । परिगणनात् इह न—'विष्णुभूते[4] विष्णुभूते घातयिष्यामि त्वाम्, मारयिष्यामि त्वाम्[5]' । 'आम्रेडितं भर्त्सने' इति प्लुतः । 'अदूराद्धूते' इति[6] न वक्तव्यम् ; आवश्यकपरिगणनादेव अतिप्रसङ्गभङ्गात् । अप्रगृह्यस्य इति किम् ? 'शोभने खलु स्तः[7] खट्वे३' । [8]पदान्तस्यैव एचोऽयं प्लुतविकारः ; 'पदान्तग्रहणं कर्तव्यम्' इति वार्त्तिकात्, 'याज्यान्तः' इत्यतोऽन्तग्रहणानुवृत्त्या पदान्तस्य 'एच इति[9] व्याख्यानाद्वा । तेन अत्र[10] न—'भद्रं करोषि गौ३ः' । विसर्गो ह्यत्र पदान्तः, न तु एच् । न च 'स्वादिषु' इति पदत्वम् ; 'असर्वनामस्थाने'

---

1. एव घ. नास्ति ।
2. करोषि क.
3. उदात्तः घ.
4. विष्णुभूत३इ क.
5. मारयिष्यामि त्वम् घ. नास्ति ।
6. च क. अधिकम् ।
7. असि घ.
8. पादान्तस्य घ.
9. इति क. नास्ति ।.
10. इह घ.

इति निषेधात् । 'सावपि पदं [1]भवति' इति भाष्यपक्षे तु वाक्यान्तस्य एच इति व्याख्येयम् ॥

## (वा) ॥ आमन्त्रिते छन्दसि वा प्लुतविकारोऽयं वक्तव्यः ॥

'अग्ना३इ पत्नीवा३ः' । उपपादितमेतत् ॥

## [४६०] ॥ तयोर्य्वावचि संहितायाम् ॥
(8—2—108)

पूर्वसूत्रविहितयोरिदुतोर्यथासंख्यं यकारवकारौ आदेशौ स्तोऽचि संहितायाम् । 'यज्ञं प्रत्यतिष्ठिप३ यज्ञपत३वितिं' । 'इको यणचि' इत्येव यद्यपि यणादेशः सिद्धः ; तथापि 'अग्ना३-यिदम्' इत्यादौ [2]सवर्णदीर्घशाकलप्रकृतिभावयोः अभावाय चेदम् इति केचित् । तन्न ; 'प्लुतप्रगृह्या अचि' इत्यारम्भसामर्थ्यात् प्लुताधि-कारकार्यमात्रस्य स्वरसन्धौ सिद्धत्वज्ञापनेन अस्य अपवादत्वात् तेषामप्रवृत्तेः । तथा चेदं सूत्रम् 'अग्नायिदम्' इत्यादौ 'उदात्त-स्वरितयोर्यणः' इति स्वरितं बाधितुमेव । अनेन हि विहितयोः य्वोरसिद्धत्वात् नायं स्वरितो भवति । तेन तु तयोः सतोः[3] असिद्धत्वाभावात् अयं स्वरितः स्यादेवेति ॥

॥ इति प्लुतस्वरप्रकरणम् ॥

———

1. भवति घ. नास्ति ।
2. 'उदात्तस्वरितयोर्यणः स्वरि-तोऽनुदात्तस्य' इति स्वरितं बाधितुमिदं विधानम् क.
3. तेन कृतयोः सतोः घ.

## ॥ अथैकश्रुतिप्रकरणम् ॥

### [४६१] ॥ एकश्रुति दूरात् सम्बुद्धौ ॥ (1—2—33)

"सम्बुद्धिः—अनुष्ठेयतया सम्बोधनम्[1] । सम्पूर्वात् बुधेः अन्तर्भावितण्यर्थात् क्तिन् । न त्वत्र 'एकवचनं सम्बुद्धिः' इति कृत्रिमा सम्बुद्धिर्गृह्यते ; 'दूरात्' इत्यपादानकारकान्वयाय क्रियाया एव अपेक्षितत्वात्" इति कैयटहरदत्तादयः । यावति देशे [2]प्राकृतप्रयत्नोच्चारितं सम्बोध्यमानेन न श्रूयते, किं तु अधिकं प्रयत्नमपेक्षते, तदिह दूरत्वं विवक्षितम् । उक्तं सम्बोधनकरणत्वं वाक्यस्यैव सम्भवतीति तस्यैवेदं विधानम् । एका श्रुतिर्यस्य तदिदमेकश्रुति वाक्यम् । दूरात् अनुष्ठेयतया बोधनायां करणीभूतं वाक्यम् एकश्रुति स्यात् । त्रैस्वर्यापवादः । 'आगच्छ भो माणवक देवदत्त३' । 'दूराद्धूते च' इति प्लुतः[3] । स च निरवकाशत्वात् एकश्रुतिं बाधते । एकश्रुतिप्लुताभ्यां च अवयवभेदेन वाक्ये समुच्चिताभ्यां दूरात् सम्बोधनं द्योत्यते । दूरात् सम्बोधनाभावे त्रैस्वर्यमेव । तत्र 'उपसर्गाश्चाभिवर्जम्' इत्याङाद्युदात्तम्[4] । 'गच्छ' इति 'तिङ्ङतिङः' इत्यनुदात्तम् । भोःशब्दो निपातत्वात् आद्युदात्तः । इतरयोरामन्त्रितनिघातः । अत्र[5] 'सम्बुद्धिः' इत्यन्वर्थग्रहणात् 'आगच्छत ब्राह्मणाः' इत्यत्रापि[6] अयमेकश्रुतिः । "क्षीरोदकवत् उदात्तानुदात्तयोर्भेदतिरोधानमेकश्रुतिः ; स्वरिते तु विभागेनोपलब्धिः" इति कैयटोक्तं प्राग्दर्शितम् । "स्वराणामुदात्तादीनामविभागो [7]भेदतिरोधानमेकश्रुतिः" इति वृत्तौ[8] । 'अविभागः' इत्यस्यैव विवरणं 'भेदतिरोधानम्' इति

---

1. सम्बोधना घ. ङ.
2. प्रयत- घ.
3. वाक्यस्य टेः प्लुत उदात्तः क.
4. इत्याङुदात्तम् घ.
5. अत्र क. नास्ति ।
6. ऐकश्रुत्यम् क. अधिकम् ।
7. भेदानामेकश्रुतिरिति घ.
8. वृत्तौ इत्यादि एकश्रुतिः इत्यन्तं घ. नास्ति।

हरदत्तः । कौस्तुभेऽप्येवम् "स्वराणामविभागेन अवस्थानमेकश्रुतिः" इति। "उदात्तानुदात्तस्वरितानां [1]परः सन्निकर्ष ऐकश्रुत्यम्" इति आश्वलायनः। "उदात्तादीनाम् [2]अभिव्यञ्जका ये प्रयत्नाः आयामविस्रम्भाक्षेपाः, तेषामन्यतमस्यैकस्यैव परः सन्निकर्षो विजातीयप्रयत्नाव्यवधानम् इत्यर्थः" इति [3]आश्वलायनसूत्रनारायणवृत्तिकृतः। 'उदात्तसमश्रुतिः प्रचयः' इति तैत्तिरीयकप्रातिशाख्यम्। 'एकश्रुतिः प्रचय इति पर्यायौ' इति मनोरमादौ॥

'उदात्तनिहतस्वारप्रचयेभ्यो विलक्षणा।
एकश्रुतिः ससूत्रेषु पञ्चप्रश्नेषु दृश्यते॥'

इति शिक्षायाम्। 'शीक्षां व्याख्यास्यामः' इत्यत्र वेदभाष्येऽपि प्रचयात् विलक्षणा एकश्रुतिः इत्युक्तम्—उदात्तानुदात्तस्वरितप्रचयसन्नतरोच्चतरैकश्रुतयः सप्त स्वराः—इति। षड्गुरुशिष्यविरचिताश्वलायनवृत्तौ तु 'उदात्तानुदात्तस्वरितानाम्' इति सूत्रमन्यथा व्याख्यातम्—"परशब्दोऽतिशयार्थः। प्रत्यासत्तिः सन्निकर्षः भेदतिरोधानरूपः। 'उच्चैरुदात्तः' 'नीचैरनुदात्तः' 'समाहारः स्वरितः' इति प्रसिद्धोदात्तादिस्वराणां भेदतिरोधानरूपमैकश्रुत्यम्[4]। एका श्रुतिर्ध्वनिः यस्मिन्नुच्चारणे तत् एकश्रुति[5]। तस्य भावे ष्यञ्" इति। अत्रेत्थम् एषां ग्रन्थानामविरोधमाहुः—[6]उच्चैर्निष्पन्नत्वनीचैर्निष्पन्नत्वलक्षणौ उपाधी द्वावेव उदात्तानुदात्तसंशब्दितौ स्वरौ। स्वरितस्तु तदुभयात्मको न ताभ्यां विलक्षणः—इत्येकं मतम्। अन्यत्तु मतम्—उदात्तादयस्त्रयः स्वराः परस्परविलक्षणाः श्रोत्रग्राह्यजातिविशेषरूपाः। 'उच्चैरुदात्तः' [7]इत्यादिसूत्राण्यपि तादृशजातिविशेषोपलक्षणपराणि—इति।

---

1. परसन्निकर्षेण क.
2. अभि- क. नास्ति।
3. आशयेन सूत्रनारायण- क.
4. -रूपमुच्चारणमेकश्रुति क, ङ,
5. इदं वाक्यं क. ङ. नास्ति।
6. उच्चैर्निष्पन्नत्वरूपनीचैर्निष्पन्नत्वरूपौ क.
7. इत्यादीनि सूत्राणि घ.

तत्र आद्यमताभिप्रायेण 'उदात्तानुदात्तयोः भेदतिरोधानमेकश्रुतिः' इति कैयटग्रन्थः। द्वितीयमताभिप्रायेण 'उदात्तादीनामविभागेन अवस्थानम्' इत्यादि वृत्त्यादिग्रन्थाः। नारायणवृत्तिग्रन्थस्तु मतान्तरपरत्वेन नेयः। एकश्रुतिः प्रचयात् विलक्षणा इत्यपि मतान्तरम्। यद्वा गोबलीवर्दन्यायेन तत्रत्यः प्रचयशब्दः 'स्वरितात् संहितायाम्' इति सूत्रमात्रविहितैकश्रुतिपरः। 'विभाषा छन्दसि' इति विहिता तु[1] एकश्रुतिः तत्रत्यैकश्रुतिशब्दवाच्येति दिक्॥

## [४६२] ॥ यज्ञकर्मण्यजपन्यूङ्खसामसु ॥
(1—2—34)

यज्ञक्रियायां मन्त्रे एकश्रुतिः स्यात् जपादीन् विना। 'अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम्'। 'अपाꣳ रेताꣳसि जिन्वतोम्'। 'यज्ञकर्मणि' इत्युक्तेः स्वाध्यायकाले त्रैस्वर्यमेव। तत्र अग्निशब्दः 'अङ्गेर्नलोपश्च' इति निप्रत्ययान्तः[2] प्रत्ययस्वरेण अन्तोदात्तः। मूर्धन्शब्दः कनिन्नन्तः 'श्वन्नुक्षन्' इति सूत्रेऽन्तोदात्तो निपातितः। दिवः। 'ऊडिदम्' इति विभक्तिरुदात्ता। ककुत्। फिट्स्वरेण अन्तोदात्तः। पातेर्डतिः, पतिः। प्रत्ययस्वरेण आद्युदात्तः। 'प्रथेष्षिवन् सम्प्रसारणं च'। षित्वान्ङीष्। पृथिवी। 'उदात्तयणो हल्पूर्वात्' इति ङसुदात्तः। अयम्। इदंशब्दः फिट्त्वात् अन्तोदात्तः। 'आप्नोतेः क्विप् ह्रस्वश्च'। अप्। 'ऊडिदम्' इत्यामुदात्तः। 'सुरीभ्यां तुट् च' इति असुनो नित्त्वात् आद्युदात्तो रेतश्शब्दः। जिवि प्रीणने। नुम्। जिन्वति। तिङ्निघातः। यज्ञप्रयोगे तु 'प्रणवष्टेः' इति टेः प्रणवः। "जपादिपर्युदासात् मन्त्राणामेवेदम् [3]ऐकश्रुत्यम्' इति

1. च घ.
2. निप्रत्ययान्तत्वात् अन्तोदात्तः घ.
3. ऐकश्रुत्यम् घ. नास्ति।

केचित् । प्रसज्यप्रतिषेधाश्रयणात् अमन्त्राणामपि 'ऊहादीनामैकश्रुत्यम्'' इति मतद्वयमपि[2] 'विभाषा छन्दसि' इत्यत्र हरदत्तेन उक्तम् । न च प्रसज्यप्रतिषेधपक्षे परत्वात् 'विभाषा छन्दसि' इति पाक्षिकमैकश्रुत्यं वेदमन्त्रेषु स्यात्, ऊहादिषु अस्य विधेश्चरितार्थत्वात् इति वाच्यम् ; यतः " 'यज्ञकर्मणि' इति कर्मग्रहणं यज्ञानुष्ठानमात्रे सर्वत्र अनेनैव एकश्रुतिर्यथा स्यात् इत्येवमर्थम् '' इति हरदत्तः । पर्युदासपक्षे तु कर्मग्रहणस्य चिन्त्यं फलम् । इदमेव पक्षद्वयमभिप्रेत्य 'मन्त्रो हीनः' इति शिक्षावचने स्वरापराधो हरदत्तेन द्वेधा व्याख्यातः । तथा हि—

" 'मन्त्रो हीनः स्वरतो वर्णतो वा
मिथ्या प्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति
यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥'

इति[3] । स्वरेण, स्वरतः । आद्यादित्वात् तसिः । यदर्थप्रतिपादनाय[4] प्रयुक्तः ततोऽर्थान्तरं स्वरवर्णदोषात् प्रतिपादयन्नभिमतमर्थं नाह इत्यर्थः । वागेव[5] वज्रो वाग्वज्रः । यथेत्युदाहरणम् । इन्द्रशत्रुः[6] इन्द्रशत्रुशब्दः । स हि स्वरकृतापराधात् यजमानं हिंसितवान् । एतच्च 'त्वष्टा हतपुत्रः' इत्यनुवाके स्पष्टमभिहितम् । अत्र 'मन्त्राणामेवैकश्रुतिः[7]' इति पक्षे 'स्वाहेन्द्रशत्रुर्वर्धस्व' इति त्वष्ट्रा स्वच्छन्दं[8] प्रयुक्तस्य मन्त्रत्वाभावात्[9] 'इन्द्रशत्रुः' इति षष्ठीसमासत्वात् अन्तोदात्तत्वे प्रयोक्तव्ये आद्युदात्तः प्रयुक्तः ।

---

1. उदाहरणादीनां घ.
2. अपि घ. नास्ति ।
3. इति घ. नास्ति ।
4. -प्रतिपत्तये घ.
5. एव क. नास्ति ।
6. इन्द्रशत्रुशब्दो हि स्वर- घ.
7. एकश्रुतिपक्षे क.
8. स्वेच्छया क. ङ.
9. नित्स्वरेण आद्युदात्तत्वात् घ.

आद्युदात्तत्वं च अत्र बहुव्रीहिस्वरः ; इन्द्रशब्दस्य रन्नन्तस्य नित्स्वरेण आद्युदात्तत्वात् 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' इति वचनात् । ततो[1] बहुव्रीह्यर्थोपसंहारात् इन्द्र एव अस्य शत्रुः अभवत् इति स्वरापराधः । न च इन्द्रस्य त्वष्टारं प्रति शत्रुत्वे त्वष्टुरपि इन्द्रं प्रति शत्रुत्वं सिद्धम् इति बहुव्रीहिषष्ठीसमासयोर्न कश्चिदर्थभेद इति वाच्यम् ; यतोऽत्र सपत्नपर्यायः न रूढः शत्रुशब्दः, अपि तु क्रियाशब्दो यौगिकः शातयिता शत्रुरिति । तत्र इन्द्रस्य शातयिता भूत्वा वर्धस्व इति षष्ठीसमासार्थः । बहुव्रीहौ तु[2] इन्द्रशातयितृक इति विस्पष्टोऽर्थभेदः । अत्र प्रसज्यप्रतिषेधपक्षे तु ऐकश्रुत्ये कर्तव्ये तदरक्षणमेव स्वरापराधः" इति । जपादिविषये तु यज्ञकर्मण्यपि नैकश्रुत्यम् । "तत्र जपो नाम उपांशुप्रयोगः, यथा जले निमग्नस्य इत्येके । अकरणमन्त्र इत्यन्ये । अनेन इदं कुर्यात् इति विनियुक्तो मन्त्रः करणमन्त्रः" [3]इति पक्षद्वयं [4]हरदत्तभट्टोजियज्वप्रभृतिभिर्दर्शितम् । न्यूङ्खा नाम षोडश ओङ्काराः । तेषु प्रथमसप्तमत्रयोदशास्त्रय उदात्तास्त्रिमात्राश्च । इतरे त्रयोदश अनुदात्ता अर्धौकाराश्च । एतच्च आश्वलायनसूत्रे स्पष्टम् । सामशब्दो गीतिविशेषवाची[5] । तदुक्तम्—'गीतिषु सामाख्या' इति । तत्र 'उपांशुप्रयोगोऽयं जपः' इति पक्षो याज्ञिकानुसारी । अत एव 'इ॒षे त्वा॑' इत्यादिकरणमन्त्रानपि उपांशु प्रयुज्यमानान्[6] ते चातुस्स्वर्येण प्रयुञ्जते । 'अग्नी॑द॒ग्नीन् वि॑हर' इत्यादिसम्प्रैषांस्तु उच्चैः प्रयुज्यमानानेकश्रुत्या । अत एव रुद्रदत्तीयापस्तम्बसूत्रदीपिकायाम् 'ततः सम्प्रेष्यति' इति विहिते

1. ततश्च घ.
2. तु क. नास्ति।
3. अत्र क.
4. हरदत्त- क. नास्ति।
5. -वचनः घ. ङ.
6. प्रयुज्यमानाः क.

'परिस्तृणीत परिधत्ताग्निम्' इति मन्त्रस्य [1]सम्प्रैषे "पक्षे मन्त्र उच्चैरेकश्रुत्या सकृद्भवति परिस्तरणमिेतामेके समामनन्ति' इति । पक्षे तु मन्त्रः करणत्वात् उपांशु चातुस्स्वर्येण प्रत्यग्नि भवति" इत्युक्तम् । 'हविष्कृदेहि इति त्रिरवहन्ति अनवघ्नन् वा हविष्कृतम् आह्वयति[2]' इति सूत्रेऽपि तत्र उक्तम्—चातुस्स्वर्येण उपांशु सकृच्च मन्त्रः करणमन्त्रत्वे, विपर्ययस्तु आह्वानार्थे[3]—इति । यत्तु उपांशुप्रयोगेऽपि याज्यासु याज्ञिकानामकैश्रुत्यकरणम्, तत् [4]आश्वलायनादि-विशेषवचनात् । यथा उच्चैःप्रयोगेऽपि 'आश्रावय' इत्यादौ विशेषवचनात् प्लुत उदात्तः । 'मुखप्रयत्नवान् [5]अनभिव्यक्तशब्द-प्रयोग उपांशुशब्दार्थः' इति 'ध्वानेन उपांशु वा' इत्यत्र दीपिकायाम् । 'करणवदशब्दममनःप्रयोग[6] उपांशु' (तै. प्रा. अ. २३. सू. ६) इति प्रातिशाख्यम् । एतदेव 'ध्वानेन उपांशु वा' इत्यत्र श्रीरामाग्निचिता लिखितम् । श्रीरामाग्निचिदादिमतं तु—अकरणमन्त्रो जपः । तथा च करणमन्त्रे[7] सर्वत्र ऐकश्रुत्यमेव—इति ; यदुक्तं तैः 'देवा गातुविदो गातुम् इति जपित्वा ममाग्नेवर्चो विहवेषु इति आहवनीयमुपसमिन्धे' इत्यत्र 'चातुस्स्वर्येण सर्वे जपाः' अन्ये मन्त्रा एकश्रुत्या ; 'यज्ञकर्मण्यजपन्यूङ्खसामसु' इति स्मृतेः[8]' इति । 'उभावाज्यग्रहाञ्जपतः' इत्यत्र तैरुक्तम्—अध्वर्योरपि चातुस्स्वर्यम् आज्यग्रहणेषु[9] ; 'उभावाज्यग्रहाञ्जपतः' अध्वर्योरपि चातुस्स्वर्यप्राप्त्यर्थत्वात् वचनस्य—इति । 'उभौ कपालविमोचनं[10] जपतः' इत्यत्रापि उक्तम्—'उभौ कपालविमोचनम्' इति सहत्वार्थम् । 'जपतः' इत्युभयोश्चातु-स्स्वर्यार्थम्—इति । अकरणमन्त्रो जप इत्येव ह्येषां ग्रन्थानामाशय

1. सम्प्रैषे मन्त्रः क.
   सम्प्रैषपक्षे घ.
2. ह्वयति घ.
3. आह्वानार्थत्वे घ.
4. आश्वलायनानां
5. अभिव्यक्त- क.
6. -प्रयोगं घ.
7. -मन्त्रेषु घ.
8. श्रुतेः घ.
9. आज्यजपम् ; तेषु क.
10. -विमोचनम् । न तु स्वयं दृष्ट्वा तृतीयाम्....क.

उन्नीयत इति । सुदर्शनाचार्यकृतगृह्यतात्पर्यदर्शने तु 'स्वयं दृष्ट्वा तृतीयां जपेत्' इत्यत्र स्पष्टमेव अभिहितम्—जपश्च[1] सर्वत्र चातुस्स्वर्येण[2], न तु करणमन्त्रादिवत् एकश्रुत्या ; 'यज्ञकर्मणि' इत्यादिवचनात्—इति । अत एव 'उदात्तानुदात्तस्वरितानाम्' इति आश्वलायनसूत्रे[3] षड्गुरुशिष्यकृतवृत्तौ उक्तम्—'व्याकरणेनैव 'यज्ञ-कर्मण्यजपन्यूङ्ख' इत्यैकश्रुत्ये सिद्धेऽपि वचनं सामिधेन्यतिदिष्टे 'आसीनः प्रथमामन्वाह उपांशु' इत्यनुवचने उपांशुत्वाज्जपभूतेऽपि 'अजप' इति निषेधो मा भूदिति । न हि व्याकरणे जपति-चोदित[4] एव जप इत्युच्यते, किं तु सर्व एव उपांशुप्रयोगो मन्त्र इति सर्वं समञ्जसम् ॥

## [४६३] ॥ उच्चैस्तरां वा वषट्कारः ॥
(1—2—35)

उच्चैश्शब्दोऽधिकरणशक्तिप्रधानोऽपि अत्र [5]तद्विशिष्टभवनक्रियायां वर्तते । तेन क्रियाप्रकर्षात् आम्प्रत्ययः । उदात्ततर[6] इति फलितोऽर्थः । वषट्शब्देन च अत्र तत्समानार्थो वौषट्शब्दो लक्ष्यते । द्वावपि हि देवतासम्प्रदानस्य द्योतकौ । वौषडित्येव नोक्तम्, प्रतिपत्तिलाघवेऽपि मात्रागौरवात् । अत एव लिङ्गात् वर्णसमुदायादपि कारप्रत्ययः । तेन एवकार इत्यादिसिद्धिः । यज्ञकर्मणि वौषट्शब्द उदात्ततरो वा भवति । पक्षे ऐकश्रुत्यम् । 'सोमस्याग्ने वीहि वौ३षट्' । 'अत्र द्वयोरप्यचोः उदात्ततरत्वम्' इत्येके । अस्मिन् मते याज्यान्तापेक्षः प्रकर्षः । 'ब्रूहिप्रेष्य' इत्यादिना वौषडादेः प्लुत उदात्तः । 'अन्त्यस्यैवदम्

---

1. जपस्य क.
2. चातुस्स्वर्यमेव क.
3. -सूत्रस्य घ. ङ.
4. जपेति चोदितः· घ. वर्जे
5. तद्विशिष्टभावक्रियायां क.
6. उदात्ततरां क.

उदात्ततरत्वम्' इत्यन्ये । [1]अत्र पक्षे प्लुतोदात्तापेक्षः प्रकर्षः । शेषनिघातस्तु न अत्र भवति, असिद्धत्वात् । 'स्वार्थिकस्तरप् । उदात्तत्वमेव विधीयते' इत्यन्ये । अत्र पक्षे प्रथमस्य उदात्तः प्लुतः सिद्ध इति द्वितीयस्यैवेदं [2]विधानमिति हरदत्तः । "तरबर्थ-प्रकर्षविवक्षापक्ष एव प्रबलः ; 'वषट्कारान्त्यः सर्वत्र उच्चैस्तरां बलीयान् याज्यायाः' इति आश्वलायनसूत्रात्" इति कौस्तुभे । अन्यत्तु मतम्—'सूत्रे वषट्कारशब्दो न कारप्रत्ययान्तः ; किं तु घञन्तेन कारशब्देन वषट्शब्दस्य समासे निष्पन्नः । वषट्क्रियते येन [3]वषट्कारः । अयं च वषट्कारशब्दः 'वषट्कार मा मां[4] प्रमृक्षः' इति मन्त्रे 'त्रयो वै वषट्काराः' इति ब्राह्मणे 'वषट्कारान्त्यः[5] सर्वत्र' इति सूत्रे च वौषट्शब्दे[6] निरूढ इति । अत्र मते 'त्र्यक्षरो वषट्कारः' इत्यादौ वषट्कारशब्दस्य[7] अन्तोदात्तत्वमुपपन्नम् । कारप्रत्ययान्तत्वे तु प्रत्ययस्वरेण मध्योदात्तत्वं प्रसज्येत । वर्णसमुदायादपि कारप्रत्ययसिद्धिस्तु 'वर्णात् कारः' इत्यत्र बहुलग्रहणानुषङ्गात्, एवकारो वकार इति भाष्यप्रयोगाद्वा । केचित्तु—वौषट्शब्द एव न वषट्कारवाच्यः[8]. किं तु 'वषडित्येके समामनन्ति'[9] 'वौषडित्येके' 'वाषडित्येके' 'वाक्षडित्येके' इति आपस्तम्बसूत्रे प्रसिद्धा वषडादयोऽपि[10] ; 'वषट्कृते जुहोति', 'वषट्कारेण वाहुतिषु[11] सम्पातयेत्[12]', 'वषट्कारश्च [13]दर्विहोमानाम्' इति आपस्तम्बसूत्रेषु तथैव प्रसिद्धेः । 'ब्रूहिप्रेष्य' इति सूत्रे 'वौषट्शब्दो

---

1. अत्र पक्षे घ. नास्ति ।
2. विधानम् घ. नास्ति ।
3. स वषट्कारः घ.
4. वषट्कारं मां प्रमृक्षः घ.
5. वषट्कारोऽन्त्यः क. ख. घ.
6. वषट्शब्दे घ.
7. -शब्दस्य घ. नास्ति ।
8. वषट्कारः घ.
9. समामनन्ति इत्याद्यापस्तम्बसूत्र-प्रसिद्धवषडादयः घ.
10. षट् घ. अधिकम् ।
11. आहुतिं घ.
12. सम्पादयेत् क.
13. अंदर्वीहोमानां क.

वषट्कारोपलक्षणार्थः, तेन वषडित्यादेः षड्विधस्यापि वषट्कारस्य प्लुतः' इति हरदत्तोक्तेश्च । एवं च प्लुतवत् उदात्ततरत्वमपि षड्विधस्यापि वषट्कारस्य—इति ॥

## [४६४] ॥ विभाषा छन्दसि ॥
(1—2—36)

अत्र वृत्तिकृता 'छन्दस्येकश्रुतिर्वा' इति व्याख्याय[1] 'इषे त्वोर्जे त्वा' 'अग्निमीले पुरोहितम्' इत्यादावपि [2]एकश्रुतिः वैकल्पिकी उदाहृता । हरदत्तोऽपि तदेवान्वसरत् । तत्सकलाध्यापकसम्प्रदायविरुद्धमिति[3] मत्वा स्वरमञ्जर्याम्—व्यवस्थितविभाषेयम् ; तथा च बह्वृचब्राह्मणे ऐकश्रुत्यम् । तत्संहितायां चातुस्स्वर्यमेव । एवं शाखान्तरेऽपि यथासम्प्रदायं व्यवस्था—इति दर्शितम् । कौस्तुभेऽपि एतदेव अनुसृतम् । यजुष्यपि संहितादौ त्रैस्वर्यमेव । 'महानाम्नीर्महामानाः' 'आरोगो भ्राजः पटरः पतङ्गः' [4]इत्यादौ आरण्यकवाक्ये ऐकश्रुत्यमेवेति व्यवस्था दृश्यते । अत एव 'महानाम्नीः' इत्यत्र वेदभाष्यम्—अत्र केषुचित् वाक्येषु ऐकश्रुत्यं दृश्यते । केषुचित् त्रैस्वर्यमेव । तत्र 'विभाषा छन्दसि' इत्यस्य व्यवस्थितविषयत्वात् एवं[5] भवति' इति । अथ 'वा' इति प्रकृते विभाषाग्रहणं किमर्थम् ? 'यज्ञकर्मणि' इत्यस्य निवृत्त्यर्थम्' इति वृत्तिकारः । नन्वत्र 'यज्ञकर्मणि' इत्यनुवर्तते यदि, तर्हि 'यज्ञकर्मण्यजप' इति विधिर्निर्विषयः स्यात् । न च जपादिषु सावकाशस्य अस्य विधेः पूर्वविधिरपवाद इति वाच्यम् ; एवं

---

1. वा भवति' इति सूत्रम् व्याख्याय क.
2. पाक्षिकैकश्रुत्यमुदाहृतम् क.
3. -सिद्धमिति ख. घ. ङ.
4. इत्याद्यारण्यक- घ.
5. एव घ.

हि अत्रैव जपादिग्रहणेन इष्टसिद्धौ नञ्ग्रहणस्य [1]छन्दोग्रहणस्य च वैयर्थ्यापत्तेः । अतः सामर्थ्यादेव 'यज्ञकर्मणि' इत्यस्य निवृत्तिः सिद्धा इति किं तदर्थेन विभाषाग्रहणेनेति[2] । अत्र हरदत्तः—प्रसज्यप्रतिषेधपक्षे ऊहादिषु पूर्वयोगस्य सावकाशत्वात् अत्र 'यज्ञकर्मणि' इत्यनुवर्तेतैव[3], यदि विभाषाग्रहणं न क्रियते । न चैवं सत्यपि विभाषाग्रहणे ऊहादिषु सावकाशं नित्यं विधिं बाधित्वा यज्ञकर्मणि छन्दश्शब्देषु अयमेव[4] विकल्पः परत्वात् स्यादिति वाच्यम्; 'यज्ञकर्मणि' इत्यत्र कर्मग्रहणस्य यज्ञानुष्ठाने सर्वत्र नित्यो विधिर्यथा स्यात् इत्येवमर्थत्वात् । पूर्वत्र जपादि-पर्युदासान्मन्त्राणामेव ऐकश्रुत्यविधिरिति पक्षे सामर्थ्यादेव 'यज्ञकर्मणि' इत्यस्य निवृत्तिसिद्धेः [5]विभाषाग्रहणवैयर्थ्यमेव—इति । अत्र कौस्तुभे कथितम्—"हरदत्तदर्शितावश्यककर्मग्रहणसामर्थ्यादेव पूर्वयोगस्य यज्ञकर्मविषयत्वम् अस्य तदतिरिक्तविषयत्वं च सिद्धम् इति विभाषाग्रहणं व्यर्थमेव । तस्मात् तन्त्रावृत्त्यादिना[6] 'अच्छन्दसि' इति नञ्प्रश्लेषाद्भाषायामपि ऐच्छिकमैकश्रुत्यविधिं सूचयितुं 'वा' इति प्रकृते विभाषाग्रहणम् । न चैवं छन्दोग्रहणमफलम्; छन्दसि व्यवस्थितः, लोके तु ऐच्छिक इति विकल्पयोर्वैषम्यं द्योतयितुं तत्करणात् । छन्दस्यपि 'इ॒षे त्वा॑' इत्यादौ ऐच्छिकमैकश्रुत्यं वदतो वृत्तिकृत एव अत्र छन्दोग्रहणवैयर्थ्यम् । न च लोके ऐकश्रुत्यविकल्पस्य वृत्तिकृता अनुक्तत्वात् असाम्प्रदायिकत्वं शङ्क्यम्; भाष्यादिसम्मतत्वात् तद्विकल्पस्य । तथा हि—दाण्डिनायनसूत्रे ऐक्ष्वाकशब्दः पठ्यते । इक्ष्वाकुशब्दात् अपत्येऽर्थे 'जनपदशब्दात् क्षत्रियादञ्' इत्यञि, भवार्थे 'कोपधादण्' इत्यणि च सति

1. छन्दोग्रहणस्य च घ. नास्ति ।
2. इति घ. नास्ति ।
3. अनुवर्तेत एव घ.
4. एव घ. नास्ति ।
5. -ग्रहणस्य वैयर्थ्यमेवेति घ.
6. तन्त्रावृत्त्यादिना क.

निपातनात् उकारलोपे 'ऐक्ष्वाकः' इति रूपमिष्यते । तत्र अञन्त आद्युदात्तः, अणन्तस्तु अन्तोदात्तः । तत्र अन्यतरस्य पाठे स्वरभेदात् इतरस्य अग्रहणमाशङ्क्य परिहृतं भाष्ये—[1]स्वरसर्वनामैकश्रुत्यपाठात् उभयोर्ग्रहणं सिद्धम्—इति । "श्वेतो धावति' इत्यादिकं वाक्यम्' इति पस्पशान्ते भाष्यमपि अत्र लिङ्गम् । 'श्वा, इतः' इति पदद्वयपक्षे हि 'श्वेतः' इति द्व्युदात्तम्; 'इतः' इत्यस्य 'ऊदिदम्' इत्यन्तोदात्तत्वात् । ऐकपद्ये तु अन्तोदात्तत्वमिति कथं स्वरानुरोधेन तन्त्रं स्यात् । वृत्तिकृतोऽपि एतत् संमतम्[2]; 'श्वेतो धावति' इति वाक्यस्य वृत्तावपि तत्र तत्र उदाहृतत्वात् । अत एव अभियुक्तानां विरुद्धस्वरकतत्पुरुषबहुव्रीह्याद्याश्रयणेन श्लिष्टकाव्यादिनिर्माणमपि सङ्गच्छते । अत एव काव्यप्रकाशेऽपि —वेद इव लोके स्वरो न विशेषाध्यवसायहेतुः—इत्युक्तम् । 'झल्युपोत्तमम्' 'विभाषा भाषायाम्' इत्यादिस्वरसूत्राणि तु त्रैस्वर्येण प्रक्रमे पाक्षिकानुदात्तत्वलाभाय" इति[3] । अत्र वदन्ति—न तावत् 'ऐक्ष्वाकशब्दः सूत्रे एकश्रुत्या पठ्यते' इति [4]भाष्यम् लोकेऽपि ऐकश्रुत्यविकल्पलिङ्गम्; 'छन्दोवत् सूत्राणि[5] भवन्ति' इति इष्ट्यभिप्रायेणापि तदुपपत्तेः । अत एव अत्र [6]सूत्रे [7]स्वरकौमुद्यादौ उक्तम्—एवम्[8] 'छन्दोवत् सूत्राणि' इत्येकश्रुत्या सूत्रपाठस्त्रैस्वर्येण वेति पक्षद्वयमपि तत्र तत्र उपन्यस्यते' इति । सूत्रे स्वरस्य छान्दसत्वादेव [9]एकश्रुत्या सूत्रपाठेऽपि क्वचित् स्वरान्तरबाधनाय आद्युदात्तादिकरणं सङ्गच्छते । अत एव 'अवङ् स्फोटायनस्य' इत्यत्र कैयटः—एकश्रुत्या सूत्रपाठे यत्नेन आद्युदात्तोच्चारणमन्तोदात्त-

---

1. सर्वनाम्नः एक घ.
2. वृत्तिकृताप्येतत्समर्थितम् घ.
3. अनुदात्तानीति ङ.
4. भाष्योक्तिर्न लोके क.
5. सूत्राणीति भाष्याभिप्रायेणापि घ.
6. सूत्रे क. नास्ति ।
7. स्वरकौमुद्यामुक्तम् क.
8. एवं च घ.
9. ऐकश्रुत्येन घ.

बाधनार्थं विज्ञायते—इति । यदपि "श्वेतो धावति' इति द्व्यर्थकं भाष्यं[1] लिङ्गम्' इति, तदपि चिन्त्यम् ; एक एव हि भाष्योच्चारितस्य 'श्वेतो धावति' इति वाक्यस्य अर्थः । अर्थान्तरबोधस्तु आनुपूर्वीसाजात्येन स्मृतात् वाक्यान्तरादेव । एकमिदं वाक्यं द्व्यर्थकमिति व्यवहारस्तु सारूप्यनिमित्तकाभेदाध्यवसायनिबन्धनः । इत्थमेव हि 'अर्थभेदेन शब्दभेदः' इति पक्षे 'ग्रामशब्दोऽयं बह्वर्थः' इति भाष्योपपत्तिः कैयटेन प्रदर्शिता । एवमेव हि 'नालीकासनमीश्वरः शिखरिणाम्' इत्यभियुक्तप्रयोगे नालीकासनशब्दस्य साधुत्वं निर्वाह्यम् । अन्यथा लोकेऽपि पाक्षिकम् ऐकश्रुत्यमिति कल्पनया स्वरकृतासाधुत्वोद्धारेऽपि बहुव्रीहितत्पुरुषसंज्ञाद्वयसमावेशनिबन्धनं असाधुत्वं कथमुद्धर्तव्यम् ? एकसंज्ञाधिकारेण संज्ञाद्वयसमावेशायोगात् । अत एव शिष्टानां श्लिष्टकाव्यादिकमपि[2] सङ्गतम् ; 'चेतो न लङ्कामयते' इत्यादौ लळयोरेकत्वस्मरणादिना कथञ्चित् स्मृतेन शब्दान्तरेण अर्थबोधेऽपि श्लेषकाव्यत्वस्य[3] कविसमयसिद्धत्वात् । अपि च 'श्वेतो धावति' इति[4] भाष्यात् लोके पाक्षिकं ऐकश्रुत्यमिति कल्पने किं नियामकम् ? तत्र पाक्षिकः स्वरानुरोध इत्यपि कल्पनसम्भवात् । साम्प्रदायिकवचनाभावस्य [5]उभयत्र तौल्यात् । न च 'वा' इति प्रकृते विभाषाग्रहणात् 'अच्छन्दसि' इति प्रश्लेषात् लोकेऽपि ऐकश्रुत्यलाभः ; एवं सति च्छन्दोग्रहणस्य, तन्त्राद्याश्रयणस्य च वैयर्थ्यात् । वेदे व्यवस्थितो विकल्पः ; लोके तु ऐच्छिक इति विकल्पवैषम्यद्योतनाय[6] तत् इति चेत्—वैयर्थ्यमेवेदं[7] पर्यायान्तरेण कथितम् ; विकल्पान्तरेष्विव

---

1. वाक्यं ङ.
2. -काव्यादिनिर्माणमपि क.
3. श्लेषवाक्यत्वस्य क.
4. इत्यादि घ.
5. तत्र स्वराद्याश्रयणस्य च वैयर्थ्यात् । वेदे व्यवस्थितो घ.
6. विकल्पवैषम्यं द्योतयितुं ङ.
7. मेव पर्याया- घ.

लौकिकवैदिकप्रयोगव्यवस्थाव्यवस्थाभ्यामेव तत्सिद्धेः । अत एव 'नित्यं छन्दसि' इत्यादिसूत्रवैयर्थ्यं मनोरमादौ उक्तम् । यत्तु काव्यप्रकाशे—वेद इव लोके स्वरो न विशेषाध्यवसायहेतुः—इत्युक्तम्, तल्लोके त्रैस्वर्य-नियमेऽप्युपपन्नम् ; अनेन स्वरेण कविना प्रयुक्तमिदं [1]पदमिति इदानीन्तनैः[2] दुर्ज्ञानत्वात् इत्याशयात् । न हि वेद इव काव्यादौ अध्यापकाध्येतृपरम्परया प्रातिशाख्यादिलक्षणेन वा स्वराप्रच्युतिः अस्ति । व्याकरणे च[3] 'एकाचो द्वे प्रथमस्य' इत्यत्र 'एकाचः' इति बहुव्रीहिस्तत्पुरुषो वेति निर्णये स्वरो न हेतुरिति कैयटः ; यदाह—स्वरस्य दुरवधारणत्वात् ऐकश्रुत्या वा सूत्रपाठात् स्वरानिश्चयात् प्रश्नः—इति ॥

## [४६५] ॥ न सुब्रह्मण्यायां स्वरितस्य तूदात्तः ॥
(1—2—37)

सुब्रह्मण्याख्ये निगदे 'यज्ञकर्मणि' इति[4] 'विभाषा छन्दसि' इति च प्राप्ता एकश्रुतिर्न स्यात्, तत्रत्यस्य स्वरितस्य च उदात्तः स्यात् । 'सुब्रह्मण्योम्' । 'इन्द्रागच्छ हरिव आगच्छ मेधातिथेः' । 'मेषवृषणश्वस्य मेने' । 'गौरावस्कन्दिन्नहल्यायै जार' । 'कौशिकब्राह्मण गौतम ब्रुवाण' । 'श्वः सुत्यामागच्छ मघवन्' । अयं च निगदः सुब्रह्मण्याशब्दवत्त्वात् लक्षणया सुब्रह्मण्याशब्दवाच्यः । सुब्रह्मणि साधुः सुब्रह्मण्यः । 'तत्र साधुः' इति यत् । तित्स्वरितः । ततः टापा सह एकादेशः आन्तर्यात् स्वरितः । तत ओमृशब्देन निपातेन 'ओमाङोश्च'

---

1. पदं घ. नास्ति ।
2. तदानीन्तनैः क.
3. अपि घ.
4. च घ.

इति पररूपम् । तत्र[1] उदात्तस्वरितयोः स्थाने भवन् आन्तर्यात् स्वरितः । न च 'एकादेश उदात्तेनोदात्तः' इत्युदात्तत्वं शङ्क्यम् ; तत्र 'अनुदात्तस्य' इत्यनुवृत्तेः[2] उक्तत्वेन उदात्तानुदात्तयोरेकादेश [3]एव तत्प्रवृत्तेः । तस्य 'स्वरितस्य तूदात्तः' इत्युदात्तत्वमिति कैयटहरदत्तादयः। शिष्टं तु 'अनुदात्तं पदम्' इत्यनुदात्तम् । 'इन्द्र' इत्यामन्त्रितमाद्युदात्तम् । आष्टमिको निघातस्तु भिन्नवाक्यत्वान्न भवति । [4]द्वितीयो वर्णः अनुदात्तः 'उदात्तादनुदात्तस्य' इति स्वरितः । तस्य अनेन उदात्तत्वम् । न च अस्मिन् कर्तव्ये स्वरितस्य असिद्धत्वम् ; नवसूत्र्युत्कर्षेण तदभावात् । अत एव अस्मिन्नुदात्ते शेषनिघातोऽपि[5] न ; 'अनुदात्तं पदम्' [6]इत्यस्मिन् कर्तव्येऽस्य असिद्धत्वात् । [7]एवमिन्द्रशब्दे द्वावुदात्तौ । निपातत्वादाङाद्युदात्तः । 'गच्छ' इति 'तिङ्ङतिङः[8]' इति[9] निघातः । 'उदात्तादनुदात्तस्य' इति गकाराकारस्य स्वरितत्वे तस्य अनेन उदात्तत्वम् । छकाराकारस्तु[10] अनुदात्त एव । न च तस्यापि 'उदात्तादनुदात्तस्य' इति [11]स्वरितत्वेऽनेन उदात्तत्वं शङ्क्यम् ; 'उदात्तादनुदात्तस्य' इति [12]प्रकरणोत्कर्षेण प्रकृतसूत्रोदात्तस्य असिद्धत्वात् । यत्तु स्वरमञ्जर्याम्—प्रकृतसूत्रोदात्तात् परस्य स्वरितत्वम्, तस्य उदात्तत्वं च न भवति ; 'न सुब्रह्मण्यायाम् इति निषेधसामर्थ्यात् । 'स्वरितस्य तु' इति ग्रहणसामर्थ्याच्च । अन्यथा 'सुब्रह्मण्यायामुदात्तः[13]'

---

1. पररूपकादेशः । स चोदात्त- क. ङ.
2. इत्यनुवृत्तत्वेन क.
3. एव घ. नास्ति ।
4. द्वितीयस्यानुदात्तस्य घ.
5. अपि क. नास्ति ।
6. इति निघाते कार्येऽस्य घ.
7. एवम् घ. नास्ति ।
8. इति तिङन्तस्य निघातः घ.
9. स्वरितस्य गकाराकारस्यानेन स्वर उदात्तः घ.
10. तु घ. नास्ति ।
11. स्वरितत्वमनेनोदात्तत्वं च शङ्क्यम् क.
12. कर्तव्ये प्रकरणोत्कर्षेण क.
13. उदात्तः ङ. नास्ति ।

इत्येव ब्रूयात्' इति, तत् नवसूत्र्युत्कर्षापरिज्ञानविजृम्भितम्। अपि च सामर्थ्यमपि उक्तमसिद्धम्; 'सुब्रह्मण्योम्' इत्यत्र ओकारव्यतिरिक्तानाम् 'इन्द्रागच्छ' इत्यादिवाक्यान्तानाम् अचां च अनुदात्तत्वार्थं स्वरितग्रहणम्, 'न सुब्रह्मण्यायाम्' इति निषेधश्च इत्युपपत्तेः। वाक्यान्तानाम् अचाम् 'उदात्तादनुदात्तस्य' इति न स्वरितत्वम्; 'नोदात्तस्वरितोदयम्' इति निषेधात्। 'सुब्रह्मण्याया-मुदात्तः' इत्युक्तौ हि सर्वेषामुदात्तत्वप्रसङ्गः। हरिशब्दात् मतुपि सम्बुद्धौ 'मतुवसोः' इति रुत्वम्। 'छन्दसीरः' इति वत्वम्[1]। 'हरिवः'। अत्रापि पूर्ववत्[2] द्वयोरुदात्तत्वे वकाराकारोऽनुदात्तः। 'आगच्छ' इत्यत्रापि पूर्ववद्द्वावुदात्तौ। छोऽनुदात्तः। 'मेधातिथेः' इति षष्ठ्यन्तस्य पराङ्गवद्भावात् 'मेधातिथेर्मेष' इति वाक्ये 'आमन्त्रितस्य च' इत्यादिरुदात्तः[3]। [4]धाशब्दस्य 'उदात्तात्' इति स्वरितत्वे अनेन उदात्तत्वम्। ततश्चत्वारोऽनुदात्ताः। वृषाणोऽश्वा यस्य सः वृषणश्वः। 'वृषण्वस्वश्वयोः' इति भत्वान्नलोपाभावः णत्वं च। तस्य पराङ्गवद्भावात् 'वृषणश्वस्य मेने' इति वाक्ये पूर्ववत् द्वावुदात्तौ[5]। इतरे पञ्च अनुदात्ताः। एवम् 'गौरावस्कन्दिन्नहल्यायै जार' 'कौशिकब्राह्मण गौतम ब्रुवाण' इति वाक्यचतुष्टयेऽपि द्वौ[6] द्वावादित उदात्तौ। इतरेऽनुदात्ताः। श्वश्शब्द उदात्तः; निपातत्वात्। सुत्याशब्दोऽन्तोदात्तः; 'संज्ञायां समजनिषद' इति क्यब्विधौ 'उदात्तः' इत्यनुवृत्तेः। 'श्वस्सुत्याम्' इत्यस्य स्थाने 'व्यहे सुत्याम्' 'त्र्यहे सुत्याम्' इत्यहर्भेदे पठन्ति। तत्र व्यहत्र्यहशब्दयोः टजन्ततया अन्त उदात्तः।

---

1. मतुपो मस्य वः क.
2. पूर्ववत् घ. नास्ति।
3. आमन्त्रिताद्युदात्तः क.
4. तस्य 'उदात्तादनुदात्तस्य' इति स्वरितस्य अनेन घ.
5. ततश्चत्वारोऽनुदात्ताः घ. अधिकम्।
6. द्वौ क. नास्ति।

'आगच्छ' इति पूर्ववत् स्वरः । [1]मघवन् । पदात् परत्वादामन्त्रित-स्वरो निघातः । यत्तु 'सुब्रह्मण्याशब्दस्य टेरोमित्यादेशः[2] । स च आन्तर्यात् स्वरितः । तस्य अनेन उदात्तत्वम्' इति स्वरमञ्जर्यामुक्तम्, तदयुक्तम् ; निपातेन ओम्शब्देन 'ओमाङोश्च' इति पररूपमिति प्रागुक्तकैयटादिविरोधात् । टेः प्रणवविधायकशास्त्राभावाच्च । न च 'प्रणवष्टेः' इति [3]सूत्रं तथा ; तस्य सपादबद्धमन्त्रविषयत्वस्य प्राग्दर्शितत्वेन[4] प्रकृते यजुषि तदप्रवृत्तेः । 'प्रणवष्टेः' इत्यस्य [5]यज्ञकर्मविषयत्वात्, 'ये यज्ञकर्मणि' इत्यतः 'यज्ञकर्मणि' इत्यस्य तत्रानुवृत्तेः । 'सुब्रह्मण्योम्' इति प्रणवस्य स्वाध्यायकालेऽपि श्रवणात् । तत्र 'उदात्तः' इत्यनुवृत्त्यैव तस्योदात्तत्वे 'स च आन्तर्यात् स्वरितः तस्य अनेन उदात्तत्वम्' इत्यस्य असङ्गतत्वप्रसङ्गाच्च[6] इति ।

अत्र वार्त्तिकानि—

॥ असावित्यन्तः ॥

॥ अमुष्येत्यन्तः ॥

'असौ' 'अमुष्य' इति प्रथमान्तं षष्ठ्यन्तं च उपलक्ष्यते । अत्र निगदे अनयोरन्त उदात्तः । 'गार्ग्यो यजते' । 'दाक्षेः पिता यजते' । ञित्स्वरेण आद्युदात्तत्वं प्राप्तम् ॥

॥ स्यान्तस्योपोत्तमं च ॥

चादन्तः । तेन द्वावुदात्तौ । 'गार्ग्यस्य पिता यजते' ॥

---

1. मघवन्...निघातः घ. नास्ति ।
2. टेरित्ययमादेशः घ.
3. सूत्रम् क. नास्ति ।
4. दर्शितत्वात् क.
5. यज्ञ...प्रणवस्य घ. नास्ति ।
6. असङ्गतिप्रसङ्गाच्च घ.

